श्रीगणेशायनमः ॥ श्रीरामचंद्रायनमः ॥ बिसेनवंशजलधौपूर्णःशीतकरोपरः प्रजाल्हादकरोविष्णुभूँषण*ःकौस्तुभोपरः ॥ १ ॥ नाम्नाहिम्मति वर्माभूद्धैर्येणहिमवानिव रूपेणजितकंदर्पःक्षमायांक्षमयासमः ॥ २ ॥ पराक्रमेऽर्जुनःसाक्षात्तेजसाभानुमानिव भूपानांभ्रष्टराज्यानांपुनाराज्य प्रदायकः ॥ ३ ॥ यंदृष्ट्वाऽर्थिसमूहस्यजातेयंनिश्चितामतिः हित्वापशुत्वंस्त्रीत्वंचकामधुग्भूमिमागता ॥ ४ ॥ तस्माज्जातोरामदत्तश्चंद्राच्चंद्रइवापरः मित्राणांचरिपूणांचमाँ*नदःप्रथितःप्रभुः ॥ ५ ॥ आसमुद्रंक्षमादेवीयत्कीर्त्याधवलीकृता हिमाचलेनसमतांनीताःसप्तापिचाचलाः ॥ ६ ॥ यद्दानांबुप्र वाहेणमेघोदस्यानपेक्षकाः कृषीवलाःप्रतिदिशंप्रहृष्यंतिदिनेदिने ॥ ७ ॥ तेनश्रीरामभक्तेनसर्वविद्याप्रजानता शृंगवेरपुरेशेनरिपुकक्षदवाग्निना

## अप्रमेयत्रयातीतनिर्मलज्ञानमूर्त्तये ॥ मनोगिरांविदूरायदक्षिणामूर्त्तयेनमः ॥ १ ॥

॥ ८ ॥ अर्थिनांकल्पवृक्षेणविद्वज्जनसभासदा भट्टनागेशशिष्येणबध्यतेरामवर्मणा ॥ ९ ॥ प्रणम्यजानकीजानिरामंकामातिसुंदरं चापबा णधरंदेवंमायामानुषविग्रहं ॥ १० ॥ सेतुःपरोपकृतयेऽध्यात्मरामायणांबुधौ सुशब्दमणिभिःश्लक्ष्णैःप्रीयतांतेनराघवः ॥ ११ ॥ श्रीमतावा ल्मीकिनालोकोद्धारायचकृतेरामचरित्रवर्णनरूपेरामायणाख्यकाव्येभगवतोलीलावतारस्यरावणादीनांदृढमनुष्यत्वबुद्धयेनटवदात्मस्वरूप गोपनेनव्यवहरतःस्वरूपंवाल्मीकिनागुप्तमेवतत्रतत्रनिरूपितं तदेतत्परमदयालुर्भगवान्साक्षाद्वेदव्यासोलोकानांस्फुटंबोधयितुंनारदब्रह्मसंवा दरूपेणब्रह्मांडपुराणेऽध्यात्मरामायणसंहितांचक्रे तस्याश्चवाल्मीकिसूचितार्थज्ञापकत्वंबोधयितुंवाल्मीकिरामायणवदेवकांडसर्गोपेतां कृतवान् तांयथामतिस्वमतिदोषशुद्धयेव्याचक्ष्महे तामेतांसंहितांनैमिषेऽरण्येनैमिषीयानृषीनृश्रावयतिस्मसूतइत्याह अप्रमेयेति अप्रमेय त्रयंमायाजीवेश्वररूपंतदतीतस्ततोऽधिकश्चासौनिर्मलंयज्ज्ञानंतन्मूर्तिस्तत्स्वरूपस्तस्मैनमःमनइति वाङ्मनसामगोचरायेत्यर्थः ॥ १ ॥

* अत्रविष्णुभूषणत्वेनपरमभक्ततयासदाभगवद्धृदयारूढताऽस्यध्वनिता * मानदोमानदातामानखंडकश्च

कदाचिदिति योगीयोगपक्वकषायतयाविदितवेदितव्यः तादृशस्यपर्यटनंविफलंतत्राह परेति परेषांतत्तल्लोकवासिनांधर्मज्ञानाद्युपदेशेनयोऽनुग्रहस्तदिच्छयेत्यर्थः सत्यलोकंब्रह्मलोकं ॥ २ ॥ तत्रसत्यलोके मुनिपुंगवोनारदउच्यमानगुणंचतुर्मुखंदृष्ट्वातुष्टावेतिअग्रिमतृतीयश्लोकस्थेनसंबंधः मूर्तिमद्भिर्गृहीतविग्रहैः छंदोभिर्वेदैःपरितोवेष्टितं तत्तद्वेदाध्येतृमुखसंमुखेतत्तद्वेदमूर्त्यवस्थानादितिभावः बालार्कप्रभयाबालार्कसदृश्यास्वप्रभया ॥ ३ ॥ सर्वार्थगोचरज्ञानंअतीतानागतवर्त्तमानरूपायेसर्वेऽर्थास्तद्विषयज्ञानयुक्तं बहुव्रीहिसमासः अतएवतत्तज्ज्ञानरूपयासरस्वत्याख्यशक्त्यायुक्तं ॥ ४ ॥ जगन्नाथंजगत्स्रष्टारं भक्ताभीष्टफलप्रदत्वेनप्रश्नयोग्यतासूचनं ॥ ५ ॥ स्वयंभूरित्यनेनानावृतज्ञान

सूतउवाच कदाचिन्नारदोयोगीपरानुग्रहवांछया॥ पर्यटन्सकलाँल्लोकान्सत्यलोकमुपागमत् ॥ २ ॥ तत्र दृष्ट्वामूर्तिमद्भिश्छंदोभिःपरिवेष्टितं ॥ बालार्कप्रभयासम्यक्भासयंतंसभागृहं॥ ३ ॥ मार्कंडेयादिमुनिभिःस्तूयमानंमुहुर्मुहुः॥ सर्वार्थगोचरज्ञानंसरस्वत्यासमन्वितं ॥ ४ ॥ चतुर्मुखंजगन्नाथंभक्ताभीष्टफलप्रदं ॥ प्रणम्य दंडवद्भक्त्यातुष्टावमुनिपुंगवः ॥५॥ संतुष्टस्तंमुनिंप्राहस्वयंभूर्वैष्णवोत्तमं ॥ किंप्रष्टुकामस्त्वमसितद्वदिष्यामिते मुने॥ ६ ॥इत्याकर्ण्यवचस्तस्यमुनिर्ब्रह्माणमब्रवीत् ॥ त्वत्तःश्रुतंमयासर्वंपूर्वमेवशुभाशुभं ॥ ७ ॥इदानीमेकमेवास्तिश्रोतव्यंसुरसत्तम ॥ तद्रहस्यमपिब्रूहियदितेऽनुग्रहोमयि ॥ ८ ॥ प्राप्तेकलियुगेघोरेनराःपुण्यविवर्जिताः॥ दुराचाररताःसर्वेसत्यवार्त्तापराङ्मुखाः॥ ९ ॥

त्वंसूचितं वैष्णवोत्तमं सर्वभूतेषुयःपश्येद्भगवद्भावमात्मनः भूतानिभगवत्यात्मन्येषभागवतोत्तमइत्युक्तलक्षणं तत्पृष्टंवस्त्वित्यर्थः ॥ ६ ॥ शुभं विहितं अशुभंनिषिद्धं ॥ ७ ॥ एकमेवपुण्यहीनानांपरलोकप्राप्त्युपायरूपं तद्रहस्यमपिमत्पृष्टंब्रूहि अनुग्रहःपरोपकारकरणजपुण्येनायंपूज्यतामित्येवंरूपादयायदिमयीत्यर्थः ॥ ८ ॥ दुराचाररताःनिषिद्धकर्मनिरताः तस्यैवप्रपंचः सत्यवार्त्तेति नानृतंवदेदितिनिषिद्धानृतभाषणशीलाइतियावत् ॥ ९ ॥

॥१०॥सर्वपापस्यमूलकारणमाह देहात्मदृष्टयइति देहेएवात्मदृष्टिर्येषांतेइत्यर्थः एवंचदेहनाशेनात्मनाशात्पापपुण्यफलभोक्तुरभावात्तथादृ
ष्टीनांविहिताकरणनिषिद्धकरणयोःप्रवृत्तिरितिभावः स्थूलोऽहंगौरोऽहमितिप्रतीतिस्तुशुक्तौरजतप्रतीतिवद्भ्रमइतितत्त्वं देहस्यपरिणामित्वंतुप्र
तिक्षणोपचयापचयाभ्यांप्रत्यक्षसिद्धमात्मनोऽविनाशित्वंतुअविनाशीवारेयमात्मेतिश्रुतिसिद्धं अतएवनास्तिकानास्तिपरलोकइतिबुद्धिमंतः
पशुबुद्धयःआहारविहारमात्रपराविधिनिषेधानभिज्ञाश्चेत्यर्थः स्त्रीदेवाःस्त्रीजिताइत्यर्थः तेषामन्नस्याभोज्यत्वंचस्मृतिषूक्तं कामकिंकराःका
म्यकर्ममात्रपराः॥११॥ लोभरूपग्रहेणभूतादिनाग्रस्ताः वेदविक्रयजीविनःभृतकाध्यापकाः धनार्जनफलकतयाभ्यस्तायाविद्यातन्मदेनतद्ग

परापवादनिरताःपरद्रव्याभिलाषिणः ॥ परस्त्रीसक्तमनसःपरहिंसापरायणाः ॥ १० ॥ देहात्मदृष्टयोमूढानास्ति
काःपशुबुद्धयः॥ मातापितृकृतद्वेषाःस्त्रीदेवाःकामकिंकराः ॥ ११ ॥ विप्रालोभग्रहग्रस्तावेदविक्रयजीविनः ॥
धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः॥ १२॥ त्यक्तस्वजातिकर्माणःप्रायशःपरवंचकाः ॥ क्षत्रियाश्चतथा
वैश्याःस्वधर्मत्यागशीलिनः ॥ १३ ॥ तद्वच्छूद्राश्चयेकेचिद्ब्राह्मणाचारतत्पराः॥ स्त्रियश्चप्रायशोभ्रष्टाभर्त्रवज्ञान
निर्भयाः॥ १४॥ श्वशुरद्रोहकारिण्योभविष्यंतिनसंशयः॥ एतेषांनष्टबुद्धीनांपरलोकःकथंभवेत्॥ १५ ॥ इति
चिंताकुलंचित्तंजायतेममसंततं॥ लघूपायेनयेनैषांपरलोकगतिर्भवेत् ॥ १६॥

र्वेणविमोहिताःइतरावज्ञाशीलाः ॥ १२ ॥ त्यक्तेति अत्रविप्राइत्यनुवर्त्तते त्यक्तंस्वजातिकर्मब्राह्मणजात्युचितंकर्माध्ययनादियैरतःपरवंच
काः परवंचनायैवधर्मानुष्ठानवंतः क्षत्रियादयोऽप्येवमेवेत्याह क्षत्रियाइति स्वधर्मत्यागरूपंशीलंयेषांनतुकदाचिदपिधर्मशीलाइत्यर्थः ॥
॥ १३ ॥ ब्राह्मणाचारतत्पराइत्यनेनधर्मसंकरोदर्शितः स्त्रियश्चेत्यनेनवर्णसंकरोदर्शितः भर्त्तुरवज्ञानेनिर्भयानिःशंकाः भर्तृवज्ञानेतिपाठेवष्टि
भागुरिरित्यनेनावस्यादेरकारस्यलोपः ॥ १४ ॥ १५ ॥ परलोकगतिःभूर्लोकगतिः भूर्लोकोर्ध्वभुवर्लोकांतगमनं तच्चदुराचारादिजानर्थनि
वृत्तिंविनाचित्तशोधकसकलधर्मंविनाचदुष्प्रापमितिभावः ॥ १६ ॥

नन्वीदृशोपायज्ञानंममकथंस्यादितिचेत्तत्राह सर्ववेत्तीति यतोभवान्सर्वज्ञइतिभावः ऋषेर्नारदस्यवाक्यमाकर्ण्यांबुजासनोब्रह्माप्रत्युवाचेति ॥ १७ ॥ साधुसर्वजनहितंयतःपृष्टमतःसादरंवक्ष्ये तदुत्तरमितिशेषः तच्छृणु तदेवाह पुरेति त्रिपुरहंतारंशिवं भक्तवत्सलेत्यनेनपार्वतीप्रश्नोऽपिस्वभक्तसकलजनकरुणयातदुद्धारार्थमितिसूचितं ॥ १८ ॥ गूढंस्वातिरिक्ताज्ञातंवक्ष्यमाणंवस्तुव्याख्यातवान् कथितवानित्यर्थः ॥ १९ ॥ तत्किंतत्राह पुराणोत्तममिति पुराणमनादितच्चतदुत्तमंच श्रवणेनसर्वधर्मजनकत्वाच्चित्तशुद्धिद्वारातत्त्वज्ञानकरत्वाच्चेतिभावः अध्यात्मरा

**तमुपायमुपाख्याहिसर्ववेत्तियतोभवान् ॥ इत्यृषेर्वाक्यमाकर्ण्यप्रत्युवाचांबुजासनः ॥ १७ ॥ साधुपृष्टंत्वयासाधोवक्ष्येतच्छृणुसादरं ॥ पुरात्रिपुरहंतारंपार्वतीभक्तवत्सला ॥ १८ ॥ श्रीरामतत्त्वंजिज्ञासुःपप्रच्छविनयान्विता ॥ प्रियायैगिरिशस्तस्यैगूढंव्याख्यातवान्स्वयं ॥ १९ ॥ पुराणोत्तममध्यात्मरामायणमितिस्मृतं ॥ तत्पार्वतीजगद्धात्रीपूजयित्वादिवानिशं ॥ २० ॥ आलोचयंतीस्वानंदमग्नातिष्ठतिसांप्रतं ॥ प्रचरिष्यतितल्लोकेप्राण्यदृष्टवशाद्यदा ॥ २१ ॥ तस्याध्ययनमात्रेणजनायास्यंतिसद्गतिं ॥ तावद्विजृंभतेपापंब्रह्महत्यापुरःसरं ॥ २२ ॥ यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ तावत्कलिमहोत्साहोनिःशंकंसंप्रवर्त्तते ॥ २३ ॥**

मायणमित्यन्वर्थंग्रंथनाम आत्मनीत्यध्यात्मंआत्मनिचित्तेंऽतर्यामितयावर्त्तमानोयोरामोरमंतेयोगिनोऽत्रेतिव्युत्पत्त्याऽंतर्यामीतस्यायनंचित्तशुद्धिद्वाराप्रापकंतत्प्रतिपादकत्वादितितदध्यात्मरामायणं उत्तरश्लोकस्थेआलोचनेइदमेवकर्म ॥ २० ॥ स्वानंदमग्नास्वस्वरूपानंदमग्नातिष्ठतीतियत्तत्सांप्रतंयुक्तं एतदालोचनेनस्वस्वरूपानंदस्यजगदंतर्यामिरूपस्यसम्यग्भानादितिभावः ॥ २१ ॥ २२ ॥ अध्यात्मकेतिष्ठतियःपरात्मारामोय्यतेयत्रहितत्त्वविज्ञैःअतोऽभिधानंकथितंभवान्यैअध्यात्मरामायणमस्यमेन मेनभवेन मःशिवश्चंद्रमावेधाइत्यभिधानात् संप्रवर्त्ततेजनेष्वितिशेषः ॥ २३ ॥

निर्भयाःसंचरिष्यंति सर्वेषांपापग्रस्तत्वात्कलावितिभावः ॥ २४ ॥ शास्त्राणिन्यायादीनि विवदंतेविवादंकुर्वंते आत्मविषयेइत्यर्थः कर्त्ताभो क्ताज्ञानाश्रयआत्मापरस्परंभिन्नइतिकाणादागौतमाश्च षोडशादिपदार्थानांपरस्परमात्मनिभेदज्ञानान्मुक्तिरित्यादिच ज्ञानस्वरूपाअनेकेजी वास्तेषांप्रकृत्यादिभ्योभेदज्ञानान्मोक्षइतिसांख्यादयः  एकएवचेतनउपाधिभेदान्नानात्वंप्राप्तस्तत्त्वमस्यादिवाक्यजश्रवणमनननिदिध्यास नैर्ब्रह्मैवाहमितिज्ञानादुपाधिविलयेस्वस्वरूपेणावस्थानमेवमोक्षइत्युपनिषत्सिद्धांतोऽध्यात्मरामायणोदयेस्फुटोभविष्यतीतितत्तच्छास्त्रवासना

यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ तावद्यमभटाःशूराःसंचरिष्यंतिनिर्भयाः ॥ २४ ॥ यावज्जगतिना ध्यात्मरामायणमुदेष्यति ॥ तावत्सर्वाणिशास्त्राणिविवदंतेपरस्परं ॥ २५ ॥ तावत्स्वरूपंरामस्यदुर्बोधंमहताम पि ॥ यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ २६ ॥ अध्यात्मरामायणसंकीर्त्तनश्रवणादिजं ॥ फलंवक्तुंनश क्नोमिकार्त्स्न्येनमुनिसत्तम ॥ २७ ॥ तथाऽपितस्यमाहात्म्यंवक्ष्येकिंचित्तवानघ ॥ शृणुचित्तंसमाधायशिवेनो क्तंपुरामम ॥ २८ ॥ अध्यात्मरामायणतःश्लोकंश्लोकार्धमेववा ॥ यःपठेद्भक्तिसंयुक्तःसपापान्मुच्यतेक्षणात् ॥ ॥ २९ ॥ यस्तुप्रत्यहमध्यात्मरामायणमनन्यधीः ॥ यथाशक्तिवदेद्भक्त्यासजीवन्मुक्तउच्यते ॥ ३० ॥ योभक्त्याऽ र्चयतेऽध्यात्मरामायणमतंद्रितः ॥ दिनेदिनेऽश्वमेधस्यफलंतस्यभवेन्मुने ॥ ३१ ॥

जन्योवादोलयमेष्यतीतिभावः ॥ २५ ॥ रामस्यस्वरूपंसच्चिदानंदाद्वयब्रह्मस्वरूपंमहतामपिशास्त्रज्ञानामपिदुर्बोधंभवतीतिशेषः ॥ २६ ॥ ॥ २७ ॥ २८ ॥ अध्यात्मरामायणतः सार्वविभक्तिकःषष्ठ्यंतात्तसिः ॥२९॥ जीवन्मुक्तइति तल्लक्षणंचदुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृहः वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यतेइत्यादिनागीतायां उक्तंचवासिष्ठेऽपि निद्रादौजागरस्यांतेयोभावउपजायते तंभावंभावयन्रामजीव न्मुक्तःसदाभवेत् ॥ ३०॥३१॥

अनादरात् यदृच्छयापि नतुपुराणश्रवणविध्युक्तनियमेनेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ अधीतेष्विति सांगवेदाध्ययनेशास्त्रार्थाध्ययनेचयत्पुण्यंदुर्लभंतत्फलंतस्याध्यात्मरामायणपुस्तकदातुर्भवेदित्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ जागरितःकृतजागरणः ॥ ३८ ॥





यदृच्छयाऽपियोध्यात्मरामायणमनादरात् ॥ अन्यतःश्रृणुयान्मर्त्यःसोऽपिमुच्येतपातकात् ॥३२॥ नमस्करोति योऽध्यात्मरामायणमदूरतः ॥ सर्वदेवार्चनफलंसप्राप्नोतिनसंशयः ॥ ३३ ॥ लिखित्वापुस्तकेऽध्यात्मरामायणमशेषतः ॥ योदद्याद्रामभक्तेभ्यस्तस्यपुण्यफलंश्रृणु ॥ ३४ ॥ अधीतेषुचवेदेषुशास्त्रेषुव्याकृतेषुच ॥ यत्फलंदुर्लभंलोकेतत्फलंतस्यसंभवेत् ॥ ३५ ॥ एकादशीदिनेऽध्यात्मरामायणमुपोषितः ॥ योरामभक्तःसदसिव्याकरोति नरोत्तमः ॥ तस्यपुण्यफलंवक्ष्येश्रृणुवैष्णवसत्तम ॥ ३६ ॥ प्रत्यक्षरंतुगायत्रीपुरश्चर्याफलंभवेत् ॥ उपवासव्रतं कृत्वाश्रीरामनवमीदिने ॥ ३७ ॥ रात्रौजागरितोऽध्यात्मरामायणमनन्यधीः ॥ यःपठेच्छृणुयाद्वाऽपितस्यपुण्यं वदाम्यहं ॥ ३८ ॥ कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ॥ आत्मतुल्यंधनंसूर्यग्रहणेसर्वतोमुखे ॥ ३९ ॥ विप्रेभ्योव्यासतुल्येभ्योदत्वायत्फलमश्नुते ॥ तत्फलंसंभवेत्तस्यसत्यंसत्यंनसंशयः ॥ ४० ॥ योगायतेमुदाऽध्यात्मरामायणमहर्निशं ॥ आज्ञांतस्यप्रतीक्षंतेदेवाइंद्रपुरोगमाः ॥ ४१ ॥ पठन्प्रत्यहमध्यात्मरामायणमनुव्रतः ॥ यद्यत्करोतितत्कर्मततःकोटिगुणंभवेत् ॥ ४२ ॥

आत्मतुल्यंधनंअतिप्रियंवस्त्वित्यर्थः सर्वतोमुखेजलेस्थितइतिशेषः पुष्करंसर्वतोमुखमितिजलपर्यायेष्वभिधानात् ॥ ३९ ॥ व्यासतुल्येभ्यइत्यनेनदेशप्रदेयवस्तुकालसंप्रदानविशेषाणांपुण्यातिशयजनकत्वंसूचितं ॥ ४० ॥ गायतेइतिपाठेतङार्षः योगायतिमुदेतिपाठस्तुयुक्तएव ॥ ४१ ॥ अनुव्रतःतत्परः ततःस्वभावक्रियमाणकर्मणः ॥ ४२ ॥

तत्राध्यात्मरामायणमध्ये सुसमाहितःस्थिरचित्तः ॥ ४३ ॥ प्रतिमांतिकेप्रतिमासमीपे ॥ ४४ ॥ यस्तुलस्यादिसन्निधौरामहृदयंपठन्प्रकुर्वी
तप्रदक्षिणादीतिशेषः सप्रत्यक्षरंप्रत्यक्षरोच्चारणंब्रह्महत्यांतज्जन्यंपापंनिवर्त्तयेत् आत्मनःश्रोतुश्चेतिशेषः ॥ ४५ ॥ अहंब्रह्मा ॥ ४६ ॥ यद्राम

तत्रश्रीरामहृदयंयःपठेत्सुसमाहितः ॥ सब्रह्मघ्नोऽपिपूतात्मात्रिभिरेवदिनैर्भवेत् ॥ ४३ ॥ श्रीरामहृदयंयस्तुहनू
मत्प्रतिमांतिके ॥ त्रिःपठेत्प्रत्यहंमौनीससर्वेप्सितभाग्भवेत् ॥ ४४ ॥ पठन्श्रीरामहृदयंतुलस्यश्वत्थयोर्यदि ॥
प्रत्यक्षरंप्रकुर्वीतब्रह्महत्यांनिवर्त्तयेत् ॥ ४५ ॥ श्रीरामगीतामाहात्म्यंकृत्स्नंजानातिशंकरः ॥ तदर्धंगिरिजावेत्ति
तदर्धंवेद्म्यहंमुने ॥ ४६ ॥ तत्तेकिंचित्प्रवक्ष्यामिकृत्स्नंवक्तुंनशक्यते ॥ यज्ज्ञात्वातत्क्षणाल्लोकश्चित्तशुद्धिमवा
प्नुयात् ॥ ४७ ॥ श्रीरामगीतायत्पापंननाशयतिनारद ॥ तन्ननश्यतितीर्थादौलोकेक्वापिकदाचन ॥ तन्नपश्याम्य
हंलोकेमार्गमाणोऽपिसर्वदा ॥ ४८ ॥ रामेणोपनिषत्सिंधुमुन्मथ्योत्पादितांमुदा ॥ लक्ष्मणायार्पितांगीतासुधांपी
त्वाऽमरोभवेत् ॥ ४९ ॥ जमदग्निसुतःपूर्वंकार्त्तवीर्यवधेच्छया ॥ धनुर्विद्यामभ्यसितुंमहेशस्यांतिकेवसन् ॥ ५० ॥
अधीयमानांपार्वत्यारामगीतांप्रयत्नतः ॥ श्रुत्वागृहीत्वाऽशुपठन्नारायणकलामगात् ॥ ५१ ॥ ब्रह्महत्यादिपापा
नांनिष्कृतिंयदिवांछति ॥ रामगीतांमासमात्रंपठित्वामुच्यतेनरः ॥ ५२ ॥

गीतामाहात्म्यं ॥ ४७ ॥ रामगीतापठ्यमानाइतिशेषः कदाचनरविग्रहाविकालेऽपिस्नानादिनेतिशेषः मार्गमाणःअन्वेषयन्नपितद्रामगीतातु
ल्यतयापापनाशकंवस्तुरामगीतातिरिक्तंनपश्यामीत्यर्थः ॥ ४८ ॥ गीतासुधामितिरूपकंअमृतरूपांगीतामित्यर्थः अमरस्तत्तुल्यः ॥ ४९ ॥
कार्त्तवीर्यःसहस्रबाहुरर्जुनः ॥ ५० ॥ श्रवणोत्तरंग्रहणं नारायणकलांनारायणरूपत्वं ॥ ५१ ॥ ५२ ॥

दुष्प्रतिग्रहेति दुष्प्रतिग्रहाः तिलधेनुर्गजोवाजीप्रेतान्नमजिनंमणिः सुरभिःसूयमानाचघोराःसप्तप्रतिग्रहाइत्यादिस्मृत्युक्ताः मणिःशालग्रामः सू यमानासुरभिःउभयतोमुखी दुर्भोज्यंनिषिद्धभक्षणं दुरालापोऽनृतभाषणादि ॥५३॥५४॥५५॥५६॥५७॥ तद्दानादिअनंतफलंलभेत् अनंत फलंदानादिफलंतदध्ययनमात्रेणभवेदित्यर्थः॥५८॥श्रुतिर्वेदःस्मृतिर्मन्वादिप्रणीता पुराणानिपाद्मादीन्यष्टादश इतिहासोभारतादिः आगमाः

दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवं ॥ पापंयत्तत्कीर्तनेनरामगीताविनाशयेत् ॥ ५३ ॥ शालग्रामशिलाग्रेचतु लस्यश्वत्थसन्निधौ ॥ यतीनांपुरतस्तद्वद्रामगीतांपठेत्तुयः ॥ ५४ ॥ सतत्फलमवाप्नोतियद्वाचोऽपिनगोचरं ॥ रामगीतांपठन्भक्त्यायःश्राद्धेभोजयेद्द्विजान् ॥ ५५ ॥ तस्यतेपितरःसर्वेयांतिविष्णोःपरंपदं ॥ एकादश्यांनिराहा रोनियतोद्वादशीदिने ॥ ५६ ॥ स्थित्वागस्त्यतरोर्मूलेरामगीतांपठेत्तुयः ॥ सएवराघवःसाक्षात्सर्वदेवैश्चपूज्यते ॥ ॥ ५७ ॥ विनादानंविनाध्यानंविनातीर्थावगाहनं ॥ रामगीतांनरोधीत्यतदनंतफलंलभेत् ॥ ५८ ॥ बहुनाकिमि होक्तेनशृणुनारदतत्त्वतः ॥ श्रुतिस्मृतिपुराणेतिहासागमशतानिच ॥ अर्हंतिनाल्पामध्यात्मरामायणकलामपि ॥ ५९ ॥ अध्यात्मरामचरितस्यमुनीश्वरायमाहात्म्यमेतदुदितंकमलासनेन ॥ यःश्रद्धयापठतिवाशृणुयात्सम र्त्यःप्राप्नोतिविष्णुपदवींसुरपूज्यमानः ॥ ६० ॥ इ०ब्रह्मांडपु०उत्तरखंडेअध्या०बालकांडेप्रथमःसर्गः ॥ १ ॥

पंचरात्रादयः अध्यात्मरामायणस्यतदध्ययनस्यकलांषोडशांशमपिनार्हंति तदध्ययनानीत्यर्थः सर्वाध्ययनफलत्वादस्येतिभावः ॥ ५९ ॥ पठतीत्यत्रउक्तमाहात्म्याध्यायःकर्म ॥ ६०॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्य श्रीरामवर्मणःकृतौअध्यात्मरामायणेसेतौबालकांडेप्रथमःसर्गः ॥ १ ॥

शिवपार्वतीसंवादरूपंअध्यात्मरामायणंवक्तुंभगवान्व्यासोनिर्विघ्नार्थंभगवत्स्मरणरूपमंगलमाचरति यइति पृथ्व्यायोदुष्टराक्षसा दिज नितोभ रोभारस्तस्यवारणायेत्यर्थः परित्राणायसाधूनांविनाशायचदुष्कृतां धर्मसंस्थापनार्थायसंभवामियुगेयुगेइ तिभगवदुक्तेः दिविजैर्देवैःरावणपी डितैःसंप्रार्थितःसन् चिन्मयोऽपिचिद्रूपोऽपिअव्ययोऽपिपृथ्वीतलेरविकुलेमायामनुष्यःसंजातः तत्रदेवप्रार्थनयाऽयमवतारइत्यर्थोवाल्मीकी येबालकांडेपंचदशषोडशसर्गयोःस्पष्टएव अव्ययस्यचिन्मयस्यचकथंजन्मजातस्यचकथंअव्ययत्वमुत्पन्नभावस्यनाशावश्यंभावादतउक्तं

यःपृथ्वीभरवारणायदिविजैःसंप्रार्थितश्चिन्मयःसंजातःपृथिवीतलेरविकुलेमायामनुष्योऽव्ययः ॥
निश्चक्रंहतराक्षसःपुनरगाद्ब्रह्मत्वमाद्यंस्थिरांकीर्त्तिपापहरांविधायजगतांतंजानकीशंभजे ॥ १ ॥

मायेति मायानामसत्त्वासत्त्वाभ्यामनिर्वाच्यासत्त्वरजस्तमोगुणाघटितघटनासामर्थ्यवतीकाचिदीश्वरशक्तिः देवात्मशक्तिस्वगुणैर्निगूढामिति श्रुतेः दैवीह्येषागुणमयीममामायादुरत्ययेतिगीतोक्तेश्च एवंचिन्मयस्याघटितोऽपिमनुष्यभावोजन्मव्यवहारश्चमायाकृतइतिभावः तदुक्तंराम तापनीयोपनिषदि चिन्मयस्याद्वितीयस्यनिष्कलस्याशरीरिणः उपासकानांकार्यार्थंब्रह्मणोरूपकल्पनेति निश्चक्रंनिरवशेषंयथातथाहतराक्ष सःजगतांपापहरांस्थिरांकीर्तिविधायलोकेस्थापयित्वापुनराद्यंब्रह्मत्वंनिरुपाधिब्रह्मरूपममात् ॥ १ ॥

रामस्योक्तंब्रह्मत्वंलक्षणैर्द्रढयति विश्वेति विश्वस्यसंसारस्योत्पत्तिलयादिषुएकंहेतुं यतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयं त्यभिसंविशंतीतिश्रुतेः प्रयंतियत्रलीनानिभवंतीत्यर्थः अनेननिमित्तकारणत्वसमानाधिकरणंजगदुपादानकारणत्वंब्रह्मलक्षणंसूचितं एकमि त्यसहायार्थकंतेननिमित्तकारणाभेदःसूचितः ननुमिथ्याभूतकार्यनिरूपितकारणत्वस्यापिमिथ्यात्वाद्ब्रह्मणासंबंधाभावात्कथमस्यलक्षणत्व मतआह मायाश्रयमिति मायाश्रयत्वात्तत्कृतमिदमस्यकारणत्वमित्यर्थः मायिकेनकारणत्वेनमायिकएवब्रह्मणःसंबंधइतिभावः तदुक्तंश्रुतौ मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमिति ननुमायाश्रयत्वेजीवंप्रतिस्वस्वरूपमिवस्वंप्रत्यपिएनंमायाआवृणुयात्तत्राह विगतमायमिति विग

विश्वोद्भवस्थितिलयादिषुहेतुमेकंमायाश्रयंविगतमायमचिंत्यमूर्तिं ॥ आनंदसांद्रममलंनिजबोधरूपंसीताप तिंविदिततत्त्वमहंनमामि ॥ २ ॥ पठंतियेनित्यमनन्यचेतसःश्रृण्वंतिचाध्यात्मिकसंज्ञितंशुभं ॥ रामायणंसर्व पुराणसंमतंनिर्धूतपापाहरिमेवयांतिते ॥ ३ ॥ अध्यात्मरामायणमेवनित्यंपठेद्यदीच्छेद्भवबंधमुक्तिं ॥ गवांसह स्रायुतकोटिदानात्फलंलभेद्यःश्रृणुयात्सनित्यं ॥ ४ ॥

तामायाआवरणशक्तिरूपायस्मात्तंएनंप्रतिस्वस्वरूपावरणशक्तिरहितासतीत्यर्थः अचिंत्यमूर्तिं यतोवाचोनिवर्ततेअप्राप्यमनसासहतिश्रुतेः एवंजगदुत्पत्त्यादिकारणत्वरूपंतटस्थलक्षणमुक्तं तेनरूपेणाज्ञेयत्वात् अथस्वरूपलक्षणमाह अमलंनिजबोधरूपमिति सत्यंज्ञानमनंतंब्रह्मेति श्रुतेः इदमेवज्ञेयंरूपममलंउपाधिकृतदोषरहितं जीवस्तूपाधिकृतकर्तृत्वाद्यभिमानवानृतथानेश्वरइतिभावः निजंस्वाभाविकंबोधरूपमेवय स्यतं अनेनरूपांतरंसर्वंमायिकमितिसूचितं विदितंतत्त्वंज्ञानंस्वस्यबोधस्वरूपत्वंयेनतं तेनरामावतारेशोकक्रोधादिनटवन्नटनमात्रमितिसूचितं ॥ २ ॥ हरिमेव हरिसायुज्यमेव ॥ ३ ॥ यःश्रृणुयात्ससहस्रगुणितायुततद्गुणितकोटिसंख्यगोदानादधिकफलंलभेदित्यन्वयः ॥ ४ ॥

पुरारिगिरीति रामार्णवेतिचरूपके अध्यात्मरामगंगेति अध्यात्मरामशब्दोअध्यात्मरामायणपरस्तदेवगंगेति अनेनरूपकेणसर्वमहापातकादी नामपिनाशइतिसूचितं गंगायास्तन्नाशकत्वस्यसर्वश्रुतिस्मृतिसिद्धत्वात् ॥५॥ सकलमलहरंवस्तुविषयत्वाद्वाक्यस्यसकलमलहरत्वं आनंदकं दमितीशविशेषणं एतस्यैवानंदस्यमात्रामुपजीवंतीतिश्रुतेरस्यसर्वानंदमूलत्वेनानंदकंदत्वं ॥६॥ देवोद्योतनात् जगन्निवसत्यस्मिन्जगतिनिवस तीतिवाजगन्निवासस्तत्संबुद्धिः तेतुभ्यंनमःअस्तु यतस्त्वंसर्वात्मदृक्सर्वस्वरूपआत्मासर्वात्माब्रह्म सर्वंखल्विदंब्रह्मेतिश्रुतेः तमनिशमात्मरूपतया

पुरारिगिरिसंभूताश्रीरामार्णवसंगता ॥ अध्यात्मरामगंगेयंपुनातिभुवनत्रयं ॥५॥ कैलासाग्रेकदाचिद्रविश तविमलेमंदिरेरत्नपीठेसंविष्टंध्याननिष्ठंत्रिनयनमभयंसेवितंसिद्धसंघैः ॥ देवीवामांकसंस्थागिरिवरतनयापार्व तीभक्तिनम्राप्राहेदंदेवमीशंसकलमलहरंवाक्यमानंदकंदं॥६॥ पार्वत्युवाच नमोऽस्तुतेदेवजगन्निवासस र्वात्मदृक्त्वंपरमेश्वरोऽसि ॥ पृच्छामितत्त्वंपुरुषोत्तमस्यसनातनंत्वंचसनातनोऽसि ॥७॥ गोप्यंयदत्यंतमनन्य वाच्यंवदंतिभक्तेषुमहानुभावाः॥ तदप्यहोऽहंतवदेवभक्ताप्रियोऽसिमेत्वंवदयत्तुपृष्टं ॥८॥

पश्यतीतिसर्वात्मदृक् अतएवपरमेश्वरोऽसि अतःपुरुषोत्तमस्यसर्वेभ्यःपुरुषेभ्यउत्तमस्यतस्यैवब्रह्मणःसनातनंउपाधिरहितं सोपाधेरूपस्यज्ञानो त्तरंनाशान्नसनातनत्वं तत्त्वंपृच्छामि नन्वसनातनेनमयाकथंतद्वक्तुंशक्यमतआह त्वंचसनातनोऽसि त्वमपिसएवासीतित्वदज्ञातंनकिंचिदि तिभावः ॥ ७ ॥ अत्यंतगोप्यं इदंतुतेगुह्यतममितिगीतोक्तेः अनन्यवाच्यंभक्तान्येषुवक्तुमयोग्यं अहोतदपिभक्तेषुवदंतिअतोमेपृष्टंयत्तत्तुनि श्चयेनवद हेदेव यतोऽहंतवभक्ता ननुमद्भक्तात्वंकुतस्तत्राह यतस्त्वंमेप्रियोऽसि ॥ ८ ॥

ज्ञानमिति येनज्ञानेनजनास्तरंति पुनर्जन्मादिसंसारंनप्राप्नुवंतितत्सविज्ञानंज्ञानंब्रूहि विज्ञानंनिदिध्यासनपरिपाकजमपरोक्षज्ञानंतत्सहितंतत्फ लकमितियावत् ज्ञानंश्रवणमननजंपरोक्षंब्रह्मैव सर्वंब्रह्मैवाहमितिच तरतिशोकमात्मविदितिश्रुतेः तद्ब्रूहितज्जनकवाक्यंब्रूहीत्यर्थः तज्ज्ञानंनच वैराग्यंविनावैराग्यंचनभक्तिविनेत्यतआह अनुभक्तिवैराग्ययुक्तंचेति भक्तेःपश्चादनुभक्तिजायमानंयद्वैराग्यंतद्युक्तं तदुपायबोधकवाक्ययु क्तंचेत्यर्थः तथाचपातंजलसूत्रं दृष्टानुश्रविकविषयवितृष्णस्यवशीकारसंज्ञावैराग्यमिति अनुश्रवोवेदस्तद्बोधितःस्वर्गादिरानुश्रविकः भक्तिरी श्वरानुरागः तथामितंमितशब्दवत् विभास्वत्विशेषेणभास्वत् श्रुतिमात्रेणझटित्यर्थप्रत्यायकशब्दबोधजनकवाक्यंयुक्तियुतंब्रूहि यथायो

ज्ञानंसविज्ञानमथानुभक्तिवैराग्ययुक्तंचमितंविभास्वत् ॥ जानाम्यहंयोषिदपित्वदुक्तंयथातथाब्रूहितरंतिये न ॥ ९ ॥ पृच्छामिचान्यच्चपरंरहस्यंतदेवचाग्रेवदवारिजाक्ष ॥ श्रीरामचंद्रेखिललोकसारेभक्तिर्दृढानौर्भव तिप्रसिद्धा ॥ १० ॥ भक्तिःप्रसिद्धाभवमोक्षणायनान्यत्ततःसाधनमस्तिकिंचित् ॥ तथाऽपिहृत्संशयबंधनंमेवि भेत्तुमर्हस्यमलोक्तिभिस्त्वं ॥ ११ ॥ वदंतिरामंपरमेकमाद्यंनिरस्तमायागुणसंप्रवाहं ॥ भजंतिचाहर्निशमप्रम त्ताःपरंपदंयांतितथैवसिद्धाः ॥ १२ ॥

षिदप्यहंत्वदुक्तंजानामि ॥ ९ ॥ अग्रेप्रथमतःदृढाभक्तिःप्रसिद्धानौर्भवति भवसागरतरणायेतिशेषः ॥ १० ॥ तदेवाह भक्तिरिति ततोऽन्यत्सा धनंनास्ति अन्यद्धर्मादितत्साधनंभवमोक्षजनकतत्त्वज्ञानसाधनंनास्तीत्यर्थः सामुख्येतरापेक्षितत्वात् सापरानुरक्तिरीश्वरइतिभक्तिमी मांसाकृच्छांडिल्यसूत्राभ्यां इतरेणज्ञानेनस्वसाधनतयाऽपेक्षितत्वात्साभक्तिर्मुख्येत्याद्यःसूत्रार्थः भक्तिलक्षणपरंचद्वितीयसूत्रं हृत्संशयबं धनंहृद्गतसंशयविषयंरामस्यअनीश्वरत्वं ॥ ११ ॥ निरस्तस्त्यक्तोमायागुणकृतोरागद्वेषादिसंप्रवाहोयेनतं अप्रमत्ताःप्रमादोऽज्ञानंतद्रहिताः प्रमादंवैमृत्युमहंब्रवीमीतिसनत्सुजातीयोक्तेः तत्रहिमृत्युर्वैतमइतिश्रुतेर्मृत्युपदेनाज्ञानमितिबोध्यं तथैवतेनप्रकारेणभजनेनैवसिद्धास्तत्त्वज्ञाः संतःपरंपदंमोक्षंयांतीत्यर्थः ॥ १२ ॥

परमोऽपिरामः स्वाविद्ययामाययासंवृतमावृतमात्मसंज्ञंब्रह्मसंज्ञंआत्मानंस्वस्वरूपंनजानाति अतःपरेणब्रह्मणासंबोधितःपरात्माईश्वरस्तद्रू पंस्वंतत्त्वंवेदजानातीतिकेचिद्वदंति तथाचवाल्मीकीयेरावणवधानंतरंब्रह्मवाक्यं तमुवाचततोदेवःस्वयंभूरमितद्युतिः प्रगृह्यरुचिरंबाहुंस्मारय न्पूर्वदेहिकं भवान्नारायणःसाक्षाद्देवश्चक्रायुधःप्रभुरित्यादि उपदेशसाहस्र्यांभगवत्पादैरप्युक्तं ब्रह्मादाशरथेर्यद्वदुक्त्यैवापानुदत्तमः त स्यविष्णुत्वसंबोधेनयत्नांतरमास्थितइति ॥ १३ ॥ सीताकृतेसीतानिमित्तंविलापःसचारण्यककांडकिष्किंधादौवाल्मीकीयेस्पष्टएव के

वदंतिकेचित्परमोऽपिरामःस्वाविद्ययासंवृतमात्मसंज्ञं ॥ जानातिनात्मानमतःपरेणसंबोधितोवेदपरात्मतत्त्वं ॥ ॥ १३ ॥ यदिस्मजानातिकुतोविलापःसीताकृतेऽनेनकृतःपरेण ॥ जानातिनैवंयदिकेनसेव्यःसमोहिसर्वैरपि जीवजातैः ॥ १४ ॥ अत्रोत्तरंकिंविदितंभवद्भिस्तद्ब्रूतमेसंशयभेदिवाक्यं ॥ १५ ॥ श्रीमहादेवउवाच धन्याऽ सिभक्ताऽसिपरात्मनस्त्वंयज्ज्ञातुमिच्छातवरामतत्त्वं ॥ पुरानकेनाप्यभिचोदितोऽहंवक्तुंरहस्यंपरमंनिगूढं ॥ १६ ॥ त्वयाऽद्यभक्त्यापरिनोदितोऽहंवक्ष्येनमस्कृत्यरघूत्तमंते ॥ रामःपरात्माप्रकृतेरनादिरानंदएकःपुरुषोत्तमोहि ॥ १७

नसेव्यः अज्ञस्यजीववत्सेव्यत्वाभावादित्यर्थः ॥ १४ ॥ १५ ॥ परात्मनोब्रह्मणः ॥ १६ ॥ एवंपार्वत्यापृष्टःशिवोरामस्वरूपमाह रामइ ति रामःपरात्माब्रह्मैवेत्यर्थः प्रकृतेरित्यस्यान्यइतिअसंसर्गीतिचशेषः प्रकृतितत्कार्येभ्योऽन्यत्वात्तैरसंसर्गाच्चरामःपरमेश्वरएवेत्यर्थः जीव स्तुतैरुपाधिभिःसंसृष्टतद्धर्मकर्तृत्वाद्यभिमानवानितिभावः अतएवानादिरेकआनंदः कार्यानंदव्यावृत्तयेअनादिरिति एवंचानंदंब्रह्मएकमेवा द्वितीयंब्रह्मेतिश्रुतिसिद्धंब्रह्मेत्यर्थः अतएवपुरुषोत्तमःपुरुषेभ्योजीवेभ्यउत्तमः हिप्रसिद्धमेतदित्यर्थः ॥ १७ ॥

नन्वीदृशस्यमनुष्यादिदेहधारणंकथमतआह स्वमाययेति अघटितघटनाशक्तिरूपामाया मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमितिश्रुतिसि
द्धातयाइदंकृत्स्नंदृश्यंसृष्ट्वांऽतर्बहिरास्थितोयः तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः तादृशस्यमनुष्यशरीरपरिग्रहोनाश्चर्याय तदुक्तंगीता
भाष्ये भूतानामीश्वरोनित्यशुद्धबुद्धस्वभावोऽपिस्वमाययादेहवानिवजातइवचलोकानुग्रहंकुर्वन्नूलक्ष्यते स्वप्रयोजनाभावेऽपिभूतानुजिघृक्ष
येति नन्वेवंसर्वगतत्वेसर्वज्ञेयःकिंनेत्यतआह सर्वांतरस्थोऽपिनिगूढआत्मेति यःपृथिव्यांतिष्ठन्पृथिव्याआंतरइत्यादिश्रुत्यासर्वांतरस्थत्वेनोक्तो
ऽपिनिगूढः एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरितिश्रुतेः तादृशस्यसत्त्वेव्यवहारकालिकमपिमान
माह स्वमाययेति स्वाज्ञानकल्पितयामाययेत्यर्थः अयंभावः नित्यशुद्धादिरूपेश्वरस्वरूपाज्ञानेनतस्याघटितघटनासामर्थ्यापरपर्यायामाया

स्वमाययाकृत्स्नमिदंहिसृष्ट्वानभोवदंतर्बहिरास्थितोयः ॥ सर्वां
तरस्थोपिनिगूढआत्मास्वमाययासृष्टमिदंविचष्टे ॥ १८ ॥

ख्यात्रिगुणाशक्तिरुपाधिकल्पितावच्छेदैस्तत्स्वरूपैर्जीवैःकल्पिता साचस्वसजातीयमेवसंसारमुच्चावचंप्रसूते अतएवतत्स्वरूपज्ञानेसकार्या
यास्तस्यानाशः रज्जुज्ञानेनेवरज्जुकल्पितभुजंगस्यभयकंपादिकार्यसहितस्य नचजीवैस्तत्कल्पनातत्सृष्टोपाधिभिश्चजीवतेइत्यन्योन्याश्रयः
अनादित्वेनापिपरिहारात् नन्वेकस्यतत्त्वज्ञानेनतन्नाशेसंसारोच्छेदापत्तिः एकरज्जौयुगपद्दशानांसर्पभ्रमेएकस्यरज्जुज्ञानेनतस्यसर्पभ्रमकार्ये
भयकंपादौनिवृत्तेऽपिअन्येषांतद्दर्शनेनतदनिवृत्तिवदुपपत्तेरिति तयासृष्टमिदंविचष्टेपश्यति एवंचद्रष्टृत्वेनतत्सिद्धिः नान्योतोऽस्तिद्रष्टेतिश्रुतेः
एकेनैवाकाशेनोपाधिभेदात्घटाकाशादिव्यवहारवत्एकेनैवचेतनेनोपाधिभेदादनेकजीवव्यवहारोपपत्तौचेतनानेकत्वेमानाभावात्द्रष्टृत्वे
नतत्सिद्धिरितिभावः नचतत्तदज्ञानरूपोपाधिविशिष्टस्यैवजीवत्वेजीवस्याज्ञानमितिव्यवहारानापत्तिः भार्याविशिष्टस्यैवगृहस्थत्वेऽपिगृ
हस्थभार्येतिवदुपपत्तेरितिदिक् ॥ १८ ॥

चेतनस्वीकारेमानांतरमाह जगंतीति जगंतिजगदंतःकरणानियत्सन्निधौनित्यंपरितोभ्रमंतिस्वस्वचेष्टांकुर्वंति अन्यथासर्वस्यजडत्वाच्चेतना भावेजगदांध्यप्रसंगइतिभावः ननुनिष्कलंनिष्क्रियंशांतमितिश्रुतेस्तस्यनिष्क्रियतयाकथंतेनान्येषांव्यापारसंपादनमतआह चुंबकलोहवद्धी ति यथानिष्क्रियोऽपिचुंबकमणिर्लोहंशक्तिविशेषात्सन्निधिमात्रेणचालयति तथाचेतनोनिष्क्रियोऽपिस्वमाययावैचित्र्यादेवतानिसन्निधि मात्राद्यापारयतीत्यर्थः तदुक्तमाचार्यैः अनापन्नविकारःसन्नयस्कांतवदेवयः बुध्यादींश्चालयेत्प्रत्यक्सोऽहमित्यवधारयेदिति एतन्मायागु णास्पृष्टत्वादिरूपंरामस्वरूपंयेजीवानजानंति अज्ञानेहेतुर्विमूढचेतसः विमूढचेतस्त्वेहेतुः स्वाविद्ययासंवृतमानसाइति स्वोपाधिभूतयाअवि द्ययाविद्याविरोधिभावदार्ढ्यरूपयासंवृतांतःकरणाः ॥ १९ ॥ अतस्तेजीवाःशुद्धबुद्धे शुद्धत्वंमायादोषानाक्रांतत्वेन बुद्धेज्ञानस्वरूपे निरस्तमा

**जगंतिनित्यंपरितोभ्रमंतियत्सन्निधौचुंबकलोहवद्धि॥ एतन्नजानंतिविमूढचित्ताःस्वाविद्ययासंवृतमानसाये॥ ॥१९॥ स्वाज्ञानमप्यात्मनिशुद्धबुद्धेस्वारोपयंतीहनिरस्तमाये॥ संसारमेवानुसरंतितेवैपुत्रादिसक्ताःपुरुकर्मयुक्ताः॥ २०॥ जानंतिनैवंहृदयेस्थितंवैचामीकरंकंठगतंयथाऽज्ञाः॥ यथाऽप्रकाशोनतुविद्यतेरवौज्योतिःस्वभावेपरमेश्वरेतथा॥ विशुद्धविज्ञानघनेरघूत्तमेविद्याकथंस्यात्परतःपरात्मनि॥२१॥**

येस्वज्ञानवतांनिरस्तामायायेनतादृशे मामेवयेप्रपद्यंतेमायामेतांतरंतितेइतिगीतोक्तेः ईदृशेरामेस्वाज्ञानंसुतरामारोपयंति स्वस्याज्ञत्वाद्रामम ज्ञमितिजानंतीत्याशयः तेषांदुष्टफलमाह संसारमिति तेपुत्रादिसक्ताःपुरुकर्मयुक्ताःभूरियज्ञादिकर्मयुक्ताःसंसारमेवानुसरंति ॥ २० ॥ यतस्तेयथाऽज्ञाःकंठगतंचामीकरंस्वर्णालंकारंयथानजानंति एवंहृदयेस्थितंरामंतेनजानंति अतःसंसारमेवानुसरंतीत्यर्थः किंचपरात्मन्यज्ञा नासंभवइतिदृष्टांतेनाह यथेति अप्रकाशस्तमोयथारवौज्योतिःस्वभावेज्योतिःस्वरूपेनविद्यते तथाविशुद्धविज्ञानेननिर्विशेषापरोक्षज्ञानेन घनेनिबिडेपरतःपरमात्मनिउत्कृष्टेभ्योप्युत्कृष्टेरामेअविद्याकथंस्यात् तादृशेवस्तुन्यविद्यानवकाशादितिभावः तदुक्तमाचार्यैः अप्रकाशोय थादित्येनास्तिज्योतिःस्वभावतः नित्यबोधस्वरूपत्वान्नाज्ञानंतद्वदात्मनीति ॥ २१ ॥

ननुस्वाज्ञानेनराममज्ञंव्यवहरतिजनइत्युक्तमसंगतंअन्यगतस्यान्यत्रारोपासंभवादित्याशंक्यसदृष्टांततयामोहंजीवउपपादयति यथाविन
ष्टदृष्टेर्दोषयुक्तदृष्टेःपुरुषस्यभ्रमताक्ष्णागृहादिकंभ्रमतीवोत्प्रेक्षेयं भ्रमतीवेतिगृह्यते तेनैवनष्टदृष्टिनापुरुषेणेतिशेषः तथैवदेहेंद्रियावच्छिन्नस्यक
र्तुरात्मनोंऽतःकरणस्याहंकाराख्यस्यकृतंपरेसर्वधर्माऽलिप्तेतदनवच्छिन्नेचेतनेऽध्यस्यजनोजीवोमुह्यतिअहंकर्त्तेतिमोहंप्राप्नोति एवंचयथाऽक्षि
गतभ्रमणस्यगृहादावारोपः यथाचांतःकरणधर्मस्यकर्तृत्वादेरात्मन्यारोपस्तथास्वाज्ञानस्यरामेआरोपइत्याशयः ॥२२॥ भगवतिरामेस्वतोज्ञा
नमज्ञानंवानसंभवतीतिपुनरपिदार्ढ्यायोक्तंयुक्तमेवाह नाहइति सूर्यप्रतिरात्रिदिवसविभागाभावेहेतुः प्रकाशरूपाव्यभिचारतःक्वचित् का

यथाहिचाक्ष्णाभ्रमतागृहादिकंविनष्टदृष्टेर्भ्रमतीवदृश्यते ॥ तथैवदेहेंद्रियकर्त्तुरात्मनःकृतंपरेध्यस्यजनोविमुह्य
ति ॥ २२ ॥ नाहोनरात्रिःसवितुर्यथाभवेत्प्रकाशरूपाव्यभिचारतःक्वचित् ॥ ज्ञानंतथाऽज्ञानमिदंद्वयंहरौरामेक
थंस्थास्यतिशुद्धचिद्घने ॥ २३ ॥ तस्मात्परानंदमयेरघूत्तमेविज्ञानरूपेहिनविद्यतेतमः ॥ अज्ञानसाक्षिण्यरविं
दलोचनेमायाश्रयत्वान्नहिमोहकारणं ॥ २४ ॥

पीत्यर्थः ज्ञानाज्ञानयोर्भगवत्यनवस्थितौहेतुः शुद्धचिद्घनत्वं ॥ २३ ॥ उपसंहरति तस्मादिति परानंदमयेसर्वभूतैरेतदानंदमात्रायाउपजीवना
त् विज्ञानरूपेनिर्विकल्पकज्ञानरूपे तमोऽज्ञानरूपं तमसोसंबंधेहेतुद्वयंअज्ञानसाक्षित्वंमायाधिष्ठातृत्वरूपंमायाश्रयत्वंच मोहकारणंतमोऽ
ज्ञानं योयन्मायाधिष्ठातासतद्विषयाज्ञानहीनइतिलोकेदर्शनादितिभावः नन्वेवंसतिब्रह्मादाशरथेर्यद्वदुक्तयैवापानुदत्तमइत्याद्याचार्योक्तेः
कागतिरितिचेच्छृणु रावणवधार्थंमनुष्यत्वनाटनायभगवतासंकल्पपूर्वकंतस्यस्वमाहात्म्याच्छादनस्यतत्रतमःशब्देनोक्तेरदोषात् उक्तंहि
संक्षेपशारीरके संकल्पपूर्वकमभूद्रघुनंदनस्यनाहंविदानइतिकंचनकालमेतत् ब्रह्मोपदेशमुपलभ्यनिमित्तमात्रंतच्चोत्ससर्जसकृतेसतिदेव
कार्येइति भागवतेऽप्युक्तं स्त्रीसंगिनांगतिरितिप्रथयंश्चचारेति ॥ २४ ॥

मरुत्सूनुर्वायुपुत्रोहनूमान् ॥ २५ ॥ रामायणेरामायणप्रवर्त्तकेरामावतारकालेइत्यर्थः देवकंटकंदेवद्रोहिणं ॥ २६ ॥ २७ ॥ परिवृतःसीतादिभिरितिशेषः ॥ २८ ॥ पुरतःस्थितंअग्रेस्थितं अनेनगुरूपसदनंदर्शितं निराकांक्षंज्ञानेतरधनादिनिरपेक्षं ॥ २९ ॥ तत्त्वंमत्स्वरूपत

अत्रतेकथयिष्यामिरहस्यमपिदुर्लभं॥सीतारामममरुत्सूनुसंवादंमोक्षसाधनं ॥ २५ ॥ पुरारामायणेरामोरावणंदेवकंटकं॥हत्वारणेरणश्लाघीसपुत्रबलवाहनं ॥ २६ ॥ सीतयासहसुग्रीवलक्ष्मणाभ्यांसमन्वितः ॥ अयोध्यामगमद्रामोहनूमत्प्रमुखैर्वृतः ॥ २७॥ अभिषिक्तःपरिवृतोवसिष्ठाद्यैर्महात्मभिः ॥ सिंहासनेसमासीनःकोटिसूर्यसमप्रभः ॥ २८ ॥ दृष्ट्वातदाहनूमंतंप्रांजलिंपुरतःस्थितं ॥ कृतकार्यंनिराकांक्षंज्ञानापेक्षंमहामतिं ॥ २९ ॥ रामःसीतामुवाचेदंब्रूहितत्त्वंहनूमते ॥ निष्कल्मषोऽयंज्ञानस्यपात्रंनौनित्यभक्तिमान् ॥ ३० ॥ तथेतिजानकीप्राहतत्त्वंरामस्यनिश्चितं ॥ हनूमतेप्रपन्नायसीतालोकविमोहिनी ॥ ३१ ॥

त्त्वं निष्कल्मषोऽयमित्यनेनज्ञानाधिकारित्वंसूचितं नौआवयोः ॥ ३० ॥ रामस्यतत्त्वंश्रोतुर्निश्चितंयथाभवतितथाप्राह लोकविमोहिनीत्यनेनबंधनकर्तुरेवबंधमोक्षेसामर्थ्यमितिदर्शितं राजाज्ञयाबद्धोहितदाज्ञयैवमुच्यतइतिलोकेप्रसिद्धं एवंचभगवतीकृपैवमुख्यंमोक्षकारणमिति दर्शितं ॥ ३१ ॥

जानकीप्राहेत्युक्तंतदाह राममिति रामंपरंब्रह्मविद्धि रमंतेयोगिनोऽनंतेनित्यानंदेचिदात्मनि इतिरामपदेनेदंपरंब्रह्माभिधीयतेइतितापनीयेपा
द्मेचोक्तेः सद्बाधहीनं सत्यत्वंबाधराहित्यंजगद्बाधैकसाक्षिणः बाधःकिंसाक्षिकोब्रूहिनत्वसाक्षिकइष्यतइत्युक्तेः चिज्ज्ञानस्वरूपमानंदंतद्रूप
मद्वयं एकमेवाद्वितीयंब्रह्मेतिश्रुतेः सर्वोपाधिविनिर्मुक्तंस्थूलसूक्ष्मसकलोपाधिनिर्मुक्तं विराड्हिरण्यगर्भश्चकारणंचेत्युपाधयः ईशस्ययत्रि
भिर्हीनंतुरीयंतत्पदंविदुरितिवार्त्तिकं किंच सर्वोपाधिभिर्धर्मैर्विनिर्मुक्तमस्पृष्टमित्यर्थः सत्तामात्रंवस्तुमात्रेसदितिव्यवहारनियामकमित्यर्थः
एतत्संबंधादेवसर्वत्रसदितिव्यवहारइतिभावः अगोचरंमनोवचसोरप्यविषयमित्यर्थः यतोवाचोनिवर्त्तंतेअप्राप्यमनसासहेतिश्रुतेः ॥ ३२ ॥
आनंदंतत्त्वेनविपुलत्वमुपलक्ष्यते योवैभूमातत्सुखंनाल्पेसुखमस्तीतिश्रुतेः निर्मलंरजोहीनं शांतंप्रपंचोपशमत्वात् प्रपंचोपशमंशिवंशांतमि

**सीतोवाच रामंविद्धिपरंब्रह्मसच्चिदानंदमद्वयं ॥ सर्वोपाधिविनिर्मुक्तंसत्तामात्रमगोचरं ॥ ३२ ॥**
**आनंदंनिर्मलंशांतंनिर्विकारंनिरंजनं ॥ सर्वव्यापिनमात्मानंस्वप्रकाशमकल्मषं ॥ ३३ ॥**

तिश्रुतेः निर्विकारंजायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेनश्यतीतिषड्भावविकारहीनं नजायतेम्रियतेवेतिगीतोक्तेः अनेनापरिणामित्वंसू
चितं निरंजनंअविद्यातत्कार्यरूपतमोहीनं आदित्यवर्णंतमसःपरस्तादित्युक्तेः सर्वव्यापित्वादेवात्मानंअततिव्याप्नोतीत्यात्मा सर्वव्यापीसर्व
भूतांतरात्मेतिश्रुतेः स्वप्रकाशं अत्रायंपुरुषःस्वयंज्योतिरिति यस्यभासासर्वमिदंविभातीतिश्रुतेः अकल्मषं आत्मापहतपाप्मेतिश्रुतेः सदा
दिशब्दानांकल्पितप्रवृत्तिनिमित्तभेदादिपर्यायत्वेनसहप्रयोगः यानित्वभावमुखेनबोधकानितेषुनकाप्यनुपपत्तिः एवंचापाततःकल्पितप्रवृत्ति
निमित्तप्रकारकबोधेवृत्तेशुद्धचित्तस्यश्रुतौसर्वधर्मरहितत्वेनब्रह्मोक्त्याधर्मांशेकल्पितत्वग्रहेशुद्धनिर्धर्मकब्रह्मबोधःसर्वैःपदैर्भवतीतिबोध्यं तत्र
दुर्बोधस्यात्मतत्त्वस्यबोधार्थंपुनःपुनःशब्दतोऽर्थतश्चपरमकरुणावतीभगवतीसीताहनूमतेबोधयामासेतिद्रष्टव्यं ॥ ३३ ॥

नन्वेवंविधोरामश्चेज्जगत्कारणत्वाद्यसंभवस्तस्मिन्नितिकुतोजगदुत्पत्त्यादीत्यतआह मामिति मूलप्रकृतिंसर्वजगदुपादानकारणमित्यर्थः प्रकृतिशब्दस्योपादानकारणेप्रसिद्धेः तत्तदुपादानकारणानांमहदादीनामप्युपादानकारणत्वान्मूलप्रकृतित्वमस्याः मांमायांतुप्रकृतिंविद्यादितिश्रुतिप्रसिद्धांब्रह्मण्यध्यस्तां ततोभेदाभेदाभ्यांसत्त्वासत्त्वाभ्यांचअनिर्वचनीयामनादिमैश्वरींमायां ऐश्वरीत्वंचास्याईश्वरस्वरूपाज्ञानरूपत्वेनेतिबोध्यं एषाचजीवाश्रितैवेश्वरसन्निधानात्तद्रूपेणविवर्त्ततेइतिबोध्यं मूलप्रकृतित्वमेवस्फुटयति सर्गस्थित्यंतकारिणीमिति उत्पत्तिस्थितिप्रलयकर्त्रीं नन्वेवंतदैक्षतबहुस्यांप्रजायेयेतिश्रुतेः यतोवाइमानिभूतानिजायंतेयेनजातानिजीवंतियत्प्रयंत्यभिसंविशंतीतिब्रह्मप्रकरणस्थश्रुते

## मांविद्धिमूलप्रकृतिंसर्गस्थित्यंतकारिणीं ॥ तस्यसन्निधिमात्रेणसृजामीदमतंद्रिता ॥ ३४ ॥

श्चब्रह्मणोजगत्कारणत्वंलभ्यतेतद्विरुध्येतेत्यत्राह तस्यसन्निधीति यथेंद्रजालिकमायाशक्तेस्तत्तन्मंत्रनिष्ठायाऐंद्रजालिकंविनानस्वकार्यसामर्थ्यंतथास्याःशक्तेस्तत्सन्निधानेनैवजगत्स्रष्टृत्वमितितत्रतदुपचारः यथागृहिणीवैशिष्ट्येनैवसिद्धस्वरूपस्यगृहस्थस्यस्वसंबंधजसंकल्पवशवर्त्तिनीगृहिणी तथामायावैशिष्ट्येनैवसिद्धस्येश्वरस्यस्वसंगजतत्संकल्पवशवर्त्तिन्यहमित्याह अतंद्रितातत्संकल्पितेऽर्थेनिरालस्येत्यर्थः तदुक्तं वाल्मीकीयेरामंप्रतिकालवचनेन संक्षिप्येहपरान्लोकानेकस्त्वंमाययासह भार्ययाशुभयादेव्यामांत्वंपूर्वमजीजनइति एवंचमदुक्तजगत्स्रष्टृत्वादेस्तत्रारोपइतिभावः ॥ ३४ ॥

यद्यपिमायाशबलेईश्वरेएवजगदुपादानत्वंनिमित्तत्वंच जगतस्तदुपादानंमायामादायतामस्ति निमित्तंशुद्धसत्वांतामुच्यतेब्रह्मतद्विरेत्य भियुक्तोक्तेस्तथाऽपिविशिष्टस्यविशेषणविशेष्योभयानतिरेकेणमायागतस्यतस्यभगवत्यारोपेणैवतथाव्यवहारइत्याह तदिति यतस्तत्सान्नि ध्यान्मयासृष्टमतस्तत्स्रष्टृत्वादिअबुधैस्तत्स्वरूपानभिज्ञैस्तत्रारोप्यतेरज्जौसर्पइवेतिभावः एतदेवद्रढयितुंकानिचित्स्वकृतानितत्रारोप्याणिद र्शयति अयोध्येत्यादि ॥ ३५ ॥ ३६ ॥ ३७ ॥ मायामारीचमरणंमायागृहीतमृगरूपमारीचमरणमित्यर्थः मायासीताहृतिरिति तदुक्तंकूर्म पुराणेउत्तरखंडेचतुस्त्रिंशेऽध्याये रामस्यसुभगांभार्यांरावणोराक्षसेश्वरः सीतांविशालनयनांचकमेकालनोदितः गृहीत्वामाययावेषंचरंती

तत्सान्निध्यान्मयासृष्टंतस्मिन्नारोप्यतेऽबुधैः॥ अयोध्यानगरेजन्मरघुवंशेऽतिनिर्मले॥ ३५ ॥ विश्वामित्रस हायत्वंमखसंरक्षणंततः॥ अहल्याशापशमनंचापभंगोमहेशितुः॥ ३६ ॥ मत्पाणिग्रहणंपश्चाद्भार्गवस्यम दक्षयः॥ अयोध्यानगरेवासोमयाद्वादशवार्षिकः ॥ ३७ ॥ दंडकारण्यगमनंविराधवधएवच ॥ मायामा रीचमरणंमायासीताहृतिस्तथा॥ ३८॥

विजनेवने समाहर्तुंमनश्चक्रेतापसःकिलकामिनीं विज्ञायसाचतद्भावंस्मृत्वादाशरथिंपतिं जगामशरणंवह्निमावसथ्यंशुचिस्मिता प्रपद्येपाव कंदेवंसाक्षिणंविश्वतोमुखं आत्मानंदीप्तवपुषंसर्वभूतहृदिस्थितं इत्याद्यष्टश्लोकानुक्त्वा इतिवन्ह्यष्टकंजप्त्वारामपत्नीयशस्विनी ध्यायंतीमन सातस्थौराममुन्मीलितेक्षणा अथावसथ्याद्भगवान्हव्यवाहोमहेश्वरः आविरासीत्सुदीप्तात्मातेजसानिर्दहन्निव सृष्ट्वामायामयींसीतांसराव णवधेच्छया सीतामादायरामेष्टांपावकोऽतरधीयत कृत्वातुरावणवधंरामोलक्ष्मणसंयुतः समादायाभवत्सीतांशंकाकुलितमानसः साप्रत्यया यभूतानांसीतामायामयीपुनः विवेशपावकंदीप्तंददाहज्वलनोपितां दग्ध्वामायामयींसीतांभगवानुग्रदीधितिः रामायादर्शयत्सीतांपावको

सौसुरप्रियः एतत्पतिव्रतानांवैमाहात्म्यंकथितंमया स्त्रीणांसर्वाघशमनंप्रायश्चित्तंपरंस्मृतमिति अनेनस्त्रीणामेवंविधोऽग्निप्रवेशोनदोषाय विप रीतंसर्वपापहरश्चेतिसूचितं वाल्मीकीयेऽपिमारीचवधार्थंगतेरामेरामहतेनतेनरामशब्दसदृशशब्दैराक्रोशेकृतेलक्ष्मणस्यरामसहायार्थंगमनप्रे रणावसरेअरण्यकांडे अपित्वासहरामेणपश्येयंपुनरागतः लक्ष्मणेनैवमुक्तातुरुदतीजनकात्मजा प्रत्युवाचततोवाक्यंतीव्रबाष्पपरिप्लुता गोदा वरींप्रवेक्ष्यामिहीनारामेणलक्ष्मण आबंधिष्येऽथवात्यक्ष्येविषमेदेहमात्मनः विषमेभृग्वादौस्थित्वाततःप्रपातेनेत्यर्थः पिबामिवाविषंतीक्ष्णंप्रवे

जटायुषोमोक्षलाभःकबंधस्यतथैवच ॥ शबर्याःपूजनंपश्चात्सुग्रीवेणसमागमः ॥ ३९ ॥ वालिनश्चवधः पश्चात्सीतान्वेषणमेवच ॥ सेतुबंधश्चजलधौलंकायाश्चनिरोधनं ॥ ४० ॥ रावणस्यवधोयुद्धेसपुत्रस्यदुरा त्मनः॥ विभीषणेराज्यदानंपुष्पकेणमयासह ॥ ४१ ॥ अयोध्यागमनंपश्चाद्राज्येरामाभिषेचनं॥ एवमादी निकर्माणिमयैवाचरितान्यपि॥ आरोपयंतिरामेऽस्मिन्निर्विकारेऽखिलात्मनि॥ ४२॥

क्ष्यामिहुताशनं नत्वहंराघवादन्यंकदाऽपिपुरुषंस्पृशेइतिसीतोक्त्यासूचितोऽयमर्थः अन्यथैवंप्रतिज्ञायरावणशरीरस्पर्शेजगन्मातुःप्रतिज्ञाहा निःस्यात् तस्मात्प्रवेक्ष्यामिहुताशनमित्यनेनस्वकर्त्तव्यार्थएवोक्तइतिमंतव्यं एतत्प्रवेशादेवहनुमत्पुच्छसंबद्धाग्निनालंकादाहोपपत्तिः अन्य थारावणवशीकृतेनलोकपालाग्निनाकथंतन्नगरदाहःस्यात् एतच्छक्तिप्रवेशेतुतस्यस्वातंत्र्यहान्यातदुपपत्तिरित्यलं ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ एवमादीनिब्राह्मणेभ्योदानादीन्यादिशब्दाद्ब्राह्माणि निर्विकारेजन्मादिरहितेआरोपयंति एवंजगत्कर्तृत्वादिकमपिमन्निष्ठमेवरामे आरोपयंतीत्यर्थः ॥ ४२ ॥

निर्विकारत्वमेवरामस्योपपादयति रामइति निष्कलंनिष्क्रियंशांतमित्यादिश्रुतेः आनंदमूर्त्तिरानंदस्वरूपः अचलःकूटस्थोऽतएवपरिणामही
नः मायागुणान्माययासृष्टपदार्थाननुगतस्तदधिष्ठानत्वेनस्थितस्तथाविभातिसृष्टिरूपोभाति यथारज्ज्ववच्छेदेनसर्पाकारोंतःकरणपरिणामइ
तिरज्जुःसर्पात्मनाभाति एतदेवविवर्त्तोपादानत्वमित्याहुः सचसर्पाकारोंऽतःकरणपरिणामःसत्त्वासत्त्वाभ्यामनिर्वचनीयइत्युच्यते एवंप्रपं
चोऽप्यनिर्वचनीयइतिदिक् ॥ ४३ ॥ उपस्थितमात्मनोऽद्वितीयत्वेजीवेश्वरादिव्यवस्थाकथमितिजिज्ञासयोपपन्नं आत्माईश्वरः अनात्मा
चिदाभासोजीवः परमात्माशुद्धचैतन्यं ॥ ४४ ॥ तेषांतत्त्वमेवसदृष्टांतमाह आकाशस्येति एकस्याकाशस्यत्रिविधोभेदः महाकाशो

**रामोनगच्छतिनतिष्ठतिनानुशोचत्याकांक्षतेत्यजतिनोनकरोतिकिंचित् ॥ आनंदमूर्तिरचलःपरिणामहीनोमा
यागुणाननुगतोहितथाविभाति ॥४३॥ श्रीमहादेवउवाच ततोरामःस्वयंप्राहहनूमंतमुपस्थितं॥श्रृणुतत्त्वं
प्रवक्ष्यामित्यात्मानात्मपरात्मनां॥४४॥ आकाशस्ययथाभेदस्त्रिविधोदृश्यतेमहान्॥ जलाशयेमहाकाशस्तदव
च्छिन्नएवहि॥ प्रतिबिंबाख्यमपरंदृश्यतेत्रिविधंनभः ॥ ४५ ॥ बुद्ध्यवच्छिन्नचैतन्यमेकंपूर्णमथापरं ॥ आभा
सस्त्वपरंबिंबभूतमेवंत्रिधाचितिः॥ ४६ ॥**

जलाशयावच्छिन्नआकाशःप्रतिबिंबाकाशश्चेतिभेदात् तदेवाह महानिति महाकाशइत्यर्थः सएवमहाकाशोजलाशयेतदवच्छिन्नएवभ
वति तत्रैवजलाशयेपरंप्रतिबिंबाख्यंदृश्यते एवंनभस्त्रिविधमित्यर्थः ॥ ४५ ॥ एवंदृष्टांतमुपपाद्यदार्ष्टांतिकमाह बुद्धीति सर्वबुद्धिसाक्षितयाबु
द्ध्युपहितंचैतन्यंपूर्णमुपाधिमंडलस्यविभुत्वाद्विभु सकलबुद्धिसमष्टिरेवमायेति तदवच्छिन्नचैतन्यमीश्वरइत्यर्थः अथापरमाभासस्तत्तद्बुद्धिप्र
तिबिंबभूतोजीवइत्यर्थः अपरंबिंबभूतं एवंचितिस्त्रिधाइत्यर्थः आभासस्त्वपरंविश्वभूतमितिपाठेबुद्ध्यवच्छिन्नंचैतन्यमेकमित्यंतेनेश्वरः पूर्ण
मथापरंइत्यनेनशुद्धमाभासस्त्वपरमितिजीवः जीवत्वमेवस्फुटयति विश्वभूतमिति विश्वशब्देनजाग्रदवस्थाभिमानी विशतिदेहेंद्रियादिष्वि
तिव्युत्पत्तेः एतत्प्रतिबिंबाकाशस्थानीयमितित्रिधाचितिरित्यर्थइत्याहुः तत्रद्वौमिथ्याभूतौउपाध्योर्मिथ्यात्वात् ॥ ४६ ॥

नन्वेवंशुद्धचैतन्येसाक्षीतिव्यवहारानुपपत्तिः साक्षाद्द्रष्टाहिसाक्षी नचशुद्धचैतन्येद्रष्टृत्वमित्यतआह साभासेति आभासेनचेतनप्रतिबिंबेनस
हितायाबुद्धेरंतःकरणस्येत्यर्थः तद्गतंकर्तृत्वमबुधैःसाक्षिणिआरोप्यते तेनायंसाक्षिपदवाच्यइत्यर्थः अयमाशयः जानातीत्यादावंतःकरण
वृत्तिविशेषरूपाक्रियाज्ञाधातुवाच्या आभासविशिष्टश्चतिङर्थआश्रयः परस्पराध्यासेनाभासबुद्ध्योर्विवेकाग्रहात् तदुक्तमाचार्यैः आत्मा
भासस्तुतिङ्वाच्योधात्वर्थश्चधियःक्रिया उभयंचाविवेकेनजानातीत्युच्यतेमृषा बुद्धेःकर्तृत्वमध्यस्यजानातीतिज्ञउच्यते तथाचैतन्यमध्य
स्यज्ञत्वंबुद्धेरिहोच्यतइति आत्माभासइतिबहुव्रीहिः धियोंऽतःकरणस्य तदेवाह उभयंचेति मृषेति आभासबुद्धितत्क्रियाणांमिथ्यात्वात्अयं
व्यवहारोऽपिमिथ्येत्यर्थः एवंचसाभासबुद्धिगतद्रष्टृत्वस्याविच्छिन्नेपरिच्छिन्नेविकारिणिसाक्षिणिबुद्धितादात्म्यापन्नाभासतादात्म्याध्यासेना

साभासबुद्धेःकर्तृत्वमविच्छिन्नेऽविकारिणि॥साक्षिण्यारोप्यतेभ्रांत्याजीवत्वंचतथाऽबुधैः॥४७॥
आभासस्तुमृषाबुद्धिरविद्याकार्यमुच्यते॥अविच्छिन्नंतुतद्ब्रह्मविच्छेदस्तुविकल्पतः ॥ ४८ ॥

रोपः तथाजीवोनित्यःसत्यइत्यादिव्यवहाराज्जीवत्वमपितत्रारोप्यतइत्यर्थः ॥४७॥ आत्माभासमादायनूनंतथाव्यवहारसंभवइत्याह आभा
सस्त्विति तस्यमृषात्वादविद्याकार्यत्वाच्चतथाव्यवहारस्यतमादायनोपपत्तिरित्यर्थः नदर्पणेमुखमस्तिमिथ्यैवात्रदर्पणेमुखमभादित्येवंसर्वसि
द्धबाधानुभवात् अतएवासावविद्याकार्यं ग्रीवास्थमुखेआदर्शस्थत्वंत्वाध्यासिकं नतुवास्तवमितिबोध्यं आभासासत्यत्वंचाकरेप्रपंचितं वि
स्तरभयान्नेहोच्यते ननूक्तंत्रैविध्यंकिंचितेर्वास्तवंनेत्याह अविच्छिन्नंविच्छेदोभेदस्तद्रहितं नन्वेवंत्रिधाचितिरित्यसंगतंतत्राह विच्छेदइति
भेदइत्यर्थः विकल्पतःउपाध्यध्यासकृतइत्यर्थः एवंजीवानांपरस्परंभेदोऽप्यध्यासकृतएवेतिबोध्यं ॥ ४८ ॥

कल्पितभेदसत्त्वेप्रमाणमाह अवच्छिन्नस्येति अवच्छेदोभेदस्तद्वतःआध्यासिकभेदवतः साभासस्याहमस्तत्त्वमस्यादिवाक्यैःपूर्णेनेश्वरेणए
कत्वंप्रतिपाद्यते तथासतिकल्पितभेदेसतिउपपद्यतइतिशेषः सर्वथाभेदाभावेतदानर्थक्यंवास्तवेऽपिभेदेतदानर्थक्यंवास्तवस्यवचनशतनाप्य
निवृत्तिरितिभावः अत्रावच्छिन्नस्यसाभासस्याहमइत्यनेनत्वंपदार्थोदर्शितः पूर्णेनेत्यनेनतत्पदार्थोदर्शितः ॥ ४९ ॥ एतदेवध्वनयंस्तदुपदेश
फलमाह ऐक्येति आत्मनोर्जीवेश्वरयोरैक्यज्ञानमहंब्रह्मेतिज्ञानं यदेति कर्मानुष्ठानात्पापक्षयेसमुत्पन्ने कषायेकर्मभिःपक्केततोज्ञानंप्रवर्त्ततइ
तिस्मृतेः अयंभावः जीवेश्वरयोरुपाधिभिन्नयोरैक्यंश्रुत्योच्यमानंबाधितंसत्तत्त्वंपदयोरुपाधिरहितेलक्षणयाबिंबभूतंशुद्धब्रह्मैक्यपरतयापर्यव
स्यतीतिबोध्यं एतच्चाकरेविस्तरेणप्रपंचितं ब्रह्मैक्यज्ञानफलमाह तदेति तादृशज्ञानेसतिनिर्धर्मकत्वेनचिन्मात्रतयातत्स्वरूपज्ञानात्तत्स्वरूपाज्ञा

अवच्छिन्नस्यपूर्णेनएकत्वंप्रतिपाद्यते॥ तत्त्वमस्यादिवाक्यैश्चसाभासस्याहमस्तथा ॥ ४९ ॥
ऐक्यज्ञानंयदोत्पन्नंमहावाक्येनचात्मनोः॥ तदाविद्यास्वकार्यैश्चनश्यत्येवनसंशयः ॥ ५० ॥

नरूपाविद्यास्वकार्यैःप्रपंचैःसहनश्यत्येवनसंशयः एतेनभृष्टबीजवत्कार्यजननासामर्थ्यमेवतस्याज्ञानेनक्रियतइतिपक्षोऽपास्तः तदुक्तमाचार्यैः
सोऽयमित्यादिवाक्येषुविरोधात्तदिदंतयोः त्यागेनभागयोरेकआश्रयोलक्ष्यतेयथा मायाविद्येविहायैवमुपाधीपरजीवयोः अखंडसच्चिदानं
दपरंब्रह्मैवलक्ष्यते यथासोऽयंदेवदत्तइत्यादौपूर्वानुभूतत्वरूपतत्तायाइदानीमनुभूयमानत्वरूपेदंतायाश्चत्यागेनदेवदत्तस्वरूपमात्रंलक्ष्यते मा
याबुद्धिसमष्टिरविद्याव्यष्टिरूपेतिबोध्यं अपरोक्षज्ञानंमननादिसंस्कृतांतःकरणादेव दृश्यतेत्वग्र्ययाबुद्ध्येतिस्मृतेः अग्र्ययामननादिसंस्कृतया
शास्त्राचार्योपदेशशमदमादिसंस्कृतंमनआत्मदर्शनेकारणमितिगीताभाष्योक्तेश्चेतिदिक् उक्तंचनारदीये तत्त्वमस्यादिवाक्योत्थज्ञानंमोक्ष
स्यसाधनमिति श्रुतिरपि तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेयनायेति ॥ ५० ॥

ईदृशज्ञानस्यमुख्यंसाधनमाह एतदिति मद्भक्तइतिहेतुगर्भविशेषणं मद्भावोमत्सायुज्यं भक्तेःकारणत्वदाढ्यायभक्तिव्यतिरेकेकार्यव्यतिरेकमा
हमद्भक्तीति शास्त्रगर्तेषुशास्त्रबोधितक्रियाकलापरूपगर्तेषु ॥५१॥ ममात्मनःमद्रूपस्यचेतनस्य ॥ ५२ ॥ ५३ ॥ सर्ववेदांतसंग्रहंसर्ववेदांतप्रति
पाद्यार्थसारसंग्रहरूपं ॥ ५४ ॥ ५५ ॥ अतिभ्रष्टत्वोपपादकमतिपापीत्यादि सर्वदेवैःपूज्यंपदंब्रह्मलोकंसलभतइत्यन्वयः ॥ ५६ ॥ इतिश्री

एतद्विज्ञायमद्भक्तोमद्भावायोपपद्यते ॥ मद्भक्तिविमुखानांहिशास्त्रगर्त्तेषुमुह्यतां ॥ नज्ञानंनचमोक्षःस्यात्तेषां
जन्मशतैरपि ॥ ५१ ॥ इदंरहस्यंहृदयंममात्मनोमयैवसाक्षात्कथितंतवानघ ॥ मद्भक्तिहीनायशठायनत्वयादा
तव्यमैंद्राद‌पिराज्यतोऽधिकं ॥ ५२ ॥ श्रीमहादेवउवाच एतत्तेऽभिहितंदेविश्रीरामहृदयंमया ॥ अतिगु
ह्यतमंहृद्यंपवित्रंपापशोधनं ॥ ५३ ॥ साक्षाद्रामेणकथितंसर्ववेदांतसंग्रहं ॥ यःपठेत्सततंभक्त्यासमुक्तोनात्रसं
शयः ॥ ५४ ॥ ब्रह्महत्यादिपापानिबहुजन्मार्जितान्यपि ॥ नश्यंत्येवनसंदेहोरामस्यवचनंयथा ॥ ५५ ॥ योऽति
भ्रष्टोऽतिपापीपरधनपरदारेषुनित्योद्यतोवास्तेयीब्रह्मघ्नमातापितृवधनिरतोयोगिवृंदापकारी ॥ यःसंपूज्याभि
रामंपठतिचहृदयंरामचंद्रस्यभक्त्यायोगींद्रैरप्यलभ्यंपदमिहलभतेसर्वदेवैःसपूज्यं ॥ ५६ ॥ इत्यध्यात्म
रामायणेउमामहेश्वरसंवादेबालकांडेश्रीरामहृदयंनामप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ पार्वत्युवाच
धन्याऽस्म्यनुगृहीताऽस्मिकृतार्थाऽस्मिजगत्प्रभो ॥ विच्छिन्नोमेऽतिसंदेहग्रंथिर्भवदनुग्रहात् ॥ १ ॥

मत्सकलराजविपदुद्धरणसमर्थे० अध्यात्मरामायणेसेतौबालकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ अथपार्वती
शिवोक्तमभिनंदति धन्याऽस्मीति अतिसंदेहग्रंथिः यदिरामःपरंब्रह्मतर्हिकथंतस्यशोकादियदिशोकादिमत्त्वाज्जीवःकथंतदोपास्यत्वमि
त्याकारोमहान्संदेहरूपोग्रंथिः विच्छिन्नःनिवृत्तः ॥ १ ॥

भवःसंसारस्तमपहंतिनाशयति तादृशरामतत्त्वामृतरसायनंरामतत्त्वरूपममृतजनकंरसायनंपिबंत्यामेमनोनतृप्यति ॥ २ ॥ पुनर्विस्तरेणरा
मकथांपृच्छति श्रीरामस्येति स्फुटाक्षरमितिक्रियाविशेषणं ॥ ३ ॥ अथमहादेवस्तांकथांविवक्षुस्तत्रश्रोतृप्रवृत्तयेतत्प्रशंसामाह शृण्विति
आत्मसुइत्यध्यात्मं सर्वात्मसुअंतर्यामितयास्थितस्यरामस्यचरितंतद्वर्णनरूपंकाव्यं ॥ ४ ॥ तापत्रयंआध्यात्मिकाधिभौतिकाधिदैविकाख्यंदुः

त्वन्मुखाद्गलितंरामतत्त्वामृतरसायनं॥ पिबंत्यामेमनोदेवनतृप्यतिभवापहं ॥ २ ॥ श्रीरामस्यकथात्वत्तःश्रुता
संक्षेपतोमया॥इदानींश्रोतुमिच्छामिविस्तरेणस्फुटाक्षरं ॥ ३ ॥ श्रीमहादेवउवाच शृणुदेविप्रवक्ष्यामि
गुह्याद्गुह्यतरंमहत्॥ अध्यात्मरामचरितंरामेणोक्तंपुरामम ॥ ४ ॥ तदद्यकथयिष्यामिशृणुतापत्रयापहं ॥ यच्छ्रु
त्वामुच्यतेजंतुरज्ञानोत्थमहाभयात्॥ प्राप्नोतिपरमामृद्धिंदीर्घायुःपुत्रसंततिं ॥ ५ ॥ भूमिर्भारेणमग्नादशवदन
मुखाशेषरक्षोगणानांधृत्वागोरूपमादौदिविजमुनिजनैःसाकमब्जासनस्य ॥ गत्वालोकंरुदंतीव्यसनमुपगतं
ब्रह्मणेप्राहसर्वंब्रह्माध्यात्वामुहूर्तंसकलमपिहृदावेदशेषात्मकत्वात् ॥ ६ ॥

खत्रयं तत्राद्यंरोगादिजंकामक्रोधादिजंच द्वितीयंचोरादिनिमित्तं तृतीयंमहाग्रहावेशनिमित्तं ॥ ५ ॥ कथांप्रस्तौति भूमिरिति रक्षोगणानां
भारेणमग्नास्वाधारजलेइतिशेषः गोरूपंधृत्वादेवादिभिःसहाब्जासनस्यब्रह्मणोलोकंगत्वाब्रह्मणेउपगतंस्वयंप्राप्तंसर्वंव्यसनंप्राह सचमुहूर्तं
ध्यात्वासकलंदुःखकारणंतन्निवृत्तिकारणंचहृदावेदअजानात् तत्रहेतुः अशेषात्मकत्वात् सर्वस्वसृज्यसमष्टिरूपत्वादित्यर्थः ॥ ६ ॥

तस्मादिति अनंतरमितिशेषः तदनंतरंध्यानानंतरमित्यर्थः देव्याचभूम्याचसहितइतिशेषः अखिललोकहृत्स्थंसर्वांतर्यामिणमित्यर्थः सवा एषआत्माहृदीतिश्रुतेः अजरंएषमहानात्माअजरइतिश्रुतेः सर्वज्ञंयःसर्वज्ञःससर्वविदितिश्रुतेः ईशंएषसर्वेश्वरइतिश्रुतेः हरिंहराम्यघंहिस्मर्तॄणां हविर्भागंक्रतौतथा वर्णश्चमेहरिर्यस्मात्तस्माद्धरिरहंस्मृतइतिश्रुतेः श्रुतिसिद्धनिर्मलहरिविष्णुप्रभृतिपदयुक्तैःपुराणोद्भवैःस्तोत्रैरित्यर्थः भक्ति मूलिकैवचगद्गदवाणीभक्तिजत्वादेवानंदबाष्पाणांविमलत्वं ॥ ७ ॥ सहस्रांशुसहस्रंसूर्यसहस्रं ॥ ८ ॥ अकृतात्मनांज्ञानहीनानांतेजोरा

तस्मात्क्षीरसमुद्रतीरमगमद्ब्रह्माथदेवैर्वृतोदेव्याचाखिललोकहृत्स्थमजरंसर्वज्ञमीशंहरिं ॥ अस्तौषीच्छ्रुतिसिद्ध निर्मलपदैःस्तोत्रैःपुराणोद्भवैर्भक्त्यागद्गदयागिरातिविमलैरानंदबाष्पैर्वृतः ॥ ७ ॥ ततःस्फुरत्सहस्रांशुसहस्र सदृशप्रभः॥ आविरासीद्धरिःप्राच्यांदिशांव्यपनयंस्तमः॥८॥ कथंचिद्दृष्टवान्ब्रह्मादुर्दर्शमकृतात्मनां ॥ इंद्रनी लप्रतीकाशंस्मितास्यंपद्मलोचनं॥ ९ ॥ किरीटहारकेयूरकुंडलैःकटकादिभिः ॥ विभ्राजमानंश्रीवत्सकौस्तुभप्र भयान्वितं॥ १० ॥ स्तुवद्भिःसनकाद्यैश्चपार्षदैःपरिवेष्टितं॥ शंखचक्रगदापद्मवनमालाविराजितं ॥ ११ ॥ स्व र्णयज्ञोपवीतेनस्वर्णवर्णांबरेणच॥ १२॥ श्रियाभूम्याचसहितंगरुडोपरिसंस्थितं॥ हर्षगद्गदयावाचास्तोतुंसमु पचक्रमे॥ १३॥ ब्रह्मोवाच नतोऽस्मितेपदंदेवप्राणबुद्धींद्रियात्मभिः ॥ यच्चिंत्यतेकर्मपाशाद्धृदिनित्यं मुमुक्षुभिः ॥ १४ ॥माययागुणमय्यात्वंसृजस्यवसिलुंपसि॥ जगत्तेननतेलेपआनंदानुभवात्मनः॥ १५ ॥

शित्वात्कथंचिद्दर्शनं ॥ ९ ॥ १० ॥ पार्षदगणाः॥ ११ ॥ स्वर्णवर्णांबरंपीतांबरं ॥ १२ ॥ १३ ॥ प्राणःक्रियाशक्तिप्रधानोंऽशः तेनकर्मे द्रियसंग्रहः बुद्धींद्रियाणिश्रोत्रादीनि आत्मामनस्तैःकारणभूतैर्नतोऽस्मि कर्मपाशान्मुमुक्षुभिर्यत्पदंहृदिचिंत्यतेइत्यन्वयः॥ १४ ॥ गुणमय्या सत्त्वरजस्तमोगुणयुक्तयामाययास्वसचिवयाजगत्सृजसि तेनस्रष्टृत्वादिनातेलेपोहंस्रष्टेत्याद्यभिमानोन तत्रहेतुगर्भंविशेषणं आनंदानुभवात्म नःआनंदाभिन्नानुभवरूपआत्मायस्यतस्य एवंचस्वस्वरूपापरोक्षेणसर्वभ्रमिथ्यादृष्ट्यातदभिमामरहितइतिभावः ॥ १५ ॥

दुष्टानांमलिनांतःकरणानां शुद्धात्मताशुद्धांतःकरणता तेयशसितवगुणकीर्तने ॥ १६ ॥ सात्वतैर्भक्तैःस्वतोऽतर्हृदयेसद्योदृष्टस्तवांघ्रिर्मेचित्तदोषापनुत्तयेऽस्त्वितिशेषः ॥ १७ ॥ स्वार्थसिध्यर्थंस्वकर्तव्यसृष्ट्यादिसिध्यर्थं ज्ञानिभिः ज्ञानेच्छुभिः ॥ १८ ॥ सपत्निवत् आर्षोह्रस्वः सपत्नीवदित्यर्थः ॥ १९ ॥ यतःस्वचरणभक्तेषुतवलक्ष्मीतोऽप्यधिकाभक्तिःप्रीतिः अतःसारवेदिनस्त्वद्भक्तास्त्वच्चरणयोर्भक्तिमेववांछंति ॥ २० ॥

तथाशुद्धिर्नदुष्टानांदानाध्ययनकर्मभिः॥ शुद्धात्मतातेयशसिसदाभक्तिमतांयथा॥१६॥ अतस्तवांघ्रिर्मेदृष्टश्चित्तदोषापनुत्तये॥ सद्योऽतर्हृदयेनित्यंमुनिभिःसात्वतैर्वृतः॥ १७॥ ब्रह्माद्यैःस्वार्थसिद्ध्यर्थमस्माभिःपूर्वसेवितः॥ अपरोक्षानुभूत्यर्थंज्ञानिभिर्हृदिभावितः॥१८॥ तवांघ्रिपूजानिर्माल्यतुलसीमालयाविभो॥ स्पर्धतेवक्षसिपदंलब्ध्वापिश्रीःसपत्निवत्॥१९॥ अतस्त्वत्पादभक्तेषुतवभक्तिःश्रियोऽधिका॥भक्तिमेवाभिवांछंतित्वद्भक्ताःसारवेदिनः॥ २० ॥ अतस्त्वत्पादकमलेभक्तिरेवसदाऽस्तुमे ॥ संसारामयतप्तानांभेषजंभक्तिरेवते ॥ २१ ॥ इतिब्रुवंतंब्रह्माणंबभाषेभगवान्हरिः ॥ किंकरोमीतितंवेधाःप्रत्युवाचातिहर्षितः ॥ २२ ॥ भगवन्रावणोनामपौलस्त्यतनयोमहान्॥ राक्षसानामधिपतिर्मद्दत्तवरदर्पितः॥२३॥ त्रिलोकींलोकपालांश्चबाधतेविश्वबाधकः॥ मानुषेणमृतिस्तस्यमयाकल्याणकल्पिता॥२४॥ अतस्त्वंमानुषोभूत्वाजहिदेवरिपुंप्रभो॥ श्रीभगवानुवाच कश्यपस्यवरोदत्तस्तपसातोषितेनमे॥ २५॥

अतइति यतस्तेभक्तिरेवसंसाररोगभेषजमतइत्यन्वयः॥२१॥ ब्रह्माणंहरिःकिंकरोमीतिबभाषे अथतंहरिंवेधाःप्रत्युवाचेतिसंबंधः ॥२२॥ रावणइति रावयामासलोकान्यस्तस्माद्रावणउच्यतेइतिभारतोक्तेः मयाब्रह्मणादत्तेनवरेणदर्पितोऽहंकृतः वरश्चमनुष्यातिरिक्ताबध्यत्वरूपः ॥२३॥ तदेवाह मानुषेणेति ॥२४॥ कश्यपस्यतपसातोषितेनमेमयातस्मैवरोदत्तः यत्त्वंयाचिष्यसितत्तुभ्यंदास्यामीतिकृतवरदानप्रतिज्ञइत्यर्थः॥२५॥

ततस्तेनाहंपुत्रभावाययाचितोमयाचतत्तथेत्यंगीकृतमित्यर्थः ॥ २६ ॥ अहंतस्यपुत्रतामेत्यपुत्रतांप्राप्स्यामीतिसंकल्प्य कौसल्यायामितरयोःसुमित्राकैकेय्योरहमेवात्मानंचतुर्धाचतुःप्रकारावयवसंस्थानैरामलक्ष्मणभरतशत्रुघ्नेतिचतुःप्रकारनामभिश्चसृजामिस्रक्ष्यामि वर्तमानसामीप्येलट् ॥ २७ ॥ योगमायेति योगोमत्संकल्पस्तद्वशवर्तिनीमायेत्यर्थः नाहंप्रकाशःसर्वस्ययोगमायासमावृतइतिगीतोक्तेः तयासार्धंतां

याचितःपुत्रभावायतथेत्यंगीकृतंमया ॥ सइदानींदशरथोभूत्वातिष्ठतिभूतले ॥ २६ ॥ तस्याहंपुत्रतामेत्यकौसल्यायांशुभेदिने ॥ चतुर्धात्मानमेवाहंसृजामीतरयोःपृथक् ॥ २७ ॥ योगमायाऽपिसीतेतिजनकस्यगृहेतदा ॥ उत्पत्स्यतेतयासार्धंसर्वंसंपादयाम्यहं ॥ २८ ॥ इत्युक्त्वाऽतर्दधेविष्णुर्ब्रह्मादेवानथाब्रवीत् ब्रह्मोवाच विष्णुर्मानुषरूपेणभविष्यतिरघोःकुले ॥ २९ ॥ यूयंसृजध्वंसर्वेऽपिवानरेष्वंशसंभवान् ॥ विष्णोःसहायंकुरुतयावत्स्थास्यतिभूतले ॥ ३० ॥ इतिदेवान्समादिश्यसमाश्वास्यचमेदिनीं ॥ ययौब्रह्मास्वभवनंविज्वरःसुखमास्थितः ॥ ३१ ॥ देवाश्चसर्वेहरिरूपधारिणः स्थिताःसहायार्थमितस्ततोहरेः ॥ महाबलाःपर्वतवृक्षयोधिनःप्रतीक्षमाणाभगवंतमीश्वरं ॥ ३२ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेद्वितीयःसर्गः ॥ २ ॥ ६ ॥ श्रीरामचंद्रार्पणमस्तु श्रीमहादेवउवाच अथराजादशरथःश्रीमान्सत्यपरायणः ॥ अयोध्याधिपतिर्वीरः सर्वलोकेषुविश्रुतः ॥ १ ॥

सहकारिणींप्राप्य ॥ २८ ॥ २९ ॥ अंशसंभवान्स्वस्वांशसंभवान्वानरानित्यर्थः ॥ ३० ॥ ३१ ॥ इतस्ततःपर्वतवनेषु ॥ ३२ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबि० श्रीरामवर्मणःकृतौअध्यात्मरामायणसेतौबालकांडेद्वितीयःसर्गः ॥ २ ॥ ॥६॥ ॥६॥ अथरामजन्माह अथेति ॥ १ ॥

॥ २ ॥ सर्वंदुःखायेति मनुष्यलोकःपुत्रेणैवजय्योनान्येनकर्मणेतिश्रुतेः ॥ ३ ॥ ४ ॥ शांताभर्तारंशांतालोमपाददशरथस्यांगपतेरेतद्दशरथमि
त्रस्यकन्यानेनराज्ञाततोलब्ध्वास्वदुहितृत्वेनकल्पितेत्याख्यायिका पुत्रकामस्यकर्तव्येष्टिःपुत्रकामेष्टिः ॥ ५ ॥ मुनिंऋष्यशृंगं मुनिभिर्वसि

सोऽनपत्यत्वदुःखेनपीडितोगुरुमेकदा॥ वसिष्ठंस्वकुलाचार्यमभिवाद्येदमब्रवीत्॥ २ ॥ स्वामिन्पुत्राःकथंमेस्युः
सर्वलक्षणलक्षिताः ॥ पुत्रहीनस्यमेराज्यंसर्वंदुःखायकल्पते ॥ ३ ॥ ततोऽब्रवीद्वसिष्ठस्तंभविष्यंतिसुतास्तव॥
चत्वारःसत्त्वसंपन्नालोकपालाइवापराः ॥ ४ ॥ शांताभर्तारमानीयऋष्यशृंगंतपोधनं ॥ अस्माभिःसहितःपुत्र
कामेष्टिंशीघ्रमाचर॥ ५ ॥ तथेतिमुनिमानीयमंत्रिभिःसहितःशुचिः ॥ यज्ञकर्मसमारेभेमुनिभिर्वीतकल्मषैः ॥
॥ ६ ॥ श्रद्धयाहूयमानेग्नौतप्तजांबूनदप्रभः॥ पायसंस्वर्णपात्रस्थंगृहीत्वोवाचहव्यवाट् ॥ ७ ॥ गृहाणपायसंदि
व्यंपुत्रीयंदेवनिर्मितं॥ लप्स्यसेपरमात्मानंपुत्रत्वेननसंशयः ॥ ८ ॥ इत्युक्त्वापायसंदत्वाराज्ञेसोंऽतर्दधेऽनलः॥
ववंदेमुनिशार्दूलौराजालब्धमनोरथः॥ ९॥ वसिष्ठऋष्यशृंगाभ्यामनुज्ञातोददौहविः॥ कौसल्यायैसकैकेय्यै अ
र्धमर्धंप्रयत्नतः॥ १० ॥

ष्ठाद्यैः ॥ ६ ॥ तप्तजांबूनदंकृतमलापहरणंस्वर्णंतद्वत्कांतिर्हव्यवाडग्निः अयमेवप्राजापत्यंनरंविद्धिमामिहाभ्यागतंनृपेतिवाल्मीकीयेप्राजाप
त्यशब्देनोक्तः ॥ ७ ॥ पुत्रीयंपुत्रायहितं ॥ ८ ॥ मुनिशार्दूलौवसिष्ठऋष्यशृंगौ ॥ ९ ॥ १० ॥

जगृधुःभृशंतदिच्छावती गृधुअभिकांक्षायामित्यतोयङ्लुगंतादागमशास्त्रानित्यत्वेनरुगभावेत्रसिगृधिधृषिक्षिपेःक्रुरितिक्रौरूपं पौत्रिकंचरुमि तिषष्ठ्यभावआर्षः पुत्रःप्रयोजनंयस्यतादृशंचरुमित्यर्थः स्वभागार्धंस्वशब्दआत्मीयवाची स्वीयस्यभागःस्वभागस्तदर्धंस्वदत्तस्यचतुर्थांशमि त्यर्थः एवमग्रेऽपि वाल्मीकीयेऽपि कौसल्यायैनरपतिःपायसार्धंददौतदा अर्धादर्धंददौचापिसुमित्रायैनराधिपः कैकेय्यैचावशिष्टार्धंददौपुत्रा र्थकारणात् प्रददौचावशिष्टार्धंपायसस्यामृतोपमं अनुचिंत्यसुमित्रायैपुनरेवमहीपतिरितिश्लोकयोःकौसल्यायैदत्तार्धस्यार्धादर्धंचतुर्थांशरू पंसुमित्रायैददौ कौसल्ययादापितवानित्यर्थःकार्यः अर्धादित्यत्रकस्यार्धादित्याकांक्षायामुपस्थितकौसल्यादत्तपायसार्धान्वयस्यैवौचित्यात् अंतर्भावितण्यर्थत्वेमानंचैतदेकवाक्यतैव एवंकैकेय्यैकौसल्यादत्तार्धादवशिष्टमर्धंददौ ततःकौसल्यादत्तावशिष्टस्यकैकेय्यैदत्तस्ययदर्धंतदर्धं विचार्यपुनरपिसुमित्रायैददौप्रापयामासेत्यर्थः अत्रचार्धपदावृत्तिर्बोध्या एवंहिएतद्ग्रंथेनतस्यैकवाक्यताभवति तत्तद्दत्तभागजन्यस्यतत्तत्पुत्रा

## ततःसुमित्रासंप्राप्ताजगृध्नुःपौत्रिकंचरुं॥ कौसल्यातुस्वभागार्धंददौतस्यैमुदान्विता॥ ११॥

धीनतौचित्येनैवमेवोचितंसेव्यसेवकभावलाभार्थं ततस्ततोन्यूनांशत्वस्यलक्ष्मणशत्रुघ्नयोरौचित्याच्चात्रत्यस्वभागार्धमितियथाश्रुतंनव्याख्या तंकालिदासोऽपि सतेजोवैष्णवंपत्न्योर्विभेजेचरुसंज्ञितं द्यावापृथिव्योःप्रत्यग्रमहर्पतिरिवातपं अर्चितातस्यकौसल्याप्रियाकेकयवंशजा अतः संभावितांताभ्यांसुमित्रामैच्छदीश्वरः तेबहुज्ञस्यचित्तज्ञेपत्न्यौपत्युर्महीक्षितः चरोरर्धार्धभागाभ्यांतामयोजयतामुभे साहिप्रणयवत्यासीत्स पत्न्योरुभयोरपीत्याह चरोरर्धार्धभागाभ्यामित्यस्यस्वस्वलब्धचरुभागाभ्यामित्यर्थः एवंचरामभरतौत्रिच्यंशौलक्ष्मणशत्रुघ्नावष्टमांशावि तिसिद्धं वाल्मीकीयव्याख्यातारौकतकाचार्यश्रीरामाचार्यावप्येवमेवोचतुः अन्येतुतद्व्याख्यातारःकौसल्यायैसंपूर्णपायसार्धंददौ ततःपा त्रस्थादर्धादर्धंसर्वपायसचतुर्थांशंसुमित्रायैदत्तवान् स्वयमेवततःपात्रेऽवशिष्टस्यचतुर्थांशस्यार्धमष्टमांशंकैकेय्यैदत्तवान् ततःपुनरवशिष्टम र्धमष्टमांशरूपंपुनरपिसुमित्रायैदत्तवानितियथाश्रुतग्राहिणोव्याचक्षते तेषामेतद्विरोधोरामलक्ष्मणयोरेवभरतशत्रुघ्नयोरेवैकवाक्यतायाबी जालाभश्चावशिष्टार्धपदेक्कचित्षष्ठीतत्पुरुषःक्वचित्कर्मधारयइतिवैषम्यंच ॥ ११॥

॥ ४३ ॥ सैवावस्थामुक्तिर्मूलाविद्यालयएवमुक्तिरित्यर्थः ॥ ४४ ॥ आत्मनःशुद्धस्यसर्वथाऽविद्याऽस्पृष्टस्यभेदरहितस्यऐक्यज्ञानमविद्यालय इत्यपिव्यवहारःकंठचामीकरन्यायेनगौणइत्यर्थः यथाकंठस्थंचामीकरमन्यत्रान्विष्यतिनष्टंतदितिबुध्या अरेकंठेएवास्तेइतिकेनचिदुक्ते लब्धंतदितिव्यवहरतितद्वत् एवंज्ञानादिसहितंमेपरात्मनोमोक्षस्वरूपंतेकथितं यामोक्षावस्थोक्तातदेवमेस्वरूपमित्यर्थः मद्भक्तिविमुखात्मनां मत्प्रेमहीनानां ॥ ४५ ॥ यथासनेत्राणामपिरात्रौपदंचोरादिपदंनदृश्यतेनदृग्विषयोभवति दीपसमेतानांतुतेषांतत्तद्दृग्विषयोभवति ॥ ४६ ॥

आत्मनोर्जीवपरयोर्मूलाविद्यातदैवहि ॥ लीयतेकार्यकरणैःसहैवपरमात्मनि ॥४३॥ सावस्थामुक्तिरित्युक्ताह्यु पचारोऽयमात्मनि ॥ इदंमोक्षस्वरूपंतेकथितंरघुनंदन ॥ ४४ ॥ज्ञानविज्ञानवैराग्यसहितंमेपरात्मनः ॥ किंत्वेतद्दु र्लभंमन्येमद्भक्तिविमुखात्मनां ॥ ४५॥ चक्षुष्मतामपियथारात्रौसम्यङ्नदृश्यते ॥ पदंदीपसमेतानांदृश्यतेसम्य गेवहि ॥ ४६ ॥ एवंमद्भक्तियुक्तानामात्मासम्यक्प्रकाशते ॥ मद्भक्तेःकारणंकिंचिद्वक्ष्यामिशृणुतत्त्वतः ॥ ४७॥ मद्भक्तसंगोमत्सेवामद्भक्तानांनिरंतरं ॥ एकादश्युपवासादिममपर्वानुमोदनं॥४८॥ मत्कथाश्रवणेपाठेव्याख्या नेसर्वदारतिः ॥ मत्पूजापरिनिष्ठाचममनामानुकीर्तनं ॥४९॥ एवंसततयुक्तानांभक्तिरव्यभिचारिणी ॥ मयिसं जायतेनित्यंततःकिमवशिष्यते॥५०॥ अतोमद्भक्तियुक्तस्यज्ञानंविज्ञानमेवच ॥ वैराग्यंचभवेच्छीघ्रंततोमुक्ति मवाप्नुयात् ॥५१॥ कथितंसर्वमेतत्तेतवप्रश्नानुसारतः॥ अस्मिन्मनःसमाधाययस्तिष्ठेत्सतुमुक्तिभाक् ॥५२॥

एवंभक्तियुक्तानांसम्यक्प्रकाशोभवति ॥ ४७ ॥ अथप्रतिज्ञातानिभक्तिकारणान्याह मद्भक्तेति मद्भक्तानांनिरंतरमित्यत्रसेवेत्यनुषज्यते एकादश्युपवासादि तदनुष्ठानमित्यर्थः ममयानिपर्वाणिउत्सवदिनानिरामनवम्यादीनितेषामनुमोदनंतेषूत्सवकरणं ॥ ४८॥ परिनिष्ठातत्परता ॥ ४९ ॥ ततोमद्भक्तेरधिकंज्ञानसाधनंकिमवशिष्यते नकिमप्यस्तीत्यर्थः ॥ ५० ॥ तदेवस्फुटमाह अतइति ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ अज्ञानपटलकृतंध्वांतमित्यर्थः ॥ ५४ ॥ ममभक्तानामतएवयोगिनांमद्भक्तियोगवतांसुविमलंस्वांतंहृदयंयेषांतेचतेऽतिशांतात्मान
श्चातिशांतचित्ताश्चतेषां मत्सेवायामभिरतःप्रीतियुतआत्माचित्तंयेषांविमलज्ञानरूपआत्मायेषांज्ञानविषयस्तेषामुद्यताज्ञानविषयेउद्यमशा
लिनीमतिर्यस्यसः सतांसेवनेऽनन्यधीस्तत्परइत्यर्थः तस्यानिशमहंदृश्योभवे आत्मनेपदमार्षं नान्यथातादृशसंगंविनानमद्दर्शनंनापिमोक्षइ

नवक्तव्यमिदंयत्नान्मद्भक्तिविमुखायहि ॥ मद्भक्तायप्रदातव्यमाहूयापिप्रयत्नतः ॥ ५३ ॥ यइदंतुपठेन्नित्यंश्रद्धा
भक्तिसमन्वितः ॥ अज्ञानपटलध्वांतंविधूयपरिमुच्यते ॥ ५४ ॥ भक्तानांममयोगिनांसुविमलस्वांतातिशांता
त्मनांमत्सेवाभिरतात्मनांचविमलज्ञानात्मनांसर्वदा ॥ संगंयःकुरुतेसदोद्यतमतिःसत्सेवनानन्यधीर्मोक्षस्तस्य
करेस्थितोऽहमनिशंदृश्योभवेनान्यथा ॥ ५५ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडे
चतुर्थःसर्गः ॥ ४ ॥ . ॥ ७ ॥ ॥ ७ ॥ तस्मिन्कालेमहारण्येराक्षसीकामरूपिणी ॥ विचचारमहास
त्वाजनस्थाननिवासिनी ॥ १ ॥ एकदागौतमीतीरेपंचवट्याःसमीपतः ॥ पद्मवज्रांकुशांकानिपदानिजगती
पतेः ॥ २ ॥ दृष्ट्वाकामपरीतात्मापादसौंदर्यमोहिता ॥ पश्यंतीसाशनैरायाद्राघवस्यनिवेशनं ॥ ३ ॥ तत्रसातंर
मानाथंसीतयासहसंस्थितं ॥ कंदर्पसदृशंरामंदृष्ट्वाकामविमोहिता ॥ ४ ॥ राक्षसीराघवंप्राहकस्यत्वंकःकिमा
श्रमे ॥ युक्तोजटावल्कलाद्यैःसाध्यंकिंतेऽत्रमेवद ॥ ५ ॥

त्यर्थः ॥ ५५ ॥ इत्यध्यात्मरामायणेसेतौअ० चतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ तस्मिन्निति महासत्वामहाबला ॥ १ ॥ पद्मे
त्यादितच्चिन्हानितद्युक्तानीत्यर्थः ॥ २ ॥ कामपरीतात्माकामव्याप्तचित्ता पश्यंतीतत्पदानीत्यर्थः तेनैवचिन्हेनराघवाश्रममायात् ॥ ३ ॥
॥ ४ ॥ कःकिंनामा जटावल्कलाद्यैर्युक्तःआश्रमेकिंवससीतिशेषः अत्रवासेनकिंसाध्यंतच्चवद ॥ ५ ॥

अथतत्प्रश्नंविनैवतज्जिज्ञासांसंभाव्यस्वस्योत्तमकुलत्वादिचबोधयितुंस्वस्वरूपमाह अहमिति ॥ ६ ॥ खरेणभ्रात्रासहितेत्यन्वयः सर्वंवनमिति शेषः ॥७॥८॥९॥ तेकिंकृत्यंमयाकार्यंकरणीयंतद्ब्रूहीत्यन्वयः ॥१०॥ गिरिकानने समाहारद्वंद्वः गिरिषुकाननेषुचेत्यर्थः ॥११॥ अनपायिनी



अहंशूर्पणखानामराक्षसीकामरूपिणी ॥ भगिनीराक्षसेंद्रस्यरावणस्यमहात्मनः ॥ ६ ॥ खरेणसहिताभ्रात्रा वसाम्यत्रैवकानने ॥ राज्ञादत्तंचमेसर्वंमुनिभक्षावसाम्यहं ॥ ७ ॥ त्वांतुवेदितुमिच्छामिवदमेवदतांवर ॥ तामाहरामनामाहमयोध्याधिपतेःसुतः ॥ ८ ॥ एषामेसुंदरीभार्यासीताजनकनंदिनी ॥ सतुभ्राताकनीयान्मेलक्ष्मणोऽतीवसुंदरः ॥ ९ ॥ किंकृत्यंतेमयाब्रूहिकार्यंभुवनसुंदरि ॥ इतिरामवचःश्रुत्वाकामार्तासाऽब्रवीदिदं ॥ १० ॥ एहिराममयासार्धंरमस्वगिरिकानने ॥ कामार्ताऽहंनशक्नोमित्यक्तुंत्वांकमलेक्षणं ॥ ११ ॥ रामःसीतांकटाक्षेणपश्यन्सस्मितमब्रवीत् ॥ भार्याममैषाकल्याणीविद्यतेत्यनपायिनी ॥ १२ ॥ त्वंतुसापत्न्यदुःखेनकथंस्थास्यसिसुंदरि ॥ बहिरास्तेममभ्रातालक्ष्मणोतीवसुंदरः ॥ १३ ॥ तवानुरूपोभवितापतिस्तेनैवसंचर ॥ इत्युक्तालक्ष्मणंप्राहपतिर्मेभवसुंदर ॥ १४ ॥ भ्रातुराज्ञांपुरस्कृत्यसंगच्छावोऽद्यमाचिरं ॥ इत्याहराक्षसीघोरालक्ष्मणंकाममोहिता ॥ ॥ १५ ॥ तामाहलक्ष्मणःसाध्विदासोऽहंतस्यधीमतः ॥ दासीभविष्यसित्वंतुततोदुःखतरंनुकिं ॥ १६ ॥ तमेवगच्छभद्रंतेसतुराजाऽखिलेश्वरः ॥ तच्छ्रुत्वापुनरप्यागाद्राघवंदुष्टमानसा ॥ १७ ॥ क्रोधाद्रामकिमर्थंमांभ्रामयस्यनवस्थितः ॥ इदानीमेवतांसीतांभक्षयामितवाग्रतः ॥ १८ ॥

सर्वथात्यक्तुमशक्या क्षणमप्यविभक्ताच ॥ १२ ॥ तदेवाह त्वंत्विति ॥ १३ ॥ तेनैवसहसंचर गिरिकाननेष्वितिशेषः ॥ १४ ॥ संगच्छावः मिथुनीभावंप्राप्नुवः ॥ १५ ॥ १६ ॥ १७ ॥ क्रोधात्अवददितिशेषः किमवदत्तदाह रामेत्यादि अनवस्थितःसत्येवचसीतिशेषः यत्प्रीत्यामामेवंभ्रामयसितामित्यर्थः १८ ॥

तांपरिगृह्यधृत्वा ॥१९॥२०॥ परुषाक्षराखरधिक्कृतिबोधककठोरवाक् ॥२१॥ एवंनासाकर्णविहीना तन्मेवद तमहंवधिष्यामीत्यन्वयः ॥२२॥
॥२३॥ तेनरामेणचोदितःप्रेरितः ॥२४॥२५॥ प्रागात्प्रस्थितः ॥२६॥ रामस्यसमीपंगंतुंचोदयामास वधकांक्षयेत्यस्यरामस्यवधकांक्षयेत्यर्थः

इत्युक्त्वाविकटाकाराजानकीमनुधावती ॥ ततोरामाज्ञयाखड्गमादायपरिगृह्यतां ॥ १९ ॥ चिच्छेदनासांकर्णौ
चलक्ष्मणोऽलघुविक्रमः ॥ ततोघोरध्वनिंकृत्वारुधिराक्तवपुर्द्रुतं ॥ २० ॥ क्रंदमानापपाताग्रेखरस्यपरुषाक्षरा॥
किमेतदितितामाहखरःखरतराक्षरः ॥ २१ ॥ केनैवंकारिताऽसित्वंमृत्योर्वक्त्रानुवर्तिना॥ वदमेतंवधिष्यामिकाल
कल्पमपिक्षणात् ॥ २२॥तमाहराक्षसीरामःसीतालक्ष्मणसंयुतः॥ दंडकंनिर्भयंकुर्वन्नास्तेगोदावरीतटे॥ २३॥मा
मेवंकृतवांस्तस्यभ्रातातेनैवचोदितः ॥ यदित्वंकुलजातोऽसिवीरोसिजहितौरिपू॥ २४॥ तयोस्तुरुधिरंपास्येभक्ष
यैतौसुदुर्मदौ ॥ नोचेत्प्राणान्परित्यज्ययास्यामियमसादनं॥ २५॥ तच्छ्रुत्वात्वरितंप्रागात्खरःक्रोधेनमूर्च्छितः ॥
चतुर्दशसहस्राणिरक्षसांभीमकर्मणां॥२६॥चोदयामासरामस्यसमीपंवधकांक्षया॥ खरश्चत्रिशिराश्चैवदूषण
श्चैवराक्षसः ॥ २७॥ सर्वेरामंययुःशीघ्रंनानाप्रहरणोद्यताः ॥ श्रुत्वाकोलाहलंतेषांरामःसौमित्रिमब्रवीत् ॥ २८॥
श्रूयतेविपुलःशब्दोनूनमायांतिराक्षसाः ॥ भविष्यतिमहद्युद्धंनूनमद्यमयासह ॥ २९॥ सीतांनीत्वागुहांगत्वा
तत्रतिष्ठमहाबल ॥ हंतुमिच्छाम्यहंसर्वान्राक्षसान्घोररूपिणः ॥ ३० ॥ अत्रकिंचिन्नवक्तव्यंशापितोऽसिममो
परि ॥ तथेतिसीतामादायलक्ष्मणोगह्वरंययौ ॥ ३१ ॥

स्ववधेच्छयेतितत्त्वार्थः ॥ २७ ॥ २८ ॥ २९ ॥ सीतांनीत्वागृहीत्वेत्यर्थः ॥ ३० ॥ शापितोऽसिममोपरिमदीयःशपथइत्यर्थः ॥ ३१ ॥

यत्तःसंनद्धः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ शस्त्रव्रणानिमार्जितरुधिराणिपूर्णगर्तानिसत्यसंकल्पत्वाच्चकारेत्यर्थः ॥ ३७ ॥ रावण
स्यपादसन्निधावुर्व्यांपपातेत्यन्वयः ॥ ३८ ॥ ३९ ॥ विरूपकरणंवैरूप्यमितियावत् ॥ ४० ॥ अथवाकुबेरेणकृतंतद्ब्रूहीत्यन्वयः ॥ ४१ ॥



रामःपरिकरंबद्ध्वाधनुरादायनिष्ठुरं ॥ तूणीरावक्षयशरौबद्ध्वायत्तोऽभवत्प्रभुः ॥ ३२ ॥ ततआगत्यरक्षांसिराम
स्योपरिचिक्षिपुः ॥ आयुधानिविचित्राणिपाषाणान्पादपानपि ॥ ३३ ॥ तानिचिच्छेदरामोऽपिलीलयातिलशः
क्षणात् ॥ ततोबाणसहस्रेणहत्वातान्सर्वराक्षसान् ॥ ३४ ॥ खरंत्रिशिरसंचैवदूषणंचैवराक्षसं ॥ जघानप्रहरा
र्धेनसर्वानेवरघूत्तमः ॥ ३५ ॥ लक्ष्मणोऽपिगुहामध्यात्सीतामादायराघवे ॥ समर्प्यराक्षसान्दृष्ट्वाहतान्विस्मय
माययौ ॥ ३६ ॥ सीतारामंसमालिंग्यप्रसन्नमुखपंकजा ॥ शस्त्रव्रणानिचांगेषुममार्जजनकात्मजा ॥ ३७ ॥
साऽपिदुद्रावदृष्ट्वातान्हतान्राक्षसपुंगवान् ॥ लंकांगत्वासभामध्येक्रोशंतीपादसन्निधौ ॥ ३८ ॥ रावणस्यपपा
तोर्व्यांभगिनीतस्यरक्षसः ॥ दृष्ट्वातांरावणःप्राहभगिनींभयविह्वलां ॥ ३९ ॥ उत्तिष्ठोत्तिष्ठवत्सेत्वंविरूपकरणंत
व ॥ कृतंशक्रेणवाभद्रेयमेनवरुणेनवा ॥ ४० ॥ कुबेरेणाथवाब्रूहिभस्मीकुर्यांक्षणेनतं ॥ राक्षसीतमुवाचेदंत्वं
प्रमत्तोविमूढधीः ॥ ४१ ॥ पानासक्तःस्त्रीविजितःषंढःसर्वत्रलक्ष्यसे ॥ चारचक्षुर्विहीनस्त्वंकथंराजाभविष्यसि ॥
॥ ४२ ॥ खरश्चनिहतःसंख्येदूषणस्त्रिशिरास्तथा ॥ चतुर्दशसहस्राणिराक्षसानांमहात्मनां ॥ ४३ ॥ निहतानिक्ष
णेनैवरामेणासुरशत्रुणा ॥ जनस्थानमशेषेणमुनीनांनिर्भयंकृतं ॥ नजानासिविमूढस्त्वमतएवमयोच्यते ॥
॥ ४४ ॥ रावणउवाच कोवारामःकिमर्थंवाकथंतेनासुराहताः ॥ सम्यक्कथयमेतेषांमूलघातंकरोम्यहं ॥ ४५ ॥



॥ ४२ ॥ ४३ ॥ ४४ ॥ किमर्थंकस्मैप्रयोजनायकथंकेनप्रकारेणासुराःखरादयोहताः तेषांरामादीनां ॥ ४५ ॥

पंचवटीनामआश्रमइतिशेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥ द्योतयंतीशोभयंती ॥ ४९ ॥ ५० ॥ ५१ ॥ राक्षसयूथपैःसहयुद्धमकरोदितिशेषः ॥ ॥ ५२ ॥ विनष्टाःविनाशिताइत्यर्थः अंतर्भावितण्यर्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ रघूत्तमंमाययामोहयित्वातांप्राप्स्यसेइत्यन्वयः ॥५६ ॥ तत्

शूर्पणखोवाच जनस्थानादहंयाताकदाचिद्गौतमीतटे ॥ तत्रपंचवटीनामपुरामुनिजनाश्रया ॥४६॥ तत्राश्रमेमयादृष्टोरामोराजीवलोचनः ॥ धनुर्बाणधरःश्रीमान्जटावल्कलमंडितः ॥४७॥ कनीयाननुजस्तस्यलक्ष्मणोऽपितथाविधः ॥ तस्यभार्याविशालाक्षीरूपिणीश्रीरिवापरा ॥ ४८ ॥ देवगंधर्वनागानांमनुष्याणांतथाविधा ॥ नदृष्टानश्रुताराजन्द्योतयंतीवनंशुभा ॥ ४९ ॥ आनेतुमहमुद्युक्तातांभार्यार्थंतवानघ ॥ लक्ष्मणोनामतद्भ्राताच्छिच्छेदममनासिकां ॥ ५० ॥ कर्णौचनोदितस्तेनरामेणसमहाबलः ॥ ततोऽहमतिदुःखेनरुदतीखरमन्वगां ॥५१॥ सोऽपिरामंसमासाद्ययुद्धंराक्षसयूथपैः॥ततःक्षणेनरामेणतेनैवबलशालिना॥५२॥सर्वेतेनविनष्टावैराक्षसाभीमविक्रमाः॥ यदिरामोमनःकुर्यात्त्रैलोक्यंनिमिषार्धतः॥५३॥ भस्मीकुर्यान्नसंदेहइतिभातिममप्रभो॥ यदिसातवभार्यास्यात्सफलंतवजीवितं ॥५४॥ अतोयतस्वराजेंद्रयथातेवल्लभाभवेत् ॥ सीताराजीवपत्राक्षीसर्वलोकैकसुंदरी ॥ ५५ ॥ साक्षाद्रामस्यपुरतःस्थातुंत्वंनक्षमःप्रभो ॥ माययामोहयित्वातुप्राप्स्यसेतांरघूत्तमं॥५६॥ श्रुत्वातत्सूक्तवाक्यैश्चदानमानादिभिस्तथा ॥ आश्वास्यभगिनींराजाप्रविवेशस्वकंगृहं ॥ तत्रचिंतापरोभूत्वानिद्रांरात्रौनलब्धवान् ॥५७॥ एकेनरामेणकथंमनुष्यमात्रेणनष्टःसबलःखरोमे ॥ भ्राताकथंमेबलवीर्यदर्पयुतोविनष्टोबतराघवेण ॥५८॥

शूर्पणखावाक्यं सूक्तैर्वाक्यैर्दानादिभिर्भगिनीमाश्वास्यस्वगृहंप्रविवेशेत्यन्वयः ॥ ॥ ५७ ॥ नष्टःनाशितः शोकावेशादुक्तमेवपुनराह भ्रातेति बलंशारीरं वीर्यमांतरंबलं दर्पोऽहंकारः ॥ ५८ ॥

परेशःपरमात्मा बलौघैर्वानरसमूहैः द्रुहिणेनब्रह्मणा ॥ ५९ ॥ अतःअल्पराज्यहान्यामहत्तरराज्यप्राप्तेः ॥ ६० ॥ भक्त्याद्रुतमल्पकालकृतया शीघ्रंनप्रसीदेत् एतद्राज्यत्याजनपूर्वंमहद्राज्यंनप्रापयेत् ॥ ६१ ॥ इतिश्रीमत्सकलरा०अरण्यकांडेपंचमःसर्गः ॥ ५ ॥ ॥ ७ ॥







यद्वानरामोमनुजःपरेशोमांहंतुकामःसबलंबलौघैः ॥ संप्रार्थितोऽयंद्रुहिणेनपूर्वंमनुष्यरूपोऽद्यरघोःकुलेऽभूत् ॥ ॥ ५९ ॥ वध्योयदिस्यांपरमात्मनाऽहंवैकुंठराज्यंपरिपालयेऽहं॥ नोचेदिदंराक्षसराज्यमेवभोक्ष्येचिरंराममतोव्रजामि ॥ ६० ॥ इत्थंविचिंत्याखिलराक्षसेंद्रोरामंविदित्वापरमेश्वरंहरिं ॥ विरोधबुद्ध्यैवहरिंप्रयामिद्रुतंनभक्त्याभगवान्प्रसीदेत्॥ ६१ ॥ इतिश्रीम०रा०उमामहेश्वरसंवादेअरण्यकांडेपंचमःसर्गः॥ ५॥ ॥७॥ ॥७॥ विचिंत्यैवंनिशायांसप्रभातेरथमास्थितः ॥ रावणोमनसाकार्यमेकंनिश्चित्यबुद्धिमान् ॥ १ ॥ ययौमारीचसदनंपरंपारमुदन्वतः॥ मारीचस्तत्रमुनिवज्जटावल्कलधारकः॥२॥ ध्यायन्हृदिपरात्मानंनिर्गुणंगुणभासकं॥समाधिविरमेपश्यद्रावणंगृहमागतं ॥ ३ ॥ द्रुतमुत्थायचालिंग्यपूजयित्वायथाविधि ॥ कृतातिथ्यंसुखासीनंमारीचोवाक्यमब्रवीत्॥ ४ ॥ समागमनमेतत्तेरथेनैकेनरावण ॥ चिंतापरइवाभासिहृदिकार्यंविचिंतयन् ॥ ५॥ ब्रूहिमेनहिगोप्यंचेत्करवाणितवप्रियं॥ न्याय्यंचेद्ब्रूहिराजेंद्रवृजिनंमांस्पृशेन्नहि॥ ६॥ रावणउवाच अस्तिराजादशरथःसाकेताधिपतिःकिल॥ रामनामासुतस्तस्यज्येष्ठःसत्यपराक्रमः॥ ७ ॥

एकंकार्यंसीताहरणेनरामतोमृत्युरूपं ॥ १ ॥ २ ॥ गुणाःप्रकृतिस्तत्कार्याणितद्भासकं ॥ ३ ॥ ४ ॥ एतदेकेनरथेनसमागमनंकिमर्थंतद्ब्रूहीतिशेषः हृदिकिंचित्कार्यंविचिंतयन्चिंतापरइवाभासि तत्कार्यंकिमितिब्रूहीत्यन्वयः ॥ ५॥ न्याय्यंधर्म्यं हियतोयत्कार्यकरणेमांवृजिनंपापंनस्पृशेत् ॥ ६ ॥ साकेतंअयोध्या ॥ ७ ॥

वनविशेषणंवनजनप्रियमिति ॥ ८ ॥ ९ ॥ १० ॥ कर्णौचिच्छेदतथाऽपिनिर्भयइत्यन्वयः ॥ ११ ॥ १२ ॥ मायामृगःमाययाविचित्रमृगरूपधरः ॥ १३ ॥ सहायंसहायत्वं ॥१४॥ इदंवचःसीतोत्तमास्त्रीसाहर्तव्येत्येवंरूपं योदुरुपदेशेनत्वन्नाशंप्रतीक्षतेद्रष्टुमिच्छति सएवशत्रुर्नरामःसएववध्यश्चेत्यर्थः ॥ १५ ॥ रामस्यपौरुषंस्मृत्वाऽद्यापिमेचित्तंविकलमितिशेषः स्मर्यमाणंपौरुषंकिंचिदेवनिदर्शनायाह बालोऽपीति

विवासयामाससुतंवनंवनजनप्रियं ॥ भार्ययासहितंभ्रात्रालक्ष्मणेनसमन्वितं ॥८॥ सआस्तेविपिनेघोरेपंचवट्याश्रमेशुभे ॥ तस्यभार्याविशालाक्षीसीतालोकविमोहिनी॥ ९॥ रामोनिरपराधान्मेराक्षसान्भीमविक्रमान् ॥ खरंचहत्वाविपिनेसुखमास्तेऽतिनिर्भयः ॥ १० ॥ भगिन्यामेशूर्पणख्यानिर्दोषायाश्चनासिकां ॥ कर्णौचिच्छेददुष्टात्मावनेतिष्ठतिनिर्भयः ॥ ११ ॥ अतस्त्वयासहायेनगत्वातत्प्राणवल्लभां ॥ आनयिष्यामिविपिनेरहितेराघवेणतां ॥ १२ ॥ त्वंतुमायामृगोभूत्वात्वाश्रमादपनेष्यसि ॥ रामंचलक्ष्मणंचैवतदासीतांहराम्यहं ॥ १३ ॥ त्वंतुतावत्सहायंमेकृत्वास्थास्यसिपूर्ववत् ॥ इत्येवंभाषमाणंतंरावणंवीक्ष्यविस्मितः ॥ १४ ॥ केनेदमुपदिष्टंतेमूलघातकरंवचः ॥ सएवशत्रुर्वध्यश्चयस्त्वन्नाशंप्रतीक्षते ॥ १५॥ रामस्यपौरुषंस्मृत्वाचित्तमद्यापिरावण॥ बालोऽपिमांकौशिकस्ययज्ञसंरक्षणायसः ॥ १६ ॥ आगतस्त्विषुणैकेनपातयामाससागरे॥ योजनानांशतंरामस्तदादिभयविक्लवः॥ १७ ॥ स्मृत्वास्मृत्वातदेवाहंरामंपश्यामिसर्वतः ॥ १८॥ दंडकेऽपिपुनरप्यहंवनेपूर्ववैरमनुचिंतयन्हृदि ॥ तीक्ष्णशृंगमृगरूपमेकदामादशैर्बहुभिरावृतोऽभ्ययां ॥ १९ ॥

कौशिकस्ययज्ञरक्षणायागतोबालोऽपिरामस्त्वेकेनेषुणाऽनेकयोजनशतमुल्लंघ्यमांसागरेपातयामास तदेवरामकर्माहंस्मृत्वा रामंसर्वतःसर्वत्रपश्यामि ॥ १६ ॥ १७ ॥ १८ ॥ तीक्ष्णशृंगमृगरूपंधृत्वेतिशेषः ॥ १९ ॥

॥ २० ॥ तेनशरेण ऊर्जितंरामानागमननिश्चयेननिर्भयं ॥ २१ ॥ यद्वस्तुभोगसमूहसाधनंततोऽपिभीतभीतःअत्यंतंभीतइवराममवभावये तदेवोपपादयति राजेति रेफवत्त्वेनभोगसाधनानामप्येषांश्रवणंरामस्मारकतयाभयजनकमितिभावः ॥ २२ ॥ रामागमनशंकयाबाह्यकार्यंपरित्यज्यनिद्राणोऽपिराममेवचिंतयन् स्वपेइतिपरस्मैपदमार्षं ॥ २३ ॥ तदास्वप्नदृष्टिगतराघवंस्वामज्ञानविषयंराघवंपश्यन्नेवबोधितोविग

राघवंजनकजासमन्वितंलक्ष्मणेनसहितंत्वरान्वितः॥ आगतोऽहमथहंतुमुद्यतोमांविलोक्यशरमेकमक्षिपत् ॥ ॥२०॥ तेनविद्धहृदयोऽहमुद्भ्रमन्राक्षसेंद्रपतितोऽस्मिसागरे॥ तत्प्रभृत्यहमिदंसमाश्रितःस्थानमूर्जितमिदंभयार्दितः॥ २१ ॥राममेवसततंविभावयेभीतभीतइवभोगराशितः॥ राजरत्नरमणीरथादिकंश्रोत्रयोर्यदिगतंभयंभवेत्॥ २२ ॥रामआगतइहेतिशंकयाबाह्यकार्यमपिसर्वमत्यजं॥ निद्रयापरिवृतोयदास्वपेराममेवमनसाऽनुचिंतयन्॥ २३ ॥ स्वप्नदृष्टिगतराघवंतदाबोधितोविगतनिद्रआस्थितः ॥ तद्भवानपिविमुच्यचाग्रहंराघवंप्रतिगृहंप्रयाहिभो॥ २४ ॥रक्षराक्षसकुलंचिरागतंतत्स्मृतौसकलमेवनश्यति ॥ तवहितंवदतोममभाषितंपरिगृहाणपरात्मनिराघवे ॥ २५ ॥ त्यजविरोधमतिंभजभक्तितःपरमकारुणिकोरघुनंदनः ॥ अहमशेषमिदंमुनिवाक्यतोऽशृणवमादियुगेपरमेश्वरः॥२६॥ब्रह्मणाऽर्थितउवाचतंहरिःकिंतवेप्सितमहंकरवाणितत् ॥ब्रह्मणोक्तमरविंदलोचनत्वंप्रयाहिभुविमानुषंवपुः॥दशरथात्मजभावमंजसाजहिरिपुंदशकंधरंहरे॥ २७॥

तनिद्रआस्थितआसनेभवेयमितिशेषः राघवंप्रत्यापहंविमुच्येत्यन्वयः॥ २४ ॥ चिरागतंचिरेणवृद्धिंप्राप्तंराक्षसकुलंरक्ष एवंविरोधेनतत्स्मृतौसकलमेवरक्षःकुलंनश्यति राघवेतद्विषये ॥ २५ ॥ विरोधमतिंविरोधसंपादिकांमतिं पुनरपितद्विरोधान्निवृत्तयेइतिहासांतरमाह अहमिति मुनिरत्रनारदः आदियुगेसत्ययुगे ॥२६॥ तत्वदेतिशेषः मानुषंवपुर्धृत्वेतिशेषः दशरथात्मजभावंदशरथपुत्रत्वंप्राप्यांजसाशीघ्रमेव॥२७॥

॥२८॥ २९॥ ३०॥ सत्यःसंकल्पइच्छायस्यसः राघवात्राघवंवंचयित्वेत्यर्थः ॥ ३१॥ मयारामाद्वधेप्राप्तेसति हेवीराहंपरमंपदंप्राप्स्या
मि ॥ ३२ ॥ अतोत्तिष्ठअतउत्तिष्ठसंधिरार्षः ॥ ३३॥ यथापुरायथापूर्वं आश्रमेसुखंतिष्ठइत्यन्वयः ॥ ३४॥ ३५॥ भवार्णवान्मुक्तोभ

अतोनमानुषोरामःसाक्षान्नारायणोऽव्ययः ॥ मायामानुषवेषेणवनंयातोऽतिनिर्भयः ॥ २८ ॥ भूभारहरणा
र्थायगच्छतातगृहंसुखं ॥ श्रुत्वामारीचवचनंरावणःप्रत्यभाषत ॥ २९ ॥ परमात्मायदारामःप्रार्थितोब्रह्मणा
किल ॥ मांहंतुंमानुषोभूत्वायत्नादिहसमागतः ॥ ३० ॥ करिष्यत्यचिरादेवसत्यसंकल्पईश्वरः ॥ अतोऽहंयत्नतः
सीतामानेष्याम्येवराघवात् ॥ ३१ ॥ वधेप्राप्तेरणेवीरप्राप्स्यामिपरमंपदं ॥ यद्वारामंरणेहत्वासीतांप्राप्स्यामि
निर्भयः ॥ ३२ ॥ अतोत्तिष्ठमहाभागविचित्रमृगरूपधृक् ॥ रामंसलक्ष्मणंशीघ्रमाश्रमादतिदूरतः ॥ ३३ ॥ आ
कृष्यगच्छत्वंशीघ्रंसुखंतिष्ठयथापुरा ॥ अतःपरंचेद्यत्किंचिद्भाषसेमद्विभीषणं ॥ ३४ ॥ हनिष्याम्यसिनाऽनेन
त्वामत्रैवनसंशयः ॥ मारीचस्तद्वचःश्रुत्वास्वात्मन्येवानुचिंतयत् ॥ ३५ ॥ यदिमांराघवोहन्यात्तदामुक्तोभवार्ण
वात् ॥ मांहन्याद्यदिचेद्दुष्टस्तदामेनिरयोध्रुवं ॥ ३६ ॥ इतिनिश्चित्यमरणंरामादुत्थायवेगतः ॥ अब्रवीद्रावणं
राजन्करोम्याज्ञांतवप्रभो ॥ ३७ ॥ इत्युक्त्वारथमास्थायगतौरामाश्रमंप्रति ॥ शुद्धजांबूनदप्रख्योमृगोऽभूद्रौ
प्यबिंदुकः ॥ ३८ ॥ रत्नशृंगोमणिखुरोनीलरत्नविलोचनः ॥ विद्युत्प्रभोविमुग्धास्योविचचारवनांतरे ॥ ३९ ॥
रामाश्रमपदस्यांतेसीतादृष्टिपथेचरन् ॥ ४० ॥

विष्यामीतिशेषः ध्रुवंनिरयोभवेदितिशेषः ॥ ३६ ॥ रामान्मरणमेवसम्यगितिनिश्चित्य ॥ ३७ ॥ गतौमारीचरावणौ जाबूनदंसुवर्णं ॥
॥ ३८ ॥ विमुग्धंसुंदरमास्यंयस्यसः ॥ ३९ ॥ ४० ॥

पुनर्भयात्वतःपलायते ४१ ॥ इतिश्रीमत्सक ० सेतौअरण्यकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ ७॥ अथेति ॥
॥ १ ॥ त्वदाकारांतवाकारइवाकारोयस्यास्तांस्थापयित्वा बहिरितिशेषः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अयंसुंदरःक्रीडार्थोमृगःक्रीडामृ



क्षणंचधावत्यवतिष्ठतेक्षणंसमीपमागत्यपुनर्भयात्वतः ॥ एवंसमायान्मृगवेषरूपधृक्चचारसीतांपरिमोहयन्खलः ॥ ४१ ॥ इतिश्रीम० रामायणेउमामहेश्वरसंवादेअरण्यकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥
अथरामोऽपितत्सर्वंज्ञात्वारावणचेष्टितं ॥ उवाचसीतामेकांतेशृणुजानकिमेवचः ॥ १ ॥ रावणोभिक्षुरूपेणआगमिष्यतितेंऽतिकं ॥ त्वंतुछायांत्वदाकारांस्थापयित्वोटजेविश ॥ २ ॥ अग्नावदृश्यरूपेणवर्षंतिष्ठममाज्ञया ॥ रावणस्यवधांतेमांपूर्ववत्प्राप्स्यसेशुभे ॥ ३ ॥ श्रुत्वारामोदितंवाक्यंसाऽपितत्रतथाऽकरोत् ॥ मायासीतांबहिःस्थाप्य स्वयमंतर्दधेऽनले ॥ ४ ॥ मायासीतातदापश्यन्मृगंमायाविनिर्मितं ॥ हसंतीराममभ्येत्यप्रोवाचविनयान्विता ॥ ॥ ५ ॥ पश्यराममृगंचित्रंकानकंरत्नभूषितं ॥ विचित्रबिंदुभिर्युक्तंचरंतमकुतोभयं ॥ ६ ॥ बद्ध्वादेहिममक्रीडामृगोभवतुसुंदरः ॥ तथेतिधनुरादायगच्छन्लक्ष्मणमब्रवीत् ॥ ७ ॥ रक्षत्वमतियत्नेनसीतांमत्प्राणवल्लभां ॥ मायिनः संतिविपिनेराक्षसाघोरदर्शनाः ॥ ८ ॥ अतोऽत्रावहितःसाध्वींरक्षसीतामनिंदितां ॥ लक्ष्मणोराममाहेदंदेवायं मृगरूपधृक् ॥ मारीचोऽत्रनसंदेहएवंभूतोमृगःकुतः ॥ ९ ॥ श्रीरामउवाच यदिमारीचएवायंतदाहन्मिन संशयः ॥ मृगश्चेदानयिष्यामिसीताविश्रामहेतवे ॥ १० ॥

गोभवत्वित्यन्वयः ॥ ७ ॥ मायिनःछलकर्तारः ॥ ८ ॥ अवहितःसावधानः मृगरूपधृगयंमारीचएव नमृगोऽत्रनसंदेहोऽतएतदुद्देशेनमागाः एवंभूतोमृगःकुतोनकुत्रापीत्यर्थः ॥ ९ ॥ १० ॥

कुतोनअतोऽहमित्यादिर्गमिष्यामीत्यादेः ॥ ११ ॥ जगदाकृतिःजगद्रूपेणपरिणम्यमाना ॥ १२ ॥ हरीरामइतिस्वभक्तवचःसत्यंकर्तुंमारीचं जानन्नपिसीताप्रियार्थायसीताप्रियरूपमर्थमुद्दिश्यमृगंययौ अनुययावित्यर्थः अत्रमारीचस्यरामान्मरणंश्रेयइतिजानतःस्वस्मिन्प्रेमवत्तया स्व भक्तत्वंनिर्णीयतस्यतंमनोरथंपूरयितुंरावणस्यपूर्वविचारेणनिर्णीतभक्तस्यमनोरथंपूरयितुंतदनुकंपयागतइतितात्पर्यं ॥ १३ ॥ १४ ॥ अ

गमिष्यामिमृगंबद्ध्वात्यानयिष्यामिसत्वरः ॥ त्वंप्रयत्नेनसंतिष्ठसीतासंरक्षणोद्यतः॥ ११ ॥ इत्युक्त्वाप्रययौरामो मायामृगमनुद्रुतः॥ मायायदाश्रयालोकमोहिनीजगदाकृतिः ॥ १२ ॥ निर्विकारश्चिदात्माऽपिपूर्णोऽपिमृगम न्वगात्॥ भक्तानुकंपीभगवानितिसत्यंवचोहरिः ॥ १३ ॥ कर्तुंसीताप्रियार्थायजानन्नपिमृगंययौ॥ अन्यथापू र्णकामस्यरामस्यविदितात्मनः ॥ १४ ॥ मृगेणवास्त्रियावाऽपिकिंकार्यंपरमात्मनः ॥ कदाचिद्दृश्यतेभ्याशेक्षणं धावतिलीयते ॥ १५ ॥ दृश्यतेचततोदूरादेवंराममपाहरत् ॥ ततोरामोऽपिविज्ञायराक्षसोऽयमितिस्फुटं ॥ १६ ॥ विव्याधशरमादायराक्षसंमृगरूपिणं ॥ पपातरुधिराक्तास्योमारीचःपूर्वरूपधृक् ॥ १७॥ हाहतोऽस्मिमहाबाहो त्राहिलक्ष्मणमांद्रुतं ॥ इत्युक्त्वारामवद्वाचापपातरुधिराशनः ॥ १८ ॥ यन्नामाज्ञोपिमरणेस्मृत्वातत्साम्यमाप्नु यात् ॥ किमुताग्रेहरिंपश्यंस्तेनैवनिहतोऽसुरः ॥ १९ ॥ तद्देहादुत्थितंतेजःसर्वलोकस्यपश्यतः ॥ राममेवाविश द्देवाविस्मयंपरमंययुः ॥ २० ॥ किंकर्मकृत्वाकिंप्राप्तःपातकीमुनिर्हिंसकः॥ अथवाराघवस्यायंमहिमानात्रसं शयः॥ २१ ॥

भ्याशेसमीपे ॥ १५ ॥ १६ ॥ १७ ॥ रामवद्वाचारामवाक्तुल्यवाचा ॥ १८ ॥ सचभगवत्सायुज्यंप्राप्तइत्याह यदिति तंपश्यंस्तेनहतोऽसुरःसायुज्यंप्राप्तइतिकिमुवक्तव्यमिति ॥ १९ ॥ तदेवस्पष्टमाह तद्देहादिति तस्यरा मप्रवेशंदृष्ट्वादेवाःपरमंविस्मयंययुः राममहिमविषयेइतिशेषः ॥ २० ॥ तदेवाह किमिति किंप्राप्तःकिंफलंप्राप्तः ॥ २१ ॥

रामभयादेवसर्वंगृहादिकंपरित्यज्यपूर्वमपिरामंस्मरन्स्थितइतिशेषः ॥ २२ ॥ तादृशःसतत्स्मृतिदूरीकृताशेषपापोंऽतेरामेण निहतोरामंपश्यन् राममेवप्राप अत्रभगवद्भयमेववैराग्यादिज्ञानांतसकलमुक्तिसाधनसंपादकंजातमितिसूचितं मुख्यतयैतदेवसर्वसाधनमितिमंतव्यं ॥ २३ ॥



रामबाणेनसंविद्धःपूर्वंराममनुस्मरन् ॥ भयात्सर्वंपरित्यज्यगृहवित्तादिकंचयत् ॥ २२ ॥ हृदिरामंसदाध्यात्वानिर्धूताशेषकल्मषः ॥ अंतेरामेणनिहतःपश्यन्राममवापसः ॥ २३ ॥ द्विजोवाराक्षसोऽवापिपापीवाऽधार्मिकोऽपिवा ॥ त्यजन्कलेवरंरामंस्मृत्वायातिपरंपदं ॥ २४ ॥ इतितेऽन्योन्यमाभाष्यततोदेवादिवंययुः ॥ रामस्तच्चिंतयामास म्रियमाणोऽसुराधमः ॥ २५॥ हालक्ष्मणेतिमद्वाक्यमनुकुर्वन्ममारकिं ॥ श्रुत्वामद्वाक्यसदृशंवाक्यंसीताऽपिकिंभवेत् ॥ २६ ॥ इतिचिंतापरीतात्मारामोदूरान्न्यवर्तत ॥ सीतातद्भाषितंश्रुत्वामारीचस्यदुरात्मनः ॥ २७ ॥ भीताऽतिदुःखसंविग्नालक्ष्मणंत्विदमब्रवीत् ॥ गच्छलक्ष्मणवेगेनभ्राताते ऽसुरपीडितः ॥ २८ ॥ हालक्ष्मणेतिवचनंभ्रातुस्तेनशृणोषिकिं ॥ तामाहलक्ष्मणोदेविरामवाक्यंनतद्भवेत् ॥ २९ ॥ यःकश्चिद्राक्षसोदेविम्रियमाणोऽब्रवीद्वचः ॥ रामस्त्रैलोक्यमपियःक्रुद्धोनाशयतिक्षणात् ॥ ३० ॥ सकथंदीनवचनंभाषतेऽमरपूजितः ॥ क्रुद्धालक्ष्मणमालोक्यसीताबाष्पविलोचना ॥ ३१ ॥ प्राहलक्ष्मणदुर्बुद्धेभ्रातुर्व्यसनमिच्छसि ॥ प्रेषितोभरतेनैवरामनाशाभिकांक्षिणा ॥ ३२ ॥ मांनेतुमागतोऽसित्वंरामनाशउपस्थिते ॥ नप्राप्स्यसेत्वंमामद्यपश्यप्राणांस्त्यजाम्यहं ॥ ३३ ॥

॥ २४ ॥ २५ ॥ किममारएवंकिमर्थंमृतः किंभवेत्किमवस्थाभवेत् ॥ २६ ॥ २७ ॥ तदेवस्पष्टमाह भीताभीतेवेत्यर्थः यद्वा अस्यामायासीतात्वात्तन्माययैववास्तवीभीतिः ॥ २८ ॥ तत्रामवाक्यंन तस्यभयलेशाभावात् ॥ २९ ॥ किंतुम्रियमाणस्यराक्षसस्येदंवचः तदेवाह रामइति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ स्वबाहुभ्यामात्मानंवध्यमानाताड्यमानारुरोद कर्णौपिधायईदृशंपापमेषावदतीतितस्यश्रवणायोग्यत्वात्कर्णपिधानं ॥ ३५ ॥

नजानातीदृशंरामस्त्वांभार्याहरणोद्यतं ॥ रामादन्यंनस्पृशामित्वांवाभरतमेववा ॥ ३४ ॥ इत्युक्त्वावध्यमानासा स्वबाहुभ्यांरुरोदह ॥ तच्छ्रुत्वालक्ष्मणःकर्णौपिधायातीवदुःखितः ॥ ३५ ॥ मामेवंभाषसेचंडिधिकृत्वांनाशमुपैष्यसि ॥ इत्युक्त्वावनदेवीभ्यःसमर्प्यजनकात्मजां ॥ ३६ ॥ ययौदुःखातिसंविग्नोराममेवशनैःशनैः ॥ ततोऽतरं समालोक्यरावणोभिक्षुवेषधृक् ॥ ३७ ॥ सीतासमीपमगमत्स्फुरद्दंडकमंडलुः ॥ सीतातमवलोक्याशुनत्वासंपूज्यभक्तितः ॥ ३८ ॥ कंदमूलफलादीनिदत्वास्वागतमब्रवीत् ॥ मुनेभुंक्ष्वफलादीनिविश्रमस्वयथासुखं ॥ ३९ ॥ इदानीमेवभर्तामेत्वागमिष्यतितेप्रियं ॥ करिष्यतिविशेषेणतिष्ठत्वंयदिरोचते ॥ ४० ॥ भिक्षुरुवाच कात्वं कमलपत्राक्षिकोवाभर्तातवानघे ॥ किमर्थमत्रतेवासोवनेराक्षससेविते ॥ ब्रूहिभद्रेततःसर्वंस्ववृत्तांतंनिवेदये ॥ ४१ ॥ सीतोवाच अयोध्याधिपतिःश्रीमान्राजादशरथोमहान् ॥ तस्यज्येष्ठःसुतोरामःसर्वलक्षणलक्षितः ॥ ४२ ॥ तस्याहंधर्मतःपत्नीसीताजनकनंदिनी ॥ तस्यभ्राताकनीयांश्चलक्ष्मणोभ्रातृवत्सलः ॥ ४३ ॥ पितुराज्ञांपुरस्कृत्यदंडकेवस्तुमागतः ॥ चतुर्दशसमास्त्वांतुज्ञातुमिच्छामिमेवद ॥ ४४ ॥ भिक्षुरुवाच पौलस्त्यतनयोऽहंतुरावणोराक्षसाधिपः ॥ त्वत्कामपरितप्तोऽहंत्वांनेतुंपुरमागतः ॥ ४५ ॥ मुनिवेषेणरामेणकिंकरिष्यसिमांभज ॥ भुंक्ष्वभोगान्मयासार्धंत्यजदुःखंवनोद्भवं ॥ ४६ ॥

नाशमदर्शनं ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ तेप्रियंत्वद्योग्यातिथ्यकरणेनेतिशेषः ॥ ४० ॥ ततःत्वद्वृत्तांतश्रवणानंतरं ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥ ४४ ॥ त्वांपुरंस्वनगरंलंकारूपंनेतुमागतइत्यन्वयः ॥ ४५ ॥ ४६ ॥

यत्यस्मात् एवंभाषसेततोराघवान्नाशमेष्यसि॥४७॥सहानुजोरामः आगमिष्यतीत्यन्वयः हरेः सिंहस्य शशकः क्षुद्रमृगः॥४८॥४९॥५०॥तत् रावणस्वरूपं नखैर्धरणींविदार्यभूसंबद्धायाश्चालयितुमशक्यत्वात् बाहुभिस्तामुद्धृत्यभुवःसकाशात्उपरिकृत्वा ॥ ५१॥ तोलयित्वाबाहुभ्यां







श्रुत्वातद्वचनंसीताभीताकिंचिदुवाचतं ॥ यदेवंभाषसेमांत्वंनाशमेष्यसिराघवात् ॥ ४७॥ आगमिष्यतिरामोऽपिक्षणंतिष्ठसहानुजः॥ मांकोधर्षयितुंशक्तोहरेर्भार्यांशशोयथा ॥ ४८ ॥ रामबाणैर्विभिन्नस्त्वंपतिष्यसिमहीतले॥ इतिसीतावचःश्रुत्वारावणःक्रोधमूर्छितः ॥ ४९ ॥ स्वरूपंदर्शयामासमहापर्वतसन्निभं ॥ दशास्यंविंशतिभुजंकालमेघसमद्युति ॥ ५०॥ तद्दृष्ट्वावनदेव्यश्चभूतानिचवितत्रसुः ॥ ततोविदार्यधरणींनखैरुद्धृत्यबाहुभिः॥ ॥ ५१॥ तोलयित्वारथेक्षिप्त्वाययौक्षिप्रंविहायसा ॥ हारामहालक्ष्मणेतिरुदंतीजनकात्मजा ॥५२॥ भयोद्विग्नमनादीनापश्यंतीभुवमेवसा॥ श्रुत्वातत्क्रंदितंदीनंसीतायाःपक्षिसत्तमः ॥ ५३ ॥ जटायुरुत्थितःशीघ्रंनगाग्रात्तीक्ष्णतुंडकः॥तिष्ठतिष्ठेतितंप्राहकोगच्छतिममाग्रतः॥५४॥मुषित्वालोकनाथस्यभार्यांशून्याद्वनालयात् ॥ शुनकोमंत्रपूतंत्वंपुरोडाशमिवाध्वरे॥ ५५॥ इत्युक्त्वातीक्ष्णतुंडेनचूर्णयामासतद्रथं॥ वाहान्बिभेदपादाभ्यांचूर्णयामासतद्धनुः॥ ५६॥ ततःसीतांपरित्यज्यरावणःखड्गमाददे॥ चिच्छेदपक्षौसामर्षःपक्षिराजस्यधीमतः ॥ ५७॥ पपातकिंचिच्छेषेणप्राणेनभुविपक्षिराट्॥ पुनरन्यरथेनाशुसीतामादायरावणः॥ ५८॥ क्रोशंतीरामरामेतित्रातारंनाधिगच्छती ॥ हारामहाजगन्नाथमांनपश्यसिदुःखितां॥ ५९॥

भारमनुमीय ॥ ५२ ॥ पश्यंती आसीदितिशेषः॥५३॥५४॥ मंत्रपूतंपुरोडाशंमुषित्वाशुनकइवलोकनाथस्यरामस्यभार्यांहृत्वाममाग्रतःकोगच्छतीत्यन्वयः॥५५॥५६॥५७॥ अन्यरथेनमायाकल्पितेनसीतामादायागच्छदितिशेषः ॥५८॥ क्रोशंतीसीता मांनपश्यसिमांकिंनपश्यसीत्यर्थः एवंविललापेतिशेषः ॥५९॥

॥ ६० ॥ ६१ ॥ जगामरावणइतिशेषः ॥ ६२ ॥ आभरणादिकंविमुच्यउत्तरीयार्धखंडेनबध्वारामायकथयंत्वितिपर्वतेचिक्षेप अनेनस्रीचरित्रस्याशक्यवक्तव्यतासूचिता ॥ ६३ ॥ ६४ ॥ रहसिएकांतेगुप्तदेशे अनुपालयत् अन्वपालयदित्यर्थः अडभावआर्षः ॥ ६५ ॥ परिकर्म

रक्षसानीयमानांस्वांभार्यांमोचयराघव॥ हालक्ष्मणमहाभागत्राहिमामपराधिनीं ॥ ६० ॥ वाक्शरेणहतस्त्वंमेक्षंतुमर्हसिदेवर॥ इत्येवंक्रोशमानांतांरामागमनशंकया ॥६१॥ जगामवायुवेगेनसीतामादायसत्वरः॥ विहायसानीयमानासीतापश्यदधोमुखी॥ ६२॥ पर्वताग्रस्थितान्पंचवानरान्वारिजानना ॥ उत्तरीयार्धखंडेनविमुच्याभरणादिकं॥ ६३ ॥ बध्वाचिक्षेपरामायकथयंत्वितिपर्वते ॥ ततःसमुद्रमुल्लंघ्यलंकांगत्वासरावणः॥६४॥ स्वांतःपुरेरहस्येतामशोकविपिनेऽक्षिपत् ॥ राक्षसीभिःपरिवृतांमातृबुद्ध्याऽनुपालयत् ॥ ६५॥ कृशाऽतिदीनापरिकर्मवर्जितादुःखेनशुष्यद्वदनाऽतिविक्लवा॥ हारामरामेतिविलप्यमानासीतास्थिताराक्षसवृंदमध्ये ॥ ६६ ॥

इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेसप्तमःसर्गः ॥ ७॥ ॥ ७॥ ॥ ७॥

रामोमायाविनंहत्वाराक्षसंकामरूपिणं॥ प्रतस्थेस्वाश्रमंगंतुंततोदूराद्ददर्शतं ॥ १ ॥ अयातंलक्ष्मणंदीनंमुखेनपरिशुष्यता ॥ राघवश्चिंतयामासस्वात्मन्येवमहामतिः ॥ २ ॥ लक्ष्मणस्तन्नजानातिमायासीतांमयाकृतां ॥ ज्ञात्वाप्येनंवंचयित्वाशोचामिप्राकृतोयथा॥ ३॥

शरीरसंस्कारादि ॥ ६६ ॥ इतिश्रीमत्सक०सेतौअरण्यकांडेसप्तमःसर्गः ॥ ७ ॥ ॥ ७ ॥ रामइति तंसीतारक्षकत्वेनस्वयंस्थापितंलक्ष्मणमित्यर्थः ॥ १ ॥ स्वात्मनिस्वचित्ते ॥ २ ॥ ननुलक्ष्मणोयद्यपिनजानातितथाऽपित्वंजानास्येवतत्राह ज्ञात्वाऽपीति ॥ ३ ॥

तादृशशोकफलमाह यद्यहमिति ॥ ४ ॥ असुरालयंलंकां ॥ ५ ॥ नीत्वाप्राप्यअयोध्यांयातागंता एतत्किमर्थंज्ञानगोपनंतत्राह ब्रह्मणाप्रार्थितोऽहंमनुष्यभावेनजातोऽस्मि एवंचतद्भावसंरक्षणायैतदितिभावः ॥ ६ ॥ ननुरावणवधोत्तरंपुनरयोध्यागमनेनतत्रस्थानेनवानफ

यद्यहंविरतोभूत्वातूष्णींस्थास्यामिमंदिरे ॥ तदाराक्षसकोटीनांवधोपायःकथंभवेत् ॥ ४ ॥ यदिशोचामितांदुःखसंतप्तःकामुकोयथा ॥ तदाक्रमेणानुचिन्वन्सीतांयास्येऽसुरालयं ॥ रावणंसकुलंहत्वासीतामग्नौस्थितांपुनः ॥ ॥ ५ ॥ मयैवस्थापितांनीत्वायाताऽयोध्यामतंद्रितः ॥ अहंमनुष्यभावेनजातोऽस्मिब्रह्मणाऽर्थितः ॥ ६ ॥ मनुष्यभावमापन्नःकिंचित्कालंवसामिकौ ॥ ततोमायामनुष्यस्यचरितंमेऽनुशृण्वतां ॥ ७ ॥ मुक्तिःस्यादप्रयासेनभक्तिमार्गानुवर्त्तिनां ॥ निश्चित्यैवंतदादृष्ट्वालक्ष्मणंवाक्यमब्रवीत् ॥ ८ ॥ किमर्थमागतोऽसित्वंसीतांत्यक्त्वाममप्रियां ॥ नीतावाभक्षितावाऽपिराक्षसैर्जनकात्मजा ॥ ९ ॥ लक्ष्मणःप्रांजलिःप्राहसीतायादुर्वचोरुदन् ॥ हालक्ष्मणेतिवचनंराक्षसोक्तंश्रुतंतया ॥ १० ॥ त्वद्वाक्यसदृशंश्रुत्वामांगच्छेतित्वराब्रवीत् ॥ रुदतीसामयाप्रोक्तादेविराक्षसभाषितं ॥ नेदंरामस्यवचनंस्वस्थाभवशुचिस्मिते ॥ ११ ॥ इत्येवंसांत्वितासाध्वीमयाप्रोवाचमांपुनः ॥ यदुक्तंदुर्वचोरामनवाच्यंपुरतस्तव ॥ १२ ॥ कर्णौपिधायनिर्गत्ययातोऽहंत्वांसमीक्षितुं ॥ रामस्तुलक्ष्मणंप्राहतथाऽप्यनुचितंकृतं ॥ १३ ॥ त्वयास्त्रीभाषितंसत्यंकृत्वात्यक्त्वाशुभाननां ॥ नीतावाभक्षितावाऽपिराक्षसैर्नात्रसंशयः ॥ १४ ॥

लंतत्राह मनुष्यभावमिति भक्तमुक्तिरेवतत्फलमितिभावः ॥ ७ ॥ ८ ॥ नीतावेति आवयोरसान्निध्येऽवश्यमेवमवस्थाप्राप्तेतिभावः ॥ ९ ॥ १० ॥ ११ ॥ मयासांत्वितामांप्रोवाचेत्यन्वयः यदुक्तंसीतयेतिशेषः ॥ १२ ॥ तथाऽपिस्त्रीस्वभावादेवंतदुक्तावपि ॥ १३ ॥ सत्यंकृत्वासत्यंमत्वेत्यर्थः यत्शुभाननांत्यक्त्वाआगतंतदनुचितंकृतमित्यन्वयः ॥ १४ ॥

॥ १५ ॥ मद्विमोहार्थममोहार्थंकक्कचित्विलीयसेकिमित्यर्थः ॥ १६ ॥ आचिन्वन्अन्वेषयन्कुतःकुत्रेत्यर्थः क्कचित्कुत्रेत्येवपाठः ॥ १७ ॥ मृगाइत्यादिसंबोधनानि नकुत्रचित्ददर्शेतिशेषः ॥ १८ ॥ सर्वथासर्वप्रकारेणपश्यन्नपिकापिदेशेनापश्यत् यदानंदस्तन्मयःसर्वशक्तिसमृद्धोवातामन्वशोचयदचलोप्यनुधावति तत्कर्तृकःशोकोऽचलकर्तृकंधावनंतदेतदाश्चर्यमितिभावः ॥ १९ ॥ निर्ममत्वादिगुणोऽपिममजा

इतिचिंतापरोरामःस्वाश्रमंत्वरितोययौ ॥ तत्रादृष्ट्वाजनकजांविललापातिदुःखितः ॥ १५ ॥ हाप्रियेक्कगताऽसित्वंनासिपूर्ववदाश्रमे ॥ अथवामद्विमोहार्थंलीलयाक्कविलीयसे ॥ १६ ॥ इत्याचिन्वन्वनंसर्वंनापश्यज्जानकींतदा ॥ वनदेव्यःकुतःसीतांब्रुवंतुममवल्लभां ॥ १७ ॥ मृगाश्चपक्षिणोवृक्षादर्शयंतुममप्रियां ॥ इत्येवंविलपन्नेवरामःसीतांनकुत्रचित् ॥ १८ ॥ सर्वज्ञःसर्वथाक्कापिनापश्यद्रघुनंदनः ॥ आनंदोऽप्यन्वशोचत्तामचलोऽप्यनुधावति ॥ १९ ॥ निर्ममोनिरहंकारोऽप्यखंडानंदरूपवान् ॥ ममजायेतिसीतेतिविललापातिदुःखितः ॥ २० ॥ एवंमायामनुचरन्नसक्तोऽपिरघूत्तमः ॥ आसक्तइवमूढानांभातितत्त्वविदांनहि ॥ २१ ॥ एवंविचिन्वन्सकलंवनंरामःसलक्ष्मणः ॥ भग्नंरथंछत्रचापंकूबरंपतितंभुवि ॥ २२ ॥ दृष्ट्वालक्ष्मणमाहेदंपश्यलक्ष्मणकेनचित् ॥ नीयमानांजनकजांतंजित्वान्योजहारतां ॥ २३ ॥ ततःकंचिद्भुवोभागंगत्वापर्वतसन्निभं ॥ रुधिराक्तवपुर्दृष्ट्वारामोवाक्यमथाब्रवीत् ॥ २४ ॥ एषवैभक्षयित्वातांजानकींशुभदर्शनां ॥ शेतेविविक्तेऽतितृप्तःपश्यहन्मिनिशाचरं ॥ २५ ॥

येतिविललाप मायागृहीतमनुष्यत्वस्यलोकान्सत्यत्वेनप्रत्याययितुमितिभावः अतिदुःखितःसइव ॥ २० ॥ तदेवाह एवमिति असक्तोऽपि आसक्तिरहितोऽपि ॥ २१ ॥ छत्रचापमित्यत्रभग्नमित्यनुकर्षः ॥ २२ ॥ नीयमानांजनकजांदृष्ट्वाऽन्यःतंजित्वातांजहारतच्चिन्हमिदंपश्येत्यन्वयः ॥ २३ ॥ पर्वतसन्निभंतत्सदृशं रुधिराक्तवपुरितिकर्मधारयः ॥ २४ ॥ विविक्तेएकांते ॥ २५ ॥

॥ २६ ॥ २७ ॥ रावणमितिपूर्वान्वयि छित्वास्थितोऽहमित्यन्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ म्रियमाणेनमेमयेत्यर्थः ॥



चापमानयशीघ्रंमेबाणंचरघुनंदन ॥ तच्छ्रुत्वारामवचनंजटायुःप्राहभीतवत् ॥ २६ ॥ मांनमारयभद्रंतेम्रियमाणंस्वकर्मणा ॥ अहंजटायुस्तेभार्याहारिणंसमनुद्रुतः ॥ २७ ॥ रावणंतत्रयुद्धंमेबभूवारिविमर्दन ॥ तस्यवाहान्रथंचापंछित्वाऽहंतेनघातितः ॥ २८ ॥ पतितोऽस्मिजगन्नाथप्राणांस्त्यक्ष्यामिपश्यमां ॥ तच्छ्रुत्वाराघवोदीनंकंठप्राणंददर्शह ॥ २९ ॥ हस्ताभ्यांसंस्पृशन्रामोदुःखाश्रुवृतलोचनः ॥ ३० ॥ जटायोब्रूहिमेभार्यांकेननीताशुभाननना ॥ मत्कार्यार्थंहतोऽसित्वमतोमेप्रियबांधवः ॥ ३१ ॥ जटायुःसन्नयावाचावक्त्राद्रक्तंसमुद्वमन् ॥ उवाचरावणोरामराक्षसोभीमविक्रमः ॥ ३२ ॥ आदायमैथिलींसीतांदक्षिणाभिमुखोययौ ॥ इतोवक्तुंनमेशक्तिःप्राणांस्त्यक्ष्यामितेऽग्रतः ॥ ३३ ॥ दिष्ट्यादृष्टोऽसिरामत्वंम्रियमाणेनमेऽनघ ॥ परमात्माऽसिविष्णुस्त्वंमायामनुजरूपधृक् ॥ ३४ ॥ अंतकालेऽपिदृष्ट्वात्वांमुक्तोऽहंरघुसत्तम ॥ हस्ताभ्यांस्पृशमांरामपुनर्यास्यामितेपदं ॥ ३५ ॥ तथेतिरामःपस्पर्शतदंगंपाणिनास्मयन् ॥ ततःप्राणान्परित्यज्यजटायुःपतितोभुवि ॥ ३६ ॥ रामस्तमनुशोचित्वाबंधुवत्साश्रुलोचनः ॥ लक्ष्मणेनसमानाय्यकाष्ठानिप्रददाहतं ॥ ३७ ॥ स्नात्वादुःखेनरामोऽपिलक्ष्मणेनसमन्वितः ॥ हत्वावनेमृगंतत्रमांसखंडान्समंततः ॥ ३८ ॥ शाद्वलेप्राक्षिपद्रामःपृथक्पृथगनेकधा ॥ भक्षंतुपक्षिणःसर्वेतृप्तोभवतुपक्षिराट् ॥ ३९ ॥ इत्युक्काराघवःप्राहजटायोगच्छमत्पदं ॥ मत्सारूप्यंभजस्वाद्यसर्वलोकस्यपश्यतः ॥ ४० ॥

॥ ३४ ॥ पुनःस्पृशेत्यन्वयः येनस्पर्शेननतेपदंयास्यामीत्यन्वयः ॥ ३५ ॥ स्मयन् पक्षिणोप्येवंपराक्रमएवंज्ञानमित्याश्चर्यवान् ॥ ३६ ॥ बंधुवदनुशोचित्वा अनेनतिरश्चामपिप्रीत्यादाहौचित्यमितिदर्शितं ॥ ३७ ॥ ३८ ॥ भक्षंतुभक्षयंतु ॥ ३९ ॥ इत्युक्काइतिसंकल्प्य ॥ ४० ॥

॥ ४१ ॥ द्योतयत् आकाशमितिशेषः ॥ ४२ ॥ राममाभाष्यरामंसंबोध्य ॥ ४३ ॥ अगणितगुणंअनंतशक्तित्वात् अप्रमेयंदेशकालापरि च्छेद्यं संयमोनाशःआदिनाजन्मोपरमः शांतिरेवपरमाशोभायस्मिन्तं ॥ ४४ ॥ निरवधिसुखं तदतिरिक्तेषुब्रह्मांतेषुसुखंसावधिकमितिभावः इंदिरालक्ष्मीस्तत्कटाक्षायस्मिंस्तं सुरेंद्रादिसेवाप्रीतेनयेनतदीयदुःखंक्षपितमित्यर्थः ॥ ४५ ॥ ईहितप्रदानंभक्तेहितदानस्वभावं सुरागमूलेशो

ततोऽनंतरमेवासौदिव्यरूपधरःशुभः॥ विमानवरमारुह्यभास्वरंभानुसन्निभं ॥ ४१ ॥ शंखचक्रगदापद्मकिरीटवरभूषणैः ॥ द्योतयन्स्वप्रकाशेनपीतांबरधरोमलः ॥ ४२ ॥ चतुर्भिःपार्षदैर्विष्णोस्तादृशैरभिपूजितः॥ स्तूयमानोयोगिगणैराममाभाष्यसत्वरः॥ कृतांजलिपुटोभूत्वातुष्टावरघुनंदनं॥४३॥ जटायुरुवाच अगणितगुणमप्रमेयमाद्यंसकलजगत्स्थितिसंयमादिहेतुं॥उपरमपरमंपरात्मभूतंसततमहंप्रणतोऽस्मिरामचंद्रं॥४४॥ निरवधिसुखमिंदिराकटाक्षंक्षपितसुरेंद्रचतुर्मुखादिदुःखं॥ नरवरमनिशंनतोऽस्मिरामंवरदमहंवरचापबाणहस्तं॥४५॥ त्रिभुवनकमनीयरूपमीड्यंरविशतभासुरमीहितप्रदानं ॥ शरणदमनिशंसुरागमूलेकृतनिलयंरघुनंदनंप्रपद्ये ॥ ४६ ॥ भवविपिनदवाग्निनामधेयंभवमुखदैवतदैवतंदयालुं ॥ दनुजपतिसहस्रकोटिनाशंरवितनयासदृशंहरिंप्रपद्ये ॥ ४७ ॥ अविरतभवभावनातिदूरंभवविमुखैर्मुनिभिःसदैवदृश्यं॥ भवजलधिसुतारणांघ्रिपोतंशरणमहंरघुनंदनंप्रपद्ये ॥४८॥

भनोरागःप्रीतिस्तस्यमूलमाश्रयश्चित्तंतत्रकृतस्थानं ॥ ४६ ॥ भवविपिनस्यदवाग्निभूतंनामधेयंयस्यतं रवितनयायमुनातत्सदृशंतद्वर्णं ॥४७॥ अविरतंभवस्यसंसारस्यभावनायेषांतेषामतिदूरः भवसमुद्रस्यसुतारणेंऽघ्रिरूपःपोतोयस्यतं ॥ ४८ ॥

गिरिशः शिवः गिरिसुता पार्वती तयोर्मनसि निवासो यस्य तं गिरिवरधारिणं अयमेव कृष्णो भावीति भावः ईहितैश्चेष्टितैरभिराममभिरामचेष्टितमि तियावत् सुराणां वरदं ॥ ४९ ॥ परगुणादिषु तुष्टमीर्ष्यारहितं मानसं येषां ॥ ५० ॥ स्मितेनेषद्धासेन रुचिरं विकासितमाननाब्जं यस्य सुरराजनी लइंद्रनीलमणिः ईशगुरोर्ब्रह्मणः ॥ ५१ ॥ यथैकोऽपि रविरुदपात्रेष्वनेकइव एवमेकोऽपि त्वं गुणभेदाद्ब्रह्मादिसंज्ञकः अमरपतिरिंद्रस्तस्य स्तु



गिरिशगिरिसुतामनोनिवासंगिरिवरधारिणमीहिताभिरामं॥ सुरवरदनुजेंद्रसेवितांघ्रिंसुरवरदंरघुनायकंप्रप द्ये॥४९॥ परधनपरदारवर्जितानांपरगुणभूतिषुतुष्टमानसानां॥ परहितनिरतात्मनांसुसेव्यंरघुवरमंबुजलोचनं प्रपद्ये ॥५०॥ स्मितरुचिरविकासिताननाब्जमतिसुलभंसुरराजनीलनीलं॥ सितजलरुहचारुनेत्रशोभंरघुपति मीशगुरोर्गुरुंप्रपद्ये॥५१॥ हरिकमलजशंभुरूपभेदात्त्वमिहविभासिगुणत्रयानुवृत्तः॥ रविरिवजलपूरितोदपा त्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ५२॥ रतिपतिशतकोटिसुंदरांगंशतपथगोचरभावनाविदूरं॥ यतिपतिहृद येसदाविभातंरघुपतिमार्तिहरंप्रभुंप्रपद्ये॥ ५३॥ इत्येवंस्तुवतस्तस्यप्रसन्नोऽभूद्रघूत्तमः॥ उवाचगच्छभद्रंतेम मविष्णोःपरंपदं ॥५४॥ शृणोतियइदंस्तोत्रंलिखेद्वानियतःपठेत्॥ सयातिममसारूप्यंमरणेमत्स्मृतिंलभेत्॥५५ इतिराघवभाषितंतदाश्रुतवान्हर्षसमाकुलोद्विजः॥ रघुनंदनसाम्यमास्थितःप्रययौब्रह्मसुपूजितंपदं॥५६॥ इ तिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेअष्टमःसर्गः॥ ८ ॥

तिपात्रं तत्कृतस्तुतिविषयमित्यर्थः ॥ ५२ ॥ रतिपतिः कामः ततोऽपि शतकोटिगुणं सुंदरमंगं यस्य शतपथो माध्यंदिनानां ब्राह्मणं तद्गोचरया तत्रोक्तप्रकारया भावनयाऽविदूरं लभ्यमितियावत् तदेवाह यतिपतीत्यादि ॥ ५३ ॥ ५४ ॥ ५५ ॥ ब्रह्मसुपूजितं पदं वैकुंठं ॥ ५६ ॥ इतिश्रीम० सेतौ अरण्यकांडे अष्टमः सर्गः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥

विपिनांतरमन्यद्वनं दुःखंसमाश्रित्याभिनीय ॥ १ ॥ अद्भुतसमाकारःआश्चर्याकृतिः महद्वक्त्रंयस्यसः ॥ २ ॥ व्यापृतौव्यापारवंतौ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ संकलितौप्राप्तौ ॥ ६ ॥ नौआवां ॥ ७ ॥ छिंद्यांछिद्यावइत्यर्थः आर्षमेकवचनं ॥ ८ ॥ ९ ॥ मद्बाहुच्छेदसमर्थौ लोकेभूलोंके

ततोरामोलक्ष्मणेनजगामविपिनांतरं ॥ पुनर्दुःखंसमाश्रित्यसीतान्वेषणतत्परः ॥ १ ॥ तत्राद्भुतसमाकारोराक्षसःप्रत्यदृश्यत ॥ वक्षस्येवमहावक्त्रश्चक्षुरादिविवर्जितः ॥ २ ॥ बाहूयोजनमात्रेणव्यापृतौतस्यरक्षसः ॥ कबंधोनामदैत्येंद्रःसर्वसत्त्वविहिंसकः ॥ ३ ॥ तद्बाह्वोर्मध्यदेशेतौचरंतौरामलक्ष्मणौ ॥ ददर्शतुर्महासत्त्वंतद्बाहुपरिवेष्टितौ ॥ ४ ॥ रामःप्रोवाचविहसन्पश्यलक्ष्मणराक्षसं ॥ शिरःपादविहीनोऽयंयस्यवक्षसिचाननं ॥ ५ ॥ बाहुभ्यांलभ्यतेयद्यत्तत्तद्भक्षन्स्थितोध्रुवं ॥ आवामप्येतयोर्बाह्वोर्मध्येसंकलितौध्रुवं ॥ ६ ॥ गंतुमन्यत्रमार्गोनदृश्यतेरघुनंदन ॥ किंकर्तव्यमितोऽस्माभिरिदानींभक्षयेत्सनौ ॥ ७ ॥ लक्ष्मणस्तमुवाचेदंकिंविचारेणराघव ॥ आवामेकैकमव्यग्रौछिंद्यांरक्षोभुजौध्रुवं ॥ ८ ॥ तथेतिरामःखड्गेनभुजंदक्षिणमच्छिनत् ॥ तथैवलक्ष्मणोवामंचिच्छेदभुजमंजसा ॥ ९ ॥ ततोऽतिविस्मितोदैत्यःकौयुवांसुरपुंगवौ ॥ मद्बाहुच्छेदकौलोकेदिविदेवेषुवाकुतः ॥ १० ॥ ततोऽब्रवीद्धसन्नेवरामोराजीवलोचनः ॥ अयोध्याधिपतिःश्रीमान्राजादशरथोमहान् ॥ ११ ॥ रामोऽहंतस्यपुत्रोऽसौभ्रातामेलक्ष्मणःसुधीः ॥ ममभार्याजनकजासीतात्रैलोक्यसुंदरी ॥ १२ ॥ आवांमृगययायातौतदाकेनापिरक्षसा ॥ नीतांसीतांविचिन्वंतौचागतौघोरकानने ॥ १३ ॥

कुतः असंभावितावेव तथादिविविद्यमानेषुदेवेष्वपिअसंभावितौ तद्युवांकावित्याश्चर्येणप्रश्नः ॥ १० ॥ ११ ॥ अहंरामस्तस्यपुत्रइत्यन्वयः ॥ १२ ॥ मृगययामृगयासक्त्यायातौदूरंयातावित्यन्वयः रक्षसानीतांसीतांविचिन्वंतावित्यन्वयः ॥ १३ ॥

अत्रतवबाहुभ्यांवेष्टितौजातौ प्राणरिरक्षयातवभुजौछिन्नौ स्ववृत्तांतमुक्त्वातद्वृत्तांतंपृच्छति त्वंचकइति ॥ १४ ॥ १५॥ वरनार्यःउत्तमस्त्रियः अवध्यत्वंलब्धंमयेतिशेषः ॥ १६ ॥ १७ ॥ १८ ॥ तेनयदातेबाहूछिद्येतेतदाशापाद्विनिर्मुक्तोभविष्यसीतिसंबंधः ॥ १९ ॥ २० ॥ कदा



॥२१॥

२

बाहुभ्यांवेष्टितावत्रतवप्राणरिरक्षया ॥ छिन्नौतवभुजौत्वंचकोवाविकटरूपधृक् ॥ १४ ॥ कवंधउवाच धन्योऽहंयदिरामस्त्वमागतोऽसिममांतिकं ॥ पुरागंधर्वराजोऽहंरूपयौवनदर्पितः ॥ १५॥ विचरँल्लोकमखिलंवरनारीमनोहरः ॥ तपसाब्रह्मणोलब्धमवध्यत्वंरघूत्तम ॥ १६॥ अष्टावक्रंमुनिंदृष्ट्वाकदाचिदहसंपुरा ॥ क्रुद्धोऽसावाहदुष्टत्वंराक्षसोभवदुर्मते ॥ १७॥ अष्टावक्रःपुनःप्राहवंदितोमेदयापरः ॥ शापस्यांतंचमेप्राहतपसाद्योतितप्रभः ॥ १८ ॥ त्रेतायुगेदाशरथिर्भूत्वानारायणःस्वयं ॥ आगमिष्यतितेबाहूछिद्येतेयोजनायतौ ॥ १९ ॥ तेनशापाद्विनिर्मुक्तोभविष्यसियथापुरा ॥ इतिशप्तोऽहमद्राक्षंराक्षसींतनुमात्मनः ॥ २० ॥ कदाचिद्देवराजानमभ्यद्रवमहंरुषा॥सोऽपिवज्रेणमांरामशिरोदेशेऽभ्यताडयत्॥ २१ ॥तदाशिरोगतंकुक्षिंपादौचरघुनंदन॥ब्रह्मदत्तवरान्मृत्युर्नाभून्मेवज्रताडनात्॥ २२ ॥ मुखाभावेकथंजीवेदयमित्यमराधिपं॥ ऊचुःसर्वेदयाविष्टमांविलोक्यास्यवर्जितं ॥ २३॥ ततोमांप्राहमघवाजठरेतेमुखंभवेत् ॥ बाहूतेयोजनायामौभविष्यतइतोव्रज॥ २४॥ इत्युक्तोऽत्रवसन्नित्यंबाहुभ्यांवनगोचरान् ॥ भक्षयाम्यधुनाबाहूखंडितौमेत्वयाऽनघ ॥ २५॥ इतःपरंमांश्वभ्रास्येनिक्षिप्याग्नींधनावृते ॥ अग्निनादह्यमानोऽहंत्वयारघुकुलोत्तम ॥ २६॥

चिदिति राक्षसतनुप्राप्त्यनंतरमितिशेषः ॥ २१ ॥ तदावज्रेणताडनेशिरःकुक्षिगतं पादौचगतौनष्टावित्यनुकर्षः ॥ २२ ॥ २३ ॥ इतोव्रजेति ऊरुभ्यामेवरिंगन्निितिशेषः ॥ २४ ॥ बाहुभ्यांगृहीत्वेतिशेषः ॥ २५ ॥ श्वभ्रास्येगर्तोपरिभागे अग्नींधनावृतेअग्नियुक्तेंधनावृते ॥ २६ ॥

॥२१॥

भार्यामार्गंभार्यालाभोपायं ॥ २७ ॥ ततोदेहात् दह्यमानदेहादित्यर्थः कंदर्पसदृशःपुरुषउत्थितइत्यर्थः ॥ २८ ॥ २९ ॥ अतिसंभ्रमात्‌अ त्यादरात् अनंतंदेशापरिच्छेद्यं अनाद्यंतंआद्यंतरहितं तेनकालापरिच्छेद्यत्वमुक्तं मनोवाचामिति यतोवाचोनिवर्तंतेअप्राप्यमनसासहइ तिश्रुतेः ॥ ३० ॥ देहद्वयंहिरण्यगर्भविराड्रूपंस्थूलंसूक्ष्मंच ततोविलक्षणंदृग्रूपंकेवलज्ञानरूपं तेसूक्ष्मंरूपंतदव्यक्तंसर्वथायोगिभिर्दुर्ज्ञेयं इत रत्सर्वंजडं यतोजगज्जडंदृश्यत्वादित्यनुमानमनेनसूचितं विस्तरस्त्वस्मद्गुरुभिर्व्याससूत्रवृत्तौप्रपंचितः व्यतिरिक्तंजडत्वात्त्वत्तोभिन्नंमनस्त्वांक

पूर्वरूपमनुप्राप्यभार्यामार्गंवदामिते ॥इत्युक्तेलक्ष्मणेनाशुश्वभ्रेनिर्मायतत्रतं॥ २७॥ निक्षिप्यप्रादहत्काष्ठैस्त तोदेहात्समुत्थितः ॥ कंदर्पसदृशाकारःसर्वाभरणभूषितः॥ २८ ॥ रामंप्रदक्षिणंकृत्वासाष्टांगंप्रणिपत्यच ॥ कृतां जलिरुवाचेदंभक्तिगद्गदयागिरा ॥ २९ ॥ गंधर्वउवाच स्तोतुमुत्सहतेमेऽद्यमनोरामातिसंभ्रमात् ॥ त्वाम नंतमनाद्यंतंमनोवाचामगोचरं ॥ ३० ॥ सूक्ष्मंतेरूपमव्यक्तंदेहद्वयविलक्षणं ॥ दृग्रूपमितरत्सर्वंदृश्यंजडमनात्म कं ॥ तत्कथंत्वांविजानीयाद्व्यतिरिक्तंमनःप्रभो ॥ ३१ ॥ बुद्ध्यात्माभासयोरैक्यंजीवइत्यभिधीयते ॥ बुद्ध्यादिसा क्षीब्रह्मैवतस्मिन्निर्विषयेऽखिलं ॥३२॥ आरोप्यतेऽज्ञानवशान्निर्विकारेऽखिलात्मनि ॥ हिरण्यगर्भस्तेसूक्ष्मंदे हंस्थूलंविराट्स्मृतं॥३३॥ भावनाविषयोरामसूक्ष्मंतेध्यातृमंगलं॥ भूतंभव्यंभविष्यच्चयत्रेदंदृश्यतेजगत्॥३४॥

थंजानीयादित्यर्थः ॥ ३१ ॥ बुद्धिश्चित्तंतत्रात्माभासआत्मप्रतिबिंबस्तयोरैक्यंभेदानवभासस्तद्विषयोजीवःबुध्यादीनांजडानांसाक्षी अंत र्यामी ब्रह्मैवशुद्धंचैतन्यंयतोनिर्विषयेवाङ्मनसयोरगोचरेतस्मिन्निदमखिलंजगत् अज्ञानवशान्निर्विकारेत्वयिअरोप्यते हिरण्यगर्भःसूक्ष्मंदे हं सकललिंगदेहसमष्टिरूपत्वात्तस्येतिभावः सकलस्थूलसमष्टिर्विराडितिभावः ॥ ३२ ॥ ३३ ॥ ध्यातॄणांमंगलंस्वपदप्रदत्वात् अतस्तेसूक्ष्मं भावनाविषयः हृदयपुंडरीकादौध्येयमितियावत् यद्विषयभावनायांसिद्धायांभूतभविष्यवर्तमानसर्वपदार्थज्ञानंसंभवतीत्याह भूतमित्यादि भव्यंवर्तमान ॥ ३४ ॥

अंडकोशरूपोभगवतोविराड्देहस्तत्रमहदादिभिरावृतेइति अत्रेयंपौराणिकसांख्यसंमताप्रक्रिया स्वव्याप्याहंकारावरणाद्दशगुणितंमहत्तत्त्वं बाह्यमावरणं तन्मध्येऽहंकारावरणं तदपिस्वव्याप्यव्योमावरणाद्दशगुणितं तन्मध्येव्योमावरणं तस्यदशगुणितस्यमध्येवाय्वावरणं तस्यापिदशगुणितस्यमध्येतेजोवरणं तेजसोदशगुणितस्यमध्येजलावरणं जलस्यदशगुणितस्यमध्येपृथिव्यावरणं तस्यादशगुणायामध्येपृथिवीतेजोद्भूतमंडं तस्यापिदशगुणस्यांडस्यमध्येचतुर्दशभुवनात्मकंस्वयंभुवःस्थूलंशरीरं स्वयंभूसंकल्पादेवजायतेइतितदाह सप्तभिरुत्तरगुणैरिति उत्तरदशगुणैःस्वस्वांतर्गतापेक्षयेत्यर्थः सधारणाश्रयः भ्रूमध्यदेशेषुभावनाश्रयइत्यर्थः॥ ३५ ॥ तदेवविराड्रूपंध्यानयोग्यंदर्शयति त्वमेवेति

स्थूलेंऽडकोशेदेहेतेमहदादिभिरावृते॥ सप्तभिरुत्तरगुणैर्वैराजोधारणाश्रयः॥ ३५॥ त्वमेवसर्वकैवल्यंलोकास्तेऽवयवाःस्मृताः॥ पातालंतेपादमूलंपार्ष्णिस्तवमहातलं ॥ ३६॥ रसातलंतेगुल्फौतुतलातलमितीर्यते ॥ जानुनीसुतलंरामऊरूतेवितलंतथा ॥ ३७ ॥ अतलंचमहीरामजघनंनाभिगंनभः ॥ उरस्थलंतेज्योतींषिग्रीवातेमहउच्यते ॥ ३८ ॥ वदनंजनलोकस्तेतपस्तेशंखदेशगं ॥ सत्यलोकोरघुश्रेष्ठशीर्षण्यास्तेसदाप्रभो ॥ ३९॥ इंद्रादयोलोकपालाबाहवस्तेदिशःश्रुती ॥ अश्विनौनासिकेरामवक्त्रंतेऽग्निरुदाहृतः ॥ ४० ॥ चक्षुस्तेसवितारामनश्चंद्रउदाहृतः॥ भ्रूभंगएवकालस्तेबुद्धिस्तेवाक्पतिर्भवेत् ॥ ४१ ॥ रुद्रोऽहंकाररूपस्तेवाचश्छंदांसितेऽव्यय ॥ यमस्तेद्रंष्ट्रदेशस्थोनक्षत्राणिद्विजालयः॥ ४२ ॥

सर्वकैवल्यमंतेप्राप्यंवस्त्वित्यर्थः लोकास्तेवयवाइतिसामान्यतउक्त्वातदेवविशेषेणाह पातालमित्यादि पातालंसप्तमोऽधोलोकः ॥ ३६॥तलातलमितीर्यतइत्यस्यगुल्फोर्ध्वंजान्वधोभागइतिशेषः॥ ३७॥अतलंचेत्यस्योर्वोरूर्ध्वंजघनाधोभागइतिशेषः नाभेरधोभागगंजघनंतन्महीपृथ्वीत्यर्थः नभोभुवर्लोकोऽत्र ज्योतींषिस्वर्गलोकोऽत्र महर्महर्लोकः॥ ३८ ॥तपस्तपोलोकः॥ ३९॥श्रुतीश्रोत्रे ॥ ४० ॥कालोनिमेषादिर्द्विपरार्धांतः वाक्पतिर्बृहस्पतिः॥ ४१॥अहंकारश्चित्तं छंदांसिवेदास्तेवाचः वागित्यर्थः दंष्ट्रदेशस्थोदंष्ट्रादेशस्थइत्यर्थः ऱ्हस्वआर्षः द्विजालयोदंतपंक्तयः॥ ४२॥

मोहकरीसकलजनमोहकरी ॥ ४३ ॥ निमिषोरात्रिरुन्मेषणंदिवा सप्तसमुद्राःकुक्षिस्तव नद्यस्तवनाड्यः ॥ ४४ ॥ दृष्टिस्तवरेतः ज्ञानशक्तिस्तवमहिमासर्वतआधिक्यं त्वत्तुल्यज्ञानशक्तिर्नान्यत्रेतिभावः ॥ ४५ ॥ अतआधिक्यमन्यत्किंचननहिकिमपिनेत्यर्थः ॥ ४६ ॥ सरोमपुलकइत्यनेनप्रेमरसलक्षणमुक्तं येनगात्रेसरोमपुलकतासप्रेमरसः इदंमेभूयाल्लुब्धंचमानस्यत्वितीच्छाप्रेमेत्याहुः ॥ ४७ ॥ अयंजीवोयदातेस्थूलरूपभावकोभवतितदैवतस्यमुक्तिःस्याद्भवेदित्यर्थः तत्स्थूलभावनमप्यास्तांयद्यशक्यंतदातिष्ठतु तवैतद्रूपमेवाहंविचिंतयेचिंतयिष्यामि ॥

हासोमोहकरीमायास्तृष्टिस्तेपांगमोक्षणं ॥ धर्मःपुरस्तेऽधर्मश्चपृष्ठभागउदीरितः ॥ ४३ ॥ निमिषोन्मेषणेरात्रिर्दिवाचैवरघूत्तम ॥ समुद्राःसप्ततेकुक्षिर्नाड्योनद्यस्तवप्रभो ॥ ४४ ॥ रोमाणिवृक्षौषधयोरेतोवृष्टिस्तवप्रभो ॥ महिमाज्ञानशक्तिस्तेएवंस्थूलंवपुस्तव ॥ ४५ ॥ यदस्मिंस्थूलरूपेतेमनःसंधार्यतेनरैः ॥ अनायासेनमुक्तिःस्यादतोऽन्यन्नहिकिंचन ॥ ४६ ॥ अतोऽहंराममरूपंतेस्थूलमेवानुभावये ॥ यस्मिन्ध्यातेप्रेमरसःसरोमपुलकोभवेत् ॥ ४७ ॥ तदैवमुक्तिःस्याद्रामयदातेस्थूलभावकः ॥ तदप्यास्तांतवैवाहमेतद्रूपंविचिंतये ॥ ४८ ॥ धनुर्बाणधरंश्यामंजटावल्कलभूषितं ॥ अपीच्यवयसंसीतांविचिन्वंतंसलक्ष्मणं ॥ ४९ ॥ इदमेवसदामेस्यान्मानसेरघुनंदन ॥ सर्वज्ञःशंकरःसाक्षात्पार्वत्यासहितःसदा ॥ ५० ॥ त्वद्रूपमेवंसततंध्यायन्नास्तेरघूत्तम ॥ मुमूर्षूणांसदाकाश्यांतारकंब्रह्मवाचकं ॥ ५१ ॥ रामरामेत्युपदिशन्सदासंतुष्टमानसः ॥ अतस्त्वंजानकीनाथपरमात्मासुनिश्चितः ॥ ५२ ॥

॥ ४८ ॥ तद्रूपमाह धनुरिति अपीच्यवयसंतारुण्यवयस्कं ॥ ४९ ॥ एतद्रूपध्यानप्रार्थनेहेतुमाह सर्वज्ञइत्यादि एवंत्वद्रूपंअनुपदोक्तंधनुरित्यादि एवंचशंकरध्येयत्वादेतद्रूपध्यानप्रार्थनमितिभावः ॥ ५० ॥ ननुमनुष्यस्यममकिमेतत्प्रार्थ्यतेइत्याशंकायांतस्यपरमात्मत्वंयुक्त्यासाधयति मुमूर्षूणामिति तारकंब्रह्मतत्त्वमस्यादिप्रतिपाद्यंतस्यवाचकंप्रतिपादकं ॥ ५१ ॥ रमंतेयोगिनोऽत्रेतिव्युत्पत्त्येतिभावः ॥ ५२ ॥

त्वांनजानंतिपरमात्मत्वेनेत्यर्थः ॥ ५३ ॥ ५४ ॥ योगिभिरनेनैवदेहेनयोगबलाद्गम्यंस्वर्लोकं ॥ ५५ ॥ नित्यानुभवानुमेयंनित्यंयोऽनुभवो ज्ञानंतत्तद्वस्तुविषयंतेनानुमेयं तदुक्तंभगवद्गीतायां सर्वस्यचाहंहृदिसन्निविष्टोमत्तःस्मृतिर्ज्ञानमपोहनंचेति ॥ ५६ ॥ इतिश्रीमत्स० सेतौ

सर्वेतेमाययामूढास्त्वांनजानंतितत्त्वतः॥नमस्तेरामभद्रायवेधसेपरमात्मने॥५३॥अयोध्याधिपतेतुभ्यंनमःसा मित्रिसेवित ॥ त्राहित्राहिजगन्नाथमांमायानावृणोतुते ॥ ५४ ॥ रामउवाच तुष्टोऽहंदेवगंधर्वभक्त्यास्तु त्याचतेऽनघ ॥ याहिमेपरमंस्थानंयोगिगम्यंसनातनं ॥ ५५ ॥ जपंतियेनित्यमनन्यबुद्ध्याभक्त्यात्वदुक्तंस्तवमा गमोक्तं ॥ तेऽज्ञानसंभूतभवंविहायमांयांतिनित्यानुभवानुमेयं ॥५६॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्व रसंवादेअरण्यकांडेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥ लब्ध्वावरंसगंधर्वःप्रयास्यन्राममब्रवीत् ॥ शबर्यास्तेपुरोभागेआश्रमेरघुनंदन ॥ १ ॥ भक्त्यात्वत्पादकमलेभक्तिमार्गविशारदा ॥ तांप्रयाहिमहाभागसर्वं तेकथयिष्यति ॥ २ ॥ इत्युक्त्वाप्रययौसोऽपिविमानेनार्कवर्चसा ॥ विष्णोःपदंराममनामस्मरणेफलमीदृशं ॥ ३ ॥ त्यक्त्वातद्विपिनंघोरंसिंहव्याघ्रादिदूषितं॥ शनैरथाश्रमपदंशबर्यारघुनंदनः॥४॥ शबरीराममालोक्यलक्ष्मणेनस मन्वितं ॥ आयांतमाराद्धर्षेणप्रत्युत्थायाचिरेणसा ॥ ५ ॥ पतित्वापादयोरग्रेहर्षपूर्णाश्रुलोचना ॥ स्वागतेनाभि नंद्याथस्वासनेसन्यवेशयत् ॥ ६ ॥

अरण्यकांडेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ प्रयास्यन्स्वस्थानमितिशेषः पुरोभागेदृश्यमानेआश्रमेत्व च्चरणभक्तिमार्गविशारदाशबरीआस्ते ॥ १ ॥ सातेसर्वंसीतावस्थितिस्थानंतत्प्राप्त्युपायंचेत्यर्थः ॥ २ ॥ विष्णोःपदंस्वर्लोकं ॥ ३ ॥ ४ ॥ अ चिरेणशीघ्रं ॥ ५ ॥ पादयोरग्रेतदंत्यभागे स्वासनेशोभनेआसने ॥ ६ ॥

आदृताअर्घ्यादिभिस्तद्रूपया ॥७॥ सपर्ययापूजासामग्र्यारामंसंपूज्य रामार्थंसंगृहीतानिदिव्यानि ॥८॥ फलानिरामायददावित्यन्वयः तदुक्तं पाद्मेशबरींप्रस्तुत्य प्रत्युद्गम्यप्रणम्याथनिवेश्यकुशविष्टरे पादप्रक्षालनंकृत्वातत्तोयंपापनाशनं शिरसाधार्यपीत्वाचवन्यैःपुष्पैरथार्चयत् फलानिचसुपक्वानिमूलानिमधुराणिच स्वयमास्वाद्यमाधुर्यंपरीक्ष्यपरिभक्ष्यच पश्चान्निवेदयामासराघवाभ्यांदृढव्रता फलान्यास्वाद्यकाकु

राम लक्ष्मणयोःसम्यक्पादौप्रक्षाल्यभक्तितः॥ तज्जलेनाभिषिच्यांगमथार्घ्यादिभिरादृता ॥ ७ ॥ संपूज्यविधिवद्रामंससौमित्रिंसपर्यया ॥ संगृहीतानिदिव्यानिरामार्थंशबरीमुदा ॥८॥ फलान्यमृतकल्पानिददौरामायभक्तितः॥ पादौसंपूज्यकुसुमैःसुगंधैःसानुलेपनैः ॥ ९ ॥ कृतातिथ्यंरघुश्रेष्ठमुपविष्टंसहानुजं॥ शबरीभक्तिसंपन्नाप्रांजलिर्वाक्यमब्रवीत् ॥ १० ॥ अत्राश्रमेरघुश्रेष्ठगुरवोमेमहर्षयः ॥ स्थिताःशुश्रूषणंतेषांकुर्वंतीसमुपस्थिता॥ ॥ ११ ॥ बहुवर्षसहस्राणिगतास्तेब्रह्मणःपदं॥ गमिष्यंतोऽब्रुवन्मांत्वंवसात्रैवसमाहिता॥ १२॥ रामोदाशरथिर्जातःपरमात्मासनातनः॥ राक्षसानांवधार्थायऋषीणांरक्षणायच॥ १३॥ आगमिष्यतिचैकाग्रध्याननिष्ठास्थिराभव॥ इदानींचित्रकूटाद्रावाश्रमेवसतिप्रभुः॥ १४ ॥ यावदागमनंतस्यतावद्रक्षकलेवरं॥ दृष्ट्वैवराघवंदग्ध्वादेहंयास्यसितत्पदं॥ १५ ॥ तथैवाकरवंरामत्वद्ध्यानैकपरायणा ॥ प्रतीक्ष्यागमनंतेऽद्यसफलंगुरुभाषितं॥ १६॥

स्थस्तस्यैमुक्तिपरांददाविति ॥ ९ ॥ १० ॥ तेषांशुश्रूषणंकुर्वंतीअहंसम्यकूउपतेषांसमीपेस्थिता ॥ ११ ॥ बहुवर्षसहस्राणीतिपूर्वान्वयिगतास्तेइत्यस्येदानीमित्यादिः गमिष्यंतस्तेत्वमत्रैवसमाहितावसेतिमामब्रुवन् ॥ १२ ॥ १३ ॥ आगमिष्यतिअत्राश्रमेइतिशेषः अतएकाग्रंयथाभवतितथा विषयांतरसंचाररहितमितियावत् तद्ध्याननिष्ठाअत्रस्थिराभवेत्यर्थः तेषांगमनकालमाह इदानीमिति इत्युक्त्वातेगताइत्यर्थः॥ ॥ १४॥ १५॥ तेआगमनंप्रतीक्ष्यस्थिताऽहंतथैवयथागुरुभिरुक्तंतथाऽकरवं तच्चमेगुरुभाषितंरामोऽत्रायास्यतीत्येतत् अद्यसफलंजातं॥ १६॥

हेराम तवैतद्रूपस्यदर्शनंमेगुरूणामपिनजातं हेऽप्रमेयात्मन् अहंयोषित् अनेनसर्वधर्मानर्हत्वंतत्रापिहीनजात्युद्भवा ॥ १७॥ तवदासःतद्दासे त्येवंक्रमेणशतसंख्यातउत्तरस्यापिदासीत्वेनाधिकारः साक्षात्तवदास्येतुसुतरामनधिकारः ॥ १८ ॥ इतिहेतोः योगिनामपिमनोवागगो चरस्त्वंमेमयाकथंदृष्टइतिप्रश्नः स्तोतुमित्यादिर्विनयः ॥ १९ ॥ पुंस्त्वस्त्रीत्वकृतोविशेषोवाजातिनामाश्रमादयस्तत्कृताविशेषावानमद्भजने कारणंकिंतुभक्तिरेव नतुपुंसोब्राह्मणस्यैवाधिकारइत्यर्थः ॥ २० ॥ तदेवोपपादयति यज्ञेत्यादि वेदाध्ययनकर्मभिः वेदाध्ययनेनवेदोक्तक

तवसंदर्शनंरामगुरूणामपिमेनहि॥ योषिन्मूढाऽप्रमेयात्मन्हीनजातिसमुद्भवा ॥ १७॥ तवदासस्यदासानांश तसंख्योत्तरस्यवा॥ दासीत्वेनाधिकारोऽस्तिकुतःसाक्षात्तवैवहि॥१८॥ कथंरामाद्यमेदृष्टस्त्वंमनोवागगोचरः॥ स्तोतुंनजानेदेवेशकिंकरोमिप्रसीदमे॥ १९॥ श्रीरामउवाच पुंस्त्वेस्त्रीत्वेविशेषोवाजातिनामाश्रमादयः॥ नकारणंयद्भजनेभक्तिरेवहिकारणं ॥ २० ॥ यज्ञदानतपोभिर्वावेदाध्ययनकर्मभिः ॥ नैवद्रष्टुमहंशक्योमद्भक्ति विमुखैःसदा ॥ २१ ॥ तस्माद्भामिनिसंक्षेपाद्वक्ष्येऽहंभक्तिसाधनं ॥ सतांसंगतिरेवात्रसाधनंप्रथमंस्मृतं ॥ २२॥ द्वितीयंमत्कथालापस्तृतीयंमद्गुणेरणं ॥ व्याख्यातृत्वंमद्वचसांचतुर्थंसाधनंभवेत् ॥ २३॥ आचार्योपासनंभद्रे मद्बुध्यामाययासदा ॥ पंचमंपुण्यशीलत्वंयमादिनियमादिच॥ २४॥

र्मानुष्ठानैश्चेत्यर्थः ॥ २१ ॥ सत्संगएवप्रथमंमुख्यंसाधनमित्यर्थः ॥ २२ ॥ मत्कथालापःमच्चरितनिबंधालापइत्यर्थः मद्गुणेरणंमद्गुणकीर्तनं म द्वचसांमत्प्रतिपादकवचसामुपनिषद्रूपाणांव्याख्यातृत्वं ॥ २३ ॥ अमाययाऽच्छलेन मद्बुध्याईश्वरबुध्यागुरुसेवा पुण्यशीलत्वंपुण्यविषये स्वारसिकीप्रवृत्तिः यमादि अहिंसाऽस्तेयब्रह्मचर्यापरिग्रहायमाः आदिनाआसनप्राणायामप्रत्याहाराः नियमादि शौचसंतोषतपःस्वाध्या येश्वरप्रणिधानानिनियमाः आदिनाधारणाध्यानसमाधयः ॥ २४ ॥

मत्पूजनेनिष्ठातत्परता ममयेमंत्रास्तदुपासकत्वंतदुपासनंतच्चसांगंतत्तन्मंत्रकल्पोक्तांगसहितं ॥ २५ ॥ अधिकामत्तोऽप्यधिकेत्यर्थः पुत्रादरस्यपितुरिवतदादरस्यममाधिकसंतोषदत्वादितिभावः मन्मतिःसर्वांतर्यामीभगवानितिसर्वंभगवतिवर्ततेइतिवामतिः विरागित्वंवैराग्यं शमोंऽतरिंद्रियनिग्रहः आदिनाबाह्येंद्रियनिग्रहरूपोदमः ॥२६॥ ममतत्त्वविचारः स्वस्यतत्त्वंशुद्धंब्रह्मतद्विचारस्तस्वमस्यादिवाक्यतः ॥ २७॥ यस्यकस्यवेत्यस्यैवप्रपंचः स्त्रियइति यस्यतन्नवविधंसाधनंजायतेतस्यप्रेमलक्षणाभक्तिःसंजायते ममेयंभूयात्भूत्वाचमानश्यत्वित्येवमिच्छा

निष्ठामत्पूजनेनित्यंषष्ठंसाधनमीरितं ॥ ममभंत्रोपासकत्वंसांगंसप्तममुच्यते ॥ २५ ॥ मद्भक्तेष्वधिकापूजासर्वभूतेषुमन्मतिः ॥ बाह्यार्थेषुविरागित्वंशमादिसहितंतथा ॥ २६ ॥ अष्टमंनवमंतत्त्वविचारोममभामिनि ॥ एवंनवविधाभक्तिसाधनंयस्यकस्यवा ॥ २७ ॥ स्त्रियोवापुरुषस्यापितिर्यग्योनिगतस्यवा ॥ भक्तिःसंजायते प्रेमलक्षणाशुभलक्षणे ॥ २८ ॥ भक्तौसंजातमात्रायांमत्तत्त्वानुभवस्तदा ॥ ममानुभवसिद्धस्यमुक्तिस्तत्रैवजन्मनि ॥ २९ ॥ स्यात्तस्मात्कारणंभक्तिर्मोक्षस्येतिसुनिश्चितं ॥ प्रथमंसाधनंयस्यभवेत्तस्यक्रमेणतु ॥ ३० ॥ भवेत्सर्वंततोभक्तिर्मुक्तिरेवसुनिश्चितं ॥ यस्मान्मद्भक्तियुक्तात्वंततोऽहंत्वामुपस्थितः ॥ ३१ ॥ इतोमद्दर्शनान्मुक्तिस्तवनास्त्यत्रसंशयः ॥ यदिजानासिमेब्रूहिसीताकमललोचना ॥ ३२ ॥ कुत्रास्तेकेनवानीताप्रियामेप्रियदर्शना ॥ ॥ ३३ ॥ शबर्युवाच देवजानासिसर्वज्ञसर्वंत्वंविश्वभावन ॥ तथाऽपिपृच्छसेयन्मांलोकाननुसृतःप्रभो ॥ ३४ ॥

प्रेम ॥२८॥मत्तत्वंब्रह्म अनुभवसिद्धस्येतितृतीयासमासः मुक्तिःस्यादित्यन्वयः॥२९॥३०॥ सर्वंनवविधंसाधनं ततोभक्तिस्ततोमुक्तिरित्यन्वयः ॥३१॥ इतोमद्दर्शनात् अस्मादेवमद्दर्शनादित्यर्थः ॥ ३२ ॥ ३३ ॥ सर्वंजानासीत्यत्रहेतुगर्भंविशेषणंसर्वज्ञेति यत्पृच्छसेतल्लोकाननुसृतोऽसीतिजानेइतिशेषः ॥ ३४ ॥

यतस्त्वंलोकाननुसृतस्ततइत्यर्थः ॥ ३५ ॥ तत्राप्युपायमप्याह इतइति ॥ ३६ ॥ भीतभीतःभीतेभ्योऽपिअतिभीतइत्यर्थः ॥ ३७ ॥ कस्य भयादेवंभीतस्तत्राह वालिनइति भ्रातुर्वालिनोभयादित्यर्थः ननुतत्रवासेनकथमभयमतआह तद्वालिनोऽगम्यं एवंचार्थोवाल्मीकिनासवि स्तरंदर्शितःअग्रेचात्रापिदर्शयिष्यति तेनसुग्रीवेणसख्यंकुरु तस्यापिविपद्ग्रस्तत्वात्तेनसख्यंसुलभंनतुवालिनेतिभावः ॥ ३८ ॥ ३९ ॥ विष्णो



ततोऽहमभिधास्यासिमीतायत्राधुनास्थिता ॥ रावणेनहृतासीतालंकायांवर्ततेऽधुना ॥ ३५ ॥ इतःसमीपेरा मास्तेपंपानामसरोवरं ॥ ऋष्यमूकगिरिर्नामतत्समीपेमहानगः ॥ ३६ ॥ चतुर्भिर्मंत्रिभिःसार्धंसुग्रीवोवानरा धिपः ॥ भीतभीतःसदातत्रतिष्ठत्यतुलविक्रमः ॥ ३७ ॥ वालिनश्चभयाद्भ्रातुस्तदगम्यमृषेर्भयात् ॥ वालिनस्तत्रग च्छत्वंतेनसख्यंकुरुप्रभो ॥ ३८ ॥ सुग्रीवेणससर्वंतेकार्यंसंपादयिष्यति ॥ अहमग्निंप्रवेक्ष्यामितवाग्रेरघुनंदन ॥ ॥ ३९ ॥ मुहूर्तंतिष्ठराजेंद्रयावद्दग्ध्वाकलेवरं ॥ यास्यामिभगवन्रामतवविष्णोःपरंपदं ॥ ४० ॥ इतिरामंसमामं त्र्यप्रविवेशहुताशनं ॥ क्षणान्निर्धूयसकलमविद्याकृतबंधनं ॥ रामप्रसादाच्छबरीमोक्षंप्रापातिदुर्लभं ॥ ४१ ॥ किंदुर्लभंजगन्नाथेश्रीरामेभक्तवत्सले ॥ प्रसन्नेऽधमजन्मापिशबरीमुक्तिमापसा ॥ ४२ ॥ किंपुनर्ब्राह्मणामु ख्याःपुण्याःश्रीरामचिंतकाः ॥ मुक्तिंयांतीतितद्भक्तिर्मुक्तिरेवनसंशयः ॥ ४३ ॥

स्तवपरंपदंब्रह्मलोकं ॥ ४० ॥ अविद्याकृतबंधनंसंसारः ॥ ४१ ॥ विशेषेसामान्यमर्थांतरंन्यस्यति किमिति श्रीरामेप्रसन्नेकिंदुर्लभं तमेववि शेषंसामान्योपपादकत्वेनाह यदधमजन्माशबर्यपिरामेप्रसन्नेमुक्तिमाप ॥ ४२ ॥ मुक्तिंयांतीति किंपुनर्वक्तव्यमित्यन्वयः यतस्तद्भक्तिर्मुक्ति रेव अनेनरूपकेणसर्वथातस्यामुक्तिजनकत्वंसूचितं ॥ ४३ ॥





॥२५॥

यतोरामचंद्रस्यभक्तिर्मुक्तिदाअतोरामस्यकामदुघंचरणपद्मयुगलंसेवध्वं तद्विषयेऽत्युत्सुकाअत्युत्कटेच्छावंतः संतःनानाप्रकारामज्ञानविशे

भक्तिर्मुक्तिविधायिनीभगवतःश्रीरामचंद्रस्येहेलोकाःकामदुघांघ्रिपद्मयुगलंसेवध्वमत्युत्सुकाः ॥ नानाज्ञान
विशेषमंत्रवितर्तित्यक्त्वासुदूरेभृशंरामंश्यामतनुंस्मरारिहृदयेभांतंभजध्वंबुधाः॥४४॥ इतिश्रीमद०उमामहे
श्वरसंवादेअरण्यकांडेदशमःसर्गः॥१०॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

षभूतांअज्ञानस्यैवतन्मूलसंसारस्यैवजवनिकांमंत्रवितर्तिमंत्रसमूहंत्यक्त्वाभृशमतिशयेनरामंभजंतु तत्रहेतुगर्भविशेषणं स्मरारिहृदयेभांतं
स्मरारिःशिवः ॥ ४४ ॥ इतिश्रीमत्सकलराजवि०श्रीरामवर्मणःकृतावध्यात्मरामायणेसेतौअरण्यकांडेदशमःसर्गः ॥ १० ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ श्रीसीतारामचंद्रायनमः ॥ ततइति सरसांश्रेष्ठंपंपासरः ॥ १ ॥ विस्मयहेतूनाह क्रोशमात्रमिति अगाधामलशंबरं नीरक्षीरांबुशंबरमित्यमरः अंबुजंपद्मंकल्हारस्तद्विशेषः एवमुत्पलपदेनकुमुदविशेषोत्र ॥ २ ॥ हंसादयःपक्षिविशेषाः क्रौंचनादैरुपनादितं प्रतिध्वनिमत् ॥ ३ ॥ सतांमनोवत्स्वच्छजलं ॥ ४ ॥ उपस्पृश्यस्नात्वा ॥ ५ ॥ दांतौनिगृहीतेंद्रियौ विविधान्वृक्षान्गिरेःशोभांचपश्यंतौ ॥

श्रीमहादेवउवाच ततःसलक्ष्मणोरामःशनैःपंपासरस्तटं ॥ आगत्यसरसांश्रेष्ठंदृष्ट्वाविस्मयमाययौ ॥ १ ॥ क्रोशमात्रंसुविस्तीर्णमगाधामलशंबरं ॥ उत्फुल्लांबुजकह्लारकुमुदोत्पलमंडितं ॥ २ ॥ हंसकारंडवाकीर्णचक्रवाकादिशोभितं ॥ जलकुक्कुटकोयष्टिक्रौंचनादोपनादितं ॥ ३ ॥ नानापुष्पलताकीर्णनानाफलसमावृतं ॥ सतांमनःस्वच्छजलंपद्मकिंजल्कवासितं ॥ ४ ॥ तत्रोपस्पृश्यसलिलंपीत्वाश्रमहरंविभुः ॥ सानुजःसरसस्तीरेशीतलेनपथाययौ ॥ ५ ॥ ऋष्यमूकगिरेःपार्श्वेगच्छंतौरामलक्ष्मणौ ॥ धनुर्बाणकरौदांतौजटावल्कलमंडितौ ॥ पश्यंतौविविधान्वृक्षान्गिरेःशोभांसुविक्रमौ ॥ ६ ॥ सुग्रीवस्तुगिरेर्मूर्ध्निचतुर्भिःसहवानरैः ॥ स्थित्वाददर्शतौयांतावारुरोहगिरेःशिरः ॥ ७ ॥ भयादाहहनूमंतंकौतौवीरवरौसखे ॥ गच्छजानीहिभद्रंतेबटुर्भूत्वाद्विजाकृतिः ॥ ८ ॥ वालिनाप्रेषितौकिंवामांहंतुंसमुपागतौ ॥ ताभ्यांसंभाषणंकृत्वाजानीहिहृदयंतयोः ॥ ९ ॥ यदितौदुष्टहृदयौसंज्ञांकुरुकराग्रतः ॥ विनयावनतोभूत्वाएवंजानीहिनिश्चयं ॥ १० ॥ तथेतिबटुरूपेणहनुमान्समुपागतः ॥ विनयावनतोभूत्वारामंनत्वेदमब्रवीत् ॥ ११ ॥

॥ ६ ॥ तौददर्शदृष्ट्वाचभयाद्गिरेःशिरआरुरोहेत्यन्वयः ॥ ७ ॥ भद्रंतेइतिप्रेरणानिमित्तंआशीर्वादः ॥ ८ ॥ किंवालिनाप्रेषितौमांहंतुमागतौवापक्षांतरेउतान्यथेतितयोर्हृदयंसंभाषणंकृत्वाजानीहि अंतःकरणानुरूपत्वाद्वाचःसंभाषणेनतन्निर्णयः ॥ ९ ॥ संज्ञांकुरु पलायनार्थमितिशेषः एवंसंकेतस्यनिश्चयंजानीहीत्यर्थः ॥ १० ॥ ११ ॥

॥ १२ ॥ भातिजानाति प्रधानपुरुषौमुख्यपुरुषौनरनारायणावित्यर्थः मुख्यत्वमेवाह जगद्धेतूइत्यादिना ॥ १३ ॥ लीलयाचरंताविवगच्छं ताविववस्तुतोविभुत्वाद्गतिहीनावेव ॥ १४ ॥ स्थितिलयौसर्गंचलीलयाकर्तुमुद्यतौ रक्षसांलयस्तदितरजगतःसर्गस्थिती ॥ १५ ॥ प्रेरकौअंत र्यामितयेत्यर्थः तदेवाह सर्वहृदयस्थाविति इहलोकेचरंतौइत्यन्वयः ॥ १६ ॥ शब्दशास्त्रंव्याकरणं ॥ १७ ॥ कृत्स्नंबह्वित्यर्थः ज्ञानविग्रहइ

कौयुवांपुरुषव्याघ्रौयुवानौवीरसंमतौ॥ द्योतयंतौदिशःसर्वाःप्रभयाभास्कराविव॥ १२ ॥ युवांत्रैलोक्यकर्ताराविवितिभातिमनोमम ॥ युवांप्रधानपुरुषौजगद्धेतूजगन्मयौ ॥ १३ ॥ माययामानुषाकारौचरंताविवलीलया॥ भूभारहरणार्थायभक्तानांपालनायच॥ १४ ॥ अवतीर्णाविहपरौचरंतौक्षत्रियाकृती ॥ जगत्स्थितिलयासर्गंलीलयाकर्तुमुद्यतौ॥ १५॥ स्वतंत्रौप्रेरकौसर्वहृदयस्थाविहेश्वरौ ॥ नरनारायणौलोकेचरंताविवितिमेमतिः ॥ १६ ॥ श्रीरामोलक्ष्मणंप्राहपश्यैनंबटुरूपिणं ॥ शब्दशास्त्रमशेषेणश्रुतंनूनमनेकधा ॥ १७॥ अनेनभाषितंकृत्स्नंनकिंचिदपशब्दितं॥ ततःप्राहहनूमंतंराघवोज्ञानविग्रहः॥ १८॥ अहंदाशरथीरामस्त्वयंमेलक्ष्मणोऽनुजः॥ सीतयाभार्ययासार्द्धंपितुर्वचनगौरवात् ॥ १९ ॥ आगतस्तत्रविपिनेस्थितोहंदंडकेद्विज ॥ तत्रभार्याहृतासीता रक्षसाकेनचिन्मम ॥ २० ॥ तामन्वेष्टुमिहायातौत्वंकोवाकस्यवावद ॥ बटुरुवाच सुग्रीवोनामराजायोवानराणांमहामतिः ॥ चतुर्भिर्मंत्रिभिःसार्धंगिरिमूर्धनितिष्ठति ॥ २१ ॥ भ्राताकनीयान्सुग्रीवोवालिनःपापचेतसः॥तेननिष्काशितोभार्याहृतातस्येहवालिना॥ २२ ॥

त्यनेनचिदानंदएवमाययाएवंशरीररूपेणभातीतिसूचितं ॥ १८ ॥ १९ ॥ २० ॥ यःसुग्रीवोनामतेननाम्नाप्रसिद्धोवानराणांराजासगिरिमूर्ध नितिष्ठतीत्यन्वयः ॥ २१ ॥ तत्रावस्थानेहेतुमाह भ्रातेति निष्काशितःहीनराज्यःकृतः भार्याचहृता ॥ २२ ॥

॥ २३ ॥ तेनसख्यंतुयुक्तंसमदुःखत्वात् नतुवालिनेतिभावः ॥ २४ ॥२५॥ तस्यापियत्कार्यंवालिवधरूपं॥२६॥पर्वतोपरिगमनेश्रमातिशया त्त्वस्कंधारोहणप्रेरणा ॥ २७ ॥ मंत्रिभिःसहेतिशेषः तथेतिउक्त्वेतिशेषः ॥ २८ ॥ उत्पपातउत्पत्यजगामेत्यर्थः स्थितौस्थापितावित्य

तद्भयादृष्यमूकाख्यंगिरिमाश्रित्यसंस्थितः ॥ अहंसुग्रीवसचिवोवायुपुत्रोमहामते ॥ २३ ॥ हनूमान्नामविख्या तोत्यंजनीगर्भसंभवः ॥ तेनसख्यंत्वयायुक्तंसुग्रीवेणरघूत्तम ॥ २४ ॥ भार्यापहारिणंहंतुंसहायस्तेभविष्यति ॥ इदानीमेवगच्छामआगच्छयदिरोचते ॥ २५ ॥ श्रीरामउवाच अहमप्यागतस्तेनसख्यंकर्तुंकपीश्वर ॥ सख्युस्तस्यापियत्कार्यंतत्करिष्याम्यसंशयं ॥ २६ ॥ हनूमान्स्वस्वरूपेणस्थितोराममथाब्रवीत् ॥ आरोहतांमम स्कंधौगच्छामःपर्वतोपरि ॥ २७ ॥ यत्रतिष्ठतिसुग्रीवोमंत्रिभिर्वालिनोभयात् ॥ तथेतितस्यारुरोहस्कंधंरामो थलक्ष्मणः ॥ २८ ॥ उत्पपातगिरेर्मूर्ध्निक्षणादेवमहाकपिः ॥ वृक्षच्छायांसमाश्रित्यस्थितौतौरामलक्ष्मणौ ॥ २९ ॥ हनूमानपिसुग्रीवमुपगम्यकृतांजलिः ॥ व्येतुतेभयमायातौराजन्श्रीरामलक्ष्मणौ ॥ ३० ॥ शीघ्रमुत्तिष्ठरामेण सख्यंतेयोजितंमया ॥ अग्निंसाक्षिणमारोप्यतेनसख्यंद्रुतंकुरु ॥ ३१ ॥ ततोतिहर्षात्सुग्रीवःसमागम्यरघूत्तमं ॥ वृक्षशाखांस्वयंछित्वाविष्टरायददौमुदा ॥ ३२ ॥ हनूमान्लक्ष्मणायादात्सुग्रीवायचलक्ष्मणः ॥ हर्षेणमहताविष्टाः सर्वएवावतस्थिरे ॥ ३३ ॥ लक्ष्मणस्त्वब्रवीत्सर्वंरामवृत्तांतमादितः ॥ वनवासाभिगमनंसीताहरणमेवच ॥ ३४ ॥ लक्ष्मणोक्तंवचःश्रुत्वासुग्रीवोराममब्रवीत् ॥ अहंकरिष्येराजेंद्रसीतायाःपरिमार्गणं ॥ ३५ ॥

र्थः ॥ २९ ॥ व्येतुभयंवालिप्रेरिताविितिशंकाकृतं ॥ ३० ॥ योजितंताभ्यमंगीकारंकारितं आरोप्यकृत्वा ॥ ३१ ॥ विष्टरायआ सनार्थं ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

शत्रुघातिनस्तेशत्रुवधेसाहाय्यमपिकरिष्येइत्यन्वयः ॥ ३६॥ विहायसानीयमानांप्रमदोत्तमामपश्यमितिशेषः ॥ ३७ ॥ साचरामरामेतिक्रोशंतीअस्मान्पर्वतोपरिदृष्ट्वास्वोत्तरीयेणतदेकदेशेनाभरणानिआमुच्यबध्वापुनरस्मान्निरीक्ष्यतान्यप्यधःपरित्यज्यक्रोशंतीतेननीता क्रोशनक्रिययासमानकर्तृकःक्त्वा ॥ अहंचतानिगुहायामक्षिपं ॥ ३८ ॥ ३९ ॥ इदानींत्वमपिपश्यतवभार्यायाभवंतिवानभवंतिचेतिजानीहिनि







साहाय्यमपितेरामकरिष्येशत्रुघातिनः ॥ श्रृणुराममयादृष्टंकिंचित्तेकथयाम्यहं ॥ ३६॥ एकदामंत्रिभिःसार्धंस्थितोहंगिरिमूर्धनि ॥ विहायसानीयमानांकेनचित्प्रमदोत्तमां ॥ ३७॥ क्रोशंतीरामरामेतिदृष्ट्वास्मान्पर्वतोपरि ॥ आमुच्याभरणान्याशुस्वोत्तरीयेणभामिनी ॥ ३८ ॥ निरीक्ष्याधःपरित्यज्यक्रोशंतीतेनरक्षसा ॥ नीताहंभूषणान्याशुगुहायामक्षिपंप्रभो ॥ ३९ ॥ इदानीमपिपश्यत्वंजानीहितववानवा ॥ इत्युक्त्वानीयरामायदर्शयामासवानरः ॥ ४० ॥ विमुच्यरामस्तद्दृष्ट्वाहासीतेतिमुहुर्मुहुः ॥ हृदिनिक्षिप्यतत्सर्वंरुरोदप्राकृतोयथा ॥ ४१ ॥ आश्वास्यराघवंभ्रातालक्ष्मणोवाक्यमब्रवीत् ॥ अचिरेणैवतेरामप्राप्यतेजानकीशुभा ॥ वानरेंद्रसहायेनहत्वारावणमाहवे ॥ ४२ ॥ सुग्रीवोप्याहहेरामप्रतिज्ञांकरवाणिते ॥ समरेरावणंहत्वातवदास्यामिजानकीं ॥ ४३ ॥ ततोहनूमान्प्रज्वाल्यतयोरग्निंसमीपतः ॥ तावुभौरामसुग्रीवावग्नौसाक्षिणितिष्ठति ॥ ४४ ॥ बाहूप्रसार्यचालिंग्यपरस्परमकल्मषौ ॥ समीपेरघुनाथस्यसुग्रीवःसमुपाविशत् ॥ ४५ ॥



श्चयंकुरु ॥ ४० ॥ तत्भूषणयुक्तंवासःखंडंविमुच्यदृष्ट्वाभूषणानीतिशेषः तत्सर्वंभूषणजातं ॥ ४१ ॥ तेत्वया ॥ ४२ ॥ ४३ ॥ तयोःसमीपतोग्निप्रज्वाल्यसख्यंकुरुतामित्युवाचेतिशेषः॥४४॥ आलिंग्यपरस्परंसखेइत्यवदतामितिशेषः सखित्वकरणफलंदर्शयति समीपेइति ॥४५॥

वालिनायद्दुर्दंतं मद्विषयेकृतं तच्छृणु ॥४६॥ नाम्नामायावीत्यन्वयः समुपाव्हयत् युद्धायेतिशेषः ॥ ४७ ॥ तदाव्हानममर्षणोऽसहमानः ॥४८॥ तेनमुष्टिघातेनसंविग्नःपीडितःतंमायाविनंमायावंतंस्वगुहांप्रविष्टमालोक्येत्यन्वयः ॥ ४९ ॥ ५० ॥ मृतोवालीतिनिश्चयेनेतिशेषः ॥ ५१ ॥ रक्षसाहतोवालीमृतइतिस्वज्ञातीनब्रुवं ॥ ५२ ॥ अनिच्छंतंराज्याभिषेकमितिशेषः ॥ ५३ ॥ शिष्टंपालितं परुषंभ्रातृद्वेषिन्नित्यादिवाक्यं

स्वोदंतंकथयामासप्रणयाद्रघुनायके ॥ सखेश्टणुममोदंतंवालिनायत्कृतंपुरा ॥ ४६ ॥ मयपुत्रोथमायावीनाम्नापरमदुर्मदः ॥ किष्किंधांसमुपागत्यवालिनंसमुपाव्हयत् ॥ ४७ ॥ सिंहनादेनमहतावालीतुतदमर्षणः ॥ निर्ययौक्रोधताम्राक्षोजघानदृढमुष्टिना ॥ ४८ ॥ दुद्रावतेनसंविग्नोजगामस्वगुहांप्रति ॥ अनुदुद्रावतंवालीमायाविनमहंतथा॥ततःप्रविष्टमालोक्यगुहांमायाविनंरुषा॥४९॥वालीमामाहतिष्ठत्वंबहिर्गच्छाम्यहंगुहां॥इत्युक्त्वाविश्यसगुहांमासमेकंननिर्ययौ ॥ ५० ॥ मासादूर्ध्वंगुहाद्वारान्निर्गतंरुधिरंबहु ॥ तद्दृष्ट्वापरितप्तांगोमृतोवालीतिदुःखितः ॥ ५१ ॥ गुहाद्वारिशिलामेकांनिधायगृहमागतः ॥ ततोऽब्रुवंमृतोवालीगुहायांरक्षसाहतः ॥ ५२ ॥ तच्छ्रुत्वादुःखिताःसर्वेमामनिच्छंतमप्युत ॥ राज्येऽभिषेचनंचक्रुःसर्वेवानरमंत्रिणः ॥ ५३ ॥ शिष्टंतदामयाराज्यंकिंचित्कालमरिंदम ॥ ततःसमागतोवालीमामाहपरुषंरुषा ॥ ५४ ॥ बहुधाभर्त्सयित्वामांनिजघानचमुष्टिभिः ॥ ततोनिर्गत्यनगरादधावंपरयाभिया ॥ ५५ ॥ लोकान्सर्वान्परिक्रम्यऋष्यमूकंसमाश्रितः ॥ ऋषेःशापभयात्सोपिनायातीमंगिरिंप्रभो ॥ ५६ ॥ तदादिममभार्यांसस्वयंभुंक्तेविमूढधीः ॥ अतोदुःखेनसंतप्तोहृतदारोहृताश्रयः ॥ ५७॥ वसाम्यद्यभवत्पादसंस्पर्शात्सुखितोस्म्यहं॥मित्रदुःखेनसंतप्तोरामोराजीवलोचनः ॥५८॥

॥ ५४ ॥ परयाभियावालिजया ॥ ५५ ॥ ऋष्यमूकंतदाख्यमिमंपर्वतं ऋषेःशापभयात् तच्चानुपदमेवस्फुटंभविष्यति ॥ ५६ ॥ हृताश्रयःहृतगृहः ॥ ५७ ॥ सुखितोस्मिअद्यत्वादृशमित्रलाभेनेतिशेषः ॥ ५८ ॥

॥ ५९ ॥ बलवतांबलीसर्वेभ्योबलवद्भ्योप्यधिकबलवानित्यर्थः दुरासदंवालिनमितिशेषः ॥ ६० ॥ तद्बलंवालिनोबलं ॥ ६१ ॥ ६२ ॥ असहमानइतिच्छेदः ॥ ६३ ॥ अस्यशिरोहस्ताभ्यांभ्रामयन्ग्रीवातश्चालयन् छित्वाग्रीवारूपादाधारादुत्पाट्यहस्ताभ्यांतोलयित्वाएताव द्वारकमितिज्ञात्वाभुविअक्षिपत् ॥ ६४ ॥ क्षेपवेगेनभुवऊर्ध्वंयोजनमात्रंगत्वाततोमातंगाश्रमेपपात यस्माच्चयोजनात्तन्मितादूर्ध्वदेशात्पति

हनिष्यामितवद्वेष्यंशीघ्रंभार्यापहारिणं ॥ इतिप्रतिज्ञामकरोत्सुग्रीवस्यपुरस्तदा ॥ ५९ ॥ सुग्रीवोप्याहराजेंद्रवा लीबलवतांबली ॥ कथंहनिष्यतिभवान्देवैरपिदुरासदं ॥ ६० ॥ शृणुतेकथयिष्यामितद्बलंबलिनांवर ॥ कदाचि दुंदुभिर्नाममहाकायोमहाबलः ॥ ६१ ॥ किष्किंधामगमद्राममहामहिषरूपधृक् ॥ युद्धायवालिनंरात्रौसमाव्ह यतभीषणः ॥ ६२ ॥ तच्छ्रुत्वाऽसहमानोसौवालीपरमकोपनः ॥ महिषंशृंगयोर्धृत्वापातयामासभूतले ॥ ६३ ॥ पादेनैकेनतत्कायमाक्रम्यास्यशिरोमहत् ॥ हस्ताभ्यांभ्रामयंश्छित्वातोलयित्वाक्षिपद्भुवि ॥ ६४ ॥ पपातत च्छिरोराममातंगाश्रमसन्निधौ ॥ योजनात्पतितंतस्मान्मुनेराश्रममंडले ॥ ६५ ॥ रक्तवृष्टिःपपातोच्चैर्दृष्ट्वातांक्रो धमूर्च्छितः ॥ मातंगोवालिनंप्राहयद्यागंतासिमेगिरिं ॥ ६६ ॥ इतःपरंभग्नशिरामरिष्यसिनसंशयः ॥ एवंशप्त स्तदारभ्यऋष्यमूकंनयात्यसौ ॥ ६७ ॥ एतज्ज्ञात्वाहमप्यत्रवसामिभयवर्जितः ॥ रामपश्यशिरस्तस्यदुंदुभेःपर्व तोपमं ॥ ६८ ॥ तत्क्षेपणेयदाशक्तःशक्तस्त्वंवालिनोवधे ॥ इत्युक्त्वादर्शयामासशिरस्तद्गिरिसन्निभं ॥ ६९ ॥ दृष्ट्वा रामःस्मितंकृत्वापादांगुष्ठेनचाक्षिपत् ॥ दशयोजनपर्यंतंतदद्भुतमिवाभवत् ॥ ७० ॥

तं ॥ ६५ ॥ अतस्तदाश्रमेशिरसोगलितारक्तवृष्टिःपपात ततःक्रुद्धःसवालिनंप्राह ॥ ६६ ॥ ६७ ॥ एततूज्ञात्वातदगमनंज्ञात्वा ॥ ६८ ॥ यदा यदितस्यबाणेनदूरंक्षेपणेत्वंशक्तस्तर्हित्वंवालिवधेशक्तः ॥ ६९ ॥ ७० ॥

॥ ७१ ॥ चालयित्वामूलतोबाहुभ्यांकंपनेन अंजसाअनायासेन ॥ ७२॥ छिद्रंकरोषिसप्तस्वपीतिशेषः ॥७३॥७४ ॥७५॥ एवमाश्चर्यकर्मणारामंपरमात्मानंज्ञात्वास्तौति देवेति संगतिमैत्रींप्राप्तः॥७६॥मोक्षसचिवंमोक्षप्रदत्वात्तत्सचिवं भवंसंसारं॥७७॥अन्यद्दारपुत्रादिकंत्वन्मायाकृतत्वेनमायिकत्वान्नाकांक्षेऽतोमांनिवर्त्तयेत्यर्थः ॥७८॥ मृदर्थंभूमिखननतायथानिधानंधनराशिःप्राप्तोभवतिएवमहमानंदानुभवंतद्रूपंत्वांप्राप्तः

साधुसाध्विितिसंप्राहसुग्रीवोमंत्रिभिःसह ॥ पुनरप्याहसुग्रीवोरामंभक्तपरायणं॥७१ ॥ एतेतालामहासाराःसप्तपश्यरघूत्तम ॥ एकैकंचालयित्वासौनिष्पत्रान्कुरुतेंजसा॥ ७२ ॥ यदित्वमेकबाणेनविध्वाछिद्रंकरोषिचेत् ॥ हतस्त्वयातदावालीविश्वासोमेप्रजायते ॥ तथेतिधनुरादायसायकंतत्रसंदधे॥ ७३ ॥ बिभेदचतदारामःसप्ततालान्महाबलः॥ तालान्सप्तविनिर्भिद्यगिरिंभूमिंचसायकः ॥ ७४ ॥ पुनरागत्यरामस्यतूणीरेपूर्ववत्स्थितः॥ततोतिहर्षात्सुग्रीवोराममाहातिविस्मितः॥ ७५ ॥ देवत्वंजगतांनाथःपरमात्मानसंशयः ॥ मत्पूर्वकृतपुण्यौघैः संगतोद्यमयासह ॥ ७६ ॥ त्वांभजंतिमहात्मानःसंसारविनिवृत्तये ॥ त्वांप्राप्यमोक्षसचिवंप्रार्थयेहंकथंभवं ॥ ॥ ७७॥ दाराःपुत्राधनंराज्यंसर्वंत्वन्माययाकृतं ॥ अतोहंदेवदेवेशनाकांक्षेन्यत्प्रसीदमे ॥ ७८ ॥ आनंदानुभवंत्वाद्यप्राप्तोहंभाग्यगौरवात् ॥ मृदर्थंयतमानेननिधानमिवसत्पते ॥ ७९ ॥ अनाद्यविद्यासंसिद्धंबंधनंछिन्नमद्यनः॥यज्ञदानतपःकर्मपूर्तेष्टादिभिरप्यसौ॥ ८० ॥ नजीर्यतेपुनर्दार्ढ्यंभजतेसंसृतिःप्रभो॥ त्वत्पाददर्शनात्सद्योनाशमेतिनसंशयः॥ ८१ ॥

॥ ७९॥अनाद्यविद्यासंसिद्धंनिष्पन्नंविषयवासनारूपंबंधनंसंसारप्रवर्त्तकंनश्छिन्नंनष्टं अन्येभ्योभगवद्दर्शनस्याधिक्यमाह यज्ञेत्यादि यज्ञादिभिरप्यसौसंसृतिस्तत्कारणंविषयवासनारूपंबंधनंनजीर्यतिअपितुदार्ढ्यमेवभजनेत्वच्चरणदर्शनात्तुसद्यस्तन्नाशमेति ॥ ८० ॥ ८१ ॥

यच्चित्तंयस्यचित्तंतस्यानर्थानांनानासंसृतिरूपाणांमूलमज्ञानंनश्यतीत्यन्वयः ॥ ८२ ॥ मेमनःसदात्वयितिष्ठतु ॥ ८३ ॥ यस्यवाणीत्वन्नामगायतिसमुच्यते ॥ ८४ ॥ बंधस्यसंसारकारणस्यमोचनीं ॥ ८५ ॥ त्वन्माययाकृतःसंसारोयस्यसः त्वदंशः त्वत्प्रतिबिंबरूपत्वात् अतःस्वपादयोर्भक्तिमादिश्यदत्वात्राहि ॥ ८६ ॥ त्वन्मायावृतचेतसइतःपूर्वंमित्रादयआसन् अद्यतुत्वत्पाददर्शनान्मेसर्वंब्रह्मैवेतिभातीत्यन्वयः ॥ ८७ ॥

क्षणार्धमपियच्चित्तंत्वयितिष्ठत्यचंचलं ॥ तस्याज्ञानमनर्थानांमूलंनश्यतितत्क्षणात् ॥ ८२ ॥ तत्तिष्ठतुमनोराम त्वयिनान्यत्रमेसदा ॥ ८३ ॥ रामरामेतियद्वाणीमधुरंगायतिक्षणं ॥ सब्रह्महासुरापोवामुच्यतेसर्वपातकैः ॥ ८४ नकांक्षेरिजयंरामनचदारसुखादिकं ॥ भक्तिमेवसदाकांक्षेत्वयिबंधविमोचनीं ॥ ८५ ॥ त्वन्मायाकृतसंसारस्त्वदंशोहंरघूत्तम ॥ स्वपादभक्तिमादिश्यत्राहिमांभवसंकटात् ॥ ८६ ॥ पूर्वंमित्रार्युदासीनास्त्वन्मायावृतचेतसः ॥ आसन्मेद्यभवत्पाददर्शनादेवराघव ॥ ८७ ॥ सर्वंब्रह्मैवमेभातिक्कमित्रंक्कचमेरिपुः ॥ यावत्त्वन्माययाबद्धस्तावद्गुणविशेषता ॥ ८८ ॥ सायावदस्तिनानात्वंतावद्भवतिनान्यथा ॥ यावन्नानात्वमज्ञानात्तावत्कालकृतंभयं ॥ ॥ ८९ ॥ अतोऽविद्यामुपास्तेयःसोंऽधेतमसिमज्जति ॥ मायामूलमिदंसर्वंपुत्रदारादिबंधनं ॥ अतोत्सारयमायांत्वंदासींतवरघूत्तम ॥ ९० ॥ त्वत्पादपद्मार्पितचित्तवृत्तिस्त्वन्नामसंगीतकथासुवाणी ॥ त्वद्भक्तसेवानिरतौकरौमेत्वदंगसंगंलभतांमदंगं ॥ ९१ ॥

गुणविशेषतासत्वादिगुणविशेषवत्तेत्यर्थः ॥ ८८ ॥ सागुणविशेषता नानात्वंसुहृन्मित्रार्युदासीनत्वरूपोभेदः कालकृतंमृत्युकृतं ॥ ८९ ॥ अतःअविद्यामितिच्छेदः अतउत्सारयेतिच्छेदः ॥ ९० ॥ त्वत्पादपद्मयोरर्पिताचित्तवृत्तिर्येनसः ईदृशोहंभूयासमितिशेषः त्वन्नामविषयसंगीतकथासुवाणीनिरतातिष्ठत्वित्यन्वयः त्वद्भक्तानांसेवायांनिरतौतत्परौ ॥ ९१ ॥

त्वन्मूर्तिभक्तान्त्वन्मूर्त्तयश्चतद्भक्ताश्चतान् सकर्णःत्वज्जन्मानिमायिकानितत्रत्यकर्माणिचशृणोत्वित्यन्वयः ॥ १२ ॥ अहिशत्रुकेतोगरुडध्वज मेशिरस्त्वदीयंशिवब्रह्माद्यैःसेवितंपदंनमतु ॥ १३ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलिविराजमानस्यहिम्मतिवर्मणःपुत्र स्य० सेतौकिष्किंधाकांडेप्रथमःसर्गः ॥ १ ॥ ॥छ॥ स्वात्मपरिष्वंगःस्वशरीरालिंगनंतेनदूरीकृताशेषपापं सस्मितमितिमायायाभगवत्धा सद्रूपत्वेनस्मितद्वारामाययातदावरणं ॥ १ ॥ कार्यंरावणवधः यन्मांप्रतित्वदुक्तंत्वयोक्तंतत्सत्यमेव ॥ २ ॥ रघुनंदनःअग्निसाक्षिकंसख्यंकृ

त्वन्मूर्तिभक्तान्स्वगुरुंचचक्षुःपश्यत्वजस्रंसशृणोतुकर्णः ॥ त्वज्जन्मकर्माणिचपादयुग्मंव्रजत्वजस्रंतवमंदिरा णि ॥ १२ ॥ अंगानितेपादरजोविमिश्रतीर्थानिबिभ्रत्वहिशत्रुकेतो ॥ शिरस्त्वदीयंभवपद्मजाद्यैर्जुष्टंपदंरामन मत्वजस्रं ॥ १३ ॥ इतिश्रीमदध्यात्मरामायणेकिष्किंधाकांडेउमामहेश्वरसंवादेप्रथमःसर्गः ॥ १ ॥ ॥छ॥ इत्थंस्वात्मपरिष्वंगनिर्धूताशेषकल्मषं ॥ रामःसुग्रीवमालोक्यसस्मितंवाक्यमब्रवीत् ॥ १ ॥ मायांमोहकरींतस्मि न्वितन्वन्कार्यसिद्धये ॥ सखेत्वदुक्तंयत्तन्मांसत्यमेवनसंशयः ॥ २ ॥ किंतुलोकावदिष्यंतिमामेवंरघुनंदनः ॥ कृतवान्किंकपींद्रायसत्यंकृत्वाग्निसाक्षिकं ॥ ३ ॥ इतिलोकापवादोमेभविष्यतिनसंशयः ॥ तस्मादाह्वयभद्रंते गत्वायुद्धायवालिनं ॥ ४ ॥ बाणेनैकेनतंहत्वाराज्येत्वामभिषिंचये ॥ तथेतिगत्वासुग्रीवःकिष्किंधोपवनंद्रुतं ॥ ॥ ५ ॥ कृत्वाशब्दंमहानादंतमाह्वयतवालिनं ॥ तच्छ्रुत्वाभ्रातृनिनदंरोषताम्रविलोचनः ॥ ६ ॥

त्वाकपींद्रायतदुपकारकंकिंकृतवानित्येवलोकामांवदिष्यंति अतस्त्वदुपकारोमेवश्यंकर्तव्यइतिशेषः ॥ ३ ॥ उक्तमेवदार्ढ्यायपुनराह इतीति भद्रंतेइत्यनेनमदाज्ञाकरणेएवतेभद्रंनान्यथेतिसूचितं ॥ ४ ॥ तथेतीत्यर्थंप्रतिज्ञायेतिशेषः ॥ ५ ॥ महानादंमहाप्रतिध्वनिजनकं आह्वय तस्पर्द्धयाशब्दितवान् ॥ ६ ॥

॥ ७ ॥ ८ ॥ एकरूपौसमानाकारौ अतएवरामोबाणंनमुमोच ॥ ९ ॥ १० ॥ जहिशस्त्रेणेतिशेषः ॥ ११ ॥ प्रत्ययंकृत्वाविश्वासमुत्पाद्य सत्यवादिन्नित्यादिराक्षेपः॥ १२॥युवांसमानाकारौदृष्ट्वामित्रघातशंकयाऽहंसायकंनमुक्तवानित्यन्वयः॥ १३॥भ्रमशांतयेभ्रमशांतिफलकं॥ १४॥

निर्जगामगृहाच्छीघ्रंसुग्रीवोयत्रवानरः॥ तमापतंतंसुग्रीवःशीघ्रंवक्षस्यताडयत् ॥ ७॥ सुग्रीवमपिमुष्टिभ्यां जघानक्रोधमूर्च्छितः॥ वालीतमपिसुग्रीवएवंक्रुद्धौपरस्परं॥ ८॥ अयुद्ध्येतामेकरूपौदृष्ट्वारामोतिविस्मितः॥ नमुमोचतदाबाणंसुग्रीववधशंकया॥ ९ ॥ ततोदुद्रावसुग्रीवोवमन्रक्तंभयाकुलः॥ वालीस्वभवनंयातःसुग्रीवोराममब्रवीत्॥ १०॥ किंमांघातयसेरामशत्रुणाभ्रातृरूपिणा॥ यदिमद्धननेवांछात्वमेवजहिमांविभो॥ ॥ ११॥ एवंमेप्रत्ययंकृत्वासत्यवादिन्रघूत्तम॥ उपेक्षसेकिमर्थंमांशरणागतवत्सल॥ १२॥ श्रुत्वासुग्रीववचनंरामःसाश्रुविलोचनः॥ आलिंग्यमास्मभैषीस्त्वंदृष्ट्वावामेकरूपिणौ ॥ १३ ॥ मित्रघातित्वमाशंक्यमुक्तवान्सायकंनहि॥ इदानीमेवतेचिन्हंकरिष्येभ्रमशांतये ॥ १४ ॥ गत्वाह्वयपुनःशत्रुंहतंद्रक्ष्यसिवालिनं॥ रामोहंत्वांशपेभ्रातर्हनिष्यामिरिपुंक्षणात्॥ १५ ॥इत्याश्वास्यससुग्रीवंरामोलक्ष्मणमब्रवीत्॥ सुग्रीवस्यगलेपुष्पमालामामुच्यपुष्पितां॥ १६॥ प्रेषयस्वमहाभागसुग्रीवंवालिनंप्रति॥ लक्ष्मणस्तुतदाबध्वागच्छगच्छेतिसादरं॥ ॥ १७॥ प्रेषयामाससुग्रीवंसोपिगत्वातथाकरोत्॥ पुनरप्यद्भुतंशब्दंकृत्वावालिनमाह्वयत्॥ १८॥ तच्छुत्वाविस्मितोवालीक्रोधेनमहतावृतः॥ बध्वापरिकरंसम्यक्गमनायोपचक्रमे॥ १९॥

अहंरामइत्यनेनस्वस्यामिथ्याभाषित्वंसूचितं॥ त्वांशपेयदिनहनिष्यामितर्हिमित्रस्यतवैवशपथइत्यर्थः ॥ १५ ॥ पुष्पितांमालांआमुच्यसंबध्यप्रेष्यतामित्यन्वयः ॥ १६ ॥ १७॥ १८ ॥ परिकरंकच्छबंधादिरूपं ॥ १९ ॥

॥ २० ॥ तेत्वत्तोभग्नःपुनरायातिगर्जन्युद्धार्थमाव्हयति ॥ २१ ॥ तद्गतासुग्रीवसहायविषया करंपरित्यज्यगच्छ अंतःपुरमितिशेषः मत्तोर
क्षितुंजीवितार्थीकस्तस्यसहायोभवेदित्यन्वयः ॥ २३ ॥ आव्हयमानंरिपुंज्ञात्वापिशूरःकथंगृहेतिष्ठेत् अतस्तंहत्वात्रायास्यामिइतिच्छेदः ॥
॥ २४ ॥ यन्मामंगदोमृगयायांश्रुतंवचआह तच्छ्रुत्वायथोचितंकुरु ॥ २५ ॥ २६ ॥ रावणेनसीताहृतातांसहभ्रात्रामार्गमाणोऋष्यमूका

गच्छंतंवालिनंतारागृहीत्वानिषिषेधतं॥ नगंतव्यंत्वयेदानींशंकामेतीवजायते ॥ २० ॥ इदानीमेवतेभग्नःपुन
रायातिसत्वरः॥ सहायोबलवांस्तस्यकश्चिन्नूनंसमागतः ॥ २१ ॥ वालीतामाहहेसुभ्रुशंकातेव्येतुतद्गता॥ प्रि
येकरंपरित्यज्यगच्छगच्छामितंरिपुं ॥ २२ ॥ हत्वाशीघ्रंसमायास्येसहायस्तस्यकोभवेत् ॥ सहायीयदिसुग्रीव
स्ततोहत्वोभयंक्षणात्॥ २३॥ आयास्येमाशुचःशूरःकथंतिष्ठेद्गृहेरिपुं॥ ज्ञात्वाप्याहूयमानंहिहत्वायास्यामिसुंद
रि॥ २४ ॥ तारोवाच मत्तोन्यच्छृणुराजेंद्रश्रुत्वाकुरुयथोचितं॥ आहमामंगदःपुत्रोमृगयायांश्रुतंवचः॥
॥ २५॥ अयोध्याधिपतिःश्रीमान्रामोदाशरथिःकिल ॥ लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह॥ २६॥ आग
तोदंडकारण्यंतत्रसीताहृताकिल॥ रावणेनसहभ्रात्रामार्गमाणोथजानकीं ॥ २७॥ आगतोऋष्यमूकाद्रिंसु
ग्रीवेणसमागतः॥ चकारतेनसुग्रीवःसख्यंचानलसाक्षिकं॥ २८॥ प्रतिज्ञांकृतवान्रामःसुग्रीवायसलक्ष्मणः॥
वालिनंसमरेहत्वाराजानंत्वांकरोम्यहं॥ २९॥ इतिनिश्चित्यतौयातौनिश्चितंशृणुमद्वचः॥ इदानीमेवतेभग्नःक
थंपुनरुपागतः॥ ३०॥ अतस्त्वंसर्वथावैरंत्यक्त्वासुग्रीवमानय॥ यौवराज्येभिषिंचाशुरामंत्वंशरणंव्रज॥ ३१॥

द्रिमागतः ॥ २७ ॥ समागतःसंमीलितःसख्यंचतेनचकार ॥ २८ ॥ २९ ॥ इतिनिश्चित्यपरस्परसाहाय्यंप्रतिज्ञाययातौस्ववासस्थानमितिशे
षः तस्मान्निश्चितंनिश्चितार्थकंमेवचःशृणुइदानीमेवेत्यादेरन्यथेत्यादिः ॥ ३० ॥ ३१॥

कुलंवानरकुलं ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्नेहोभविष्यति सुग्रीवतोपिममरामकार्येसमर्थत्वादितिभावः ॥ ३५ ॥ स्वपक्षपरपक्षाभावेहेतुगर्भंविशेषणंपरात्मनइति तेनसर्वत्रसमःसइतिध्वनितं ॥ ३६ ॥ भजतःभक्तानित्यर्थः ॥३७॥ यदिस्वयमिति असहायइत्यर्थः॥३८॥

पाहिमामंगदंराज्यंकुलंचहरिपुंगव ॥इत्युक्त्वाश्रुमुखीतारापादयोःप्रणिपत्यतं ॥ ३२ ॥ हस्ताभ्यांचरणौधृत्वारुरोदभयविह्वला॥तामालिंग्यतदावालीसस्नेहमिदमब्रवीत्॥ ३३॥ स्त्रीस्वभावाद्बिभेषित्वंप्रियेनास्तिभयंमम॥ रामोयदिसमायातोलक्ष्मणेनसमंप्रभुः॥ ३४॥ तदारामेणमेस्नेहोभविष्यतिनसंशयः ॥ रामोनारायणःसाक्षादवतीर्णोखिलप्रभुः॥ ३५॥ भूभारहरणार्थायश्रुतंपूर्वंमयानघे॥स्वपक्षःपरपक्षोवानास्तितस्यपरात्मनः॥३६॥ आनेष्यामिगृहंसाध्विनत्वातच्चरणांबुजं॥ भजतोनुभजत्येषभक्तिगम्यःसुरेश्वरः ॥ ३७ ॥ यदिस्वयंसमायातिसुग्रीवोहन्मितंक्षणात्॥ यदुक्तंयौवराज्यायसुग्रीवस्याभिषेचनं॥ ३८॥कथमाहूयमानोहंयुद्धायरिपुणाप्रिये॥ शूरोहंसर्वलोकानांसंमतःशुभलक्षणे॥ ३९ ॥ भीतभीतमिदंवाक्यंकथंवालीवदेत्प्रिये ॥ तस्माच्छोकंपरित्यज्यतिष्ठसुंदरिवेश्मनि॥४०॥एवमाश्वास्यतारांतांशोचंतीमश्रुलोचनां ॥ गतोवालीसमुद्युक्तःसुग्रीवस्यवधायसः ॥ ४१ ॥ दृष्ट्वावालिनमायांतंसुग्रीवोभीमविक्रमः॥ उत्पपातगलेबद्धपुष्पमालःपतंगवत्॥ ४२ ॥ मुष्टिभ्यांताडयामासवालिनंसोपितंतथा॥अहन्वालीचसुग्रीवंसुग्रीवोवालिनंतथा॥४३॥रामंविलोकयन्नेवसुग्रीवोयुयुधेयुधि॥ इत्येवंयुध्यमानौतौदृष्ट्वारामःप्रतापवान्॥ ४४॥

कथंतदभिषेचनंकुर्यामितिशेषः यतोहंसर्वलोकानांसंमतःशूरः ॥ ३९ ॥ वालीभीतभीतंअत्यंतभयसूचकमिदंवाक्यंकथंवदेत् ॥ ४०॥४१॥ उत्पपातयुद्धायतत्संमुखमितिशेषः ॥ ४२ ॥ अहन् हतवान् ॥ ४३ ॥ रामंविलोकयन् शीघ्रमेतंजहीतिदृष्ट्यासूचयन् ॥ ४४ ॥

ऐंद्रेधनुषिअगस्त्यदत्ते ऐंद्रमितिपाठेऐंद्रास्त्राभिमंत्रितमित्यर्थः वृक्षखंडगःवृक्षसमूहगः ॥ ४५ ॥ तद्धृदयंलक्ष्यंकृत्वेतिशेषः ॥ ४६ ॥ महीं कंपयन्सशरोरामधनुःसकाशात्महाशब्दंमुंचन्उत्पपातआकाशेइतिशेषः ततःसनिपपातवालिवक्षसिततस्तद्बिभेद ॥ ४७ ॥ तदावक्षोभेदकाले चेतनंचैतन्यं वामेनधनुरन्येनसायकमन्यमालंब्यस्थितमितिशेषः ॥ ४८ ॥ वक्षसिवनमाला कंठमारभ्याजानुमालावनमाला तया

बाणमादायतूणीरादैंद्रेधनुषिसंदधे ॥ आकृष्यकर्णपर्यंतमदृश्योवृक्षखंडगः ॥ ४५ ॥ निरीक्ष्यवालिनंसम्यग्लक्ष्यंतद्धृदयंहरिः ॥ उत्ससर्जाशनिसमंमहावेगंमहाबलः ॥ ४६ ॥ बिभेदसशरोवक्षोवालिनःकंपयन्महीं ॥ उत्पपातमहाशब्दंमुंचन्सनिपपातह ॥ ४७ ॥ तदामुहूर्तंनिःसंज्ञोभूत्वाचेतनमापसः ॥ ततोवालीददर्शाग्रेराममंराजीवलोचनं ॥ धनुरालंब्यवामेनहस्तेनान्येनसायकं ॥ ४८ ॥ बिभ्राणंचीरवसनंजटामुकुटधारिणं ॥ विशालवक्षसंभ्राजद्वनमालाविभूषितं ॥ ४९ ॥ पीनचार्वायतभुजंनवदूर्वादलच्छविं ॥ सुग्रीवलक्ष्मणाभ्यांचपार्श्वयोः परिसेवितं ॥ ५० ॥ विलोक्यशनकैःप्राहवालीराममंविगर्हयन् ॥ किंमयापकृतंरामतवयेनहतोस्म्यहं ॥ ५१ ॥ राजधर्ममविज्ञायगर्हितंकर्मतेकृतं ॥ वृक्षखंडेतिरोभूत्वात्यजतामयिसायकं ॥ ५२ ॥ यशःकिंलप्स्यसेरामचोरवत्कृतसंगरः ॥ यदिक्षत्रियदायादोमनोर्वंशसमुद्भवः ॥ ५३ ॥ युद्धंकृत्वासमक्षंमेप्राप्स्यसेतत्फलंतदा ॥ सुग्रीवेणकृतंकिंतेमयावानकृतंकिमु ॥ ५४ ॥ रावणेनहृताभार्यातवराममहावने ॥ सुग्रीवंशरणंयातस्तदर्थमितिशुश्रुम ॥ ५५ ॥

विभूषितं ॥ ४९ ॥ ५० ॥ विगर्हयन्कुत्सयन् ॥ ५१ ॥ राजधर्ममिति तिरोभूयान्येनयुद्धंकुर्वतिबाणपातःछलत्वान्नराजधर्मइतिभावः ल्यबभावआर्षः ॥ ५२ ॥ चोरवत्कृतसंगरस्त्वंमांहत्वायशोलप्स्यसेकिं अपित्वयशएवेतिभावः यदितेक्षत्रियदायादत्वाद्यभिमानस्तदामेमयासमक्षंयुद्धंकृत्वातत्फलंयशोमरणंवाप्राप्स्यसेप्राप्तोभवेः अन्यार्थेन्यशब्दप्रयोगेणासन्नमरणतासूच्यते ॥ ५३ ॥ कृतंउपकृतमित्यर्थः ॥ ५४ ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ कंधर्मकांधर्मकृतांकीर्ति ऐहिकमपिनमद्वधेइत्याह अभक्ष्यमिति ॥ ५८॥ इत्येवंबहुभाषंतंअसंबद्धंप्रलपंतमित्यर्थः ॥५९॥ अधर्मेति सद्धर्मरक्षणांगत्वादधर्मकारिवधस्यनदोषत्वमितिभाव अधर्मकारित्वंवालिनःसमर्थयते दुहितेत्यादि भ्रातुःकनिष्ठस्येतिशेषः॥६०॥ एताःसर्वाःसमास्तुल्यास्तासांमध्येयोविमूढधीरपिएकांरमतेसपातकीज्ञेयः विमूढधीरपीत्यनेनाज्ञानान्नदोषइतिपरिहृतं ईदृशार्थस्याज्ञानात्क रणेपिमहानेवदोषः अतएवतस्यवधपर्यंतोदंडइत्याह सवध्यइति ॥ ६१ ॥ ननुमनुष्याधिकारिकंशास्त्रंनतुतिर्यगादिविषयमतस्तिरश्चामस्मा

बतरामनजानीषेमद्वलंलोकविश्रुतं॥ रावणंसकुलंबध्वाससीतंलंकयासह ॥ ५६ ॥ आनयामिमुहूर्तार्धाद्यदि चेच्छामिराघव॥ धर्मिष्ठइतिलोकेस्मिन्कथ्यसेरघुनंदन॥ ५७॥ वानरंव्याधवद्धत्वाधर्मकंलप्स्यसेवद॥ अभ क्ष्यंवानरंमांसंहत्वामांकिंकरिष्यसि॥ ५८॥ इत्येवंबहुभाषंतंवालिनंराघवोब्रवीत्॥ धर्मस्यगोप्तालोकेस्मिंश्च रामिसशरासनः ॥ ५९ ॥ अधर्मकारिणंहत्वासद्धर्मंपालयाम्यहं ॥ दुहिताभगिनीभ्रातुर्भार्याचैवतथास्नुषा ॥ ॥ ६० ॥ समायोरमतेतासामेकामपिविमूढधीः॥ पातकीसतुविज्ञेयःसवध्योराजभिःसदा ॥ ६१ ॥ त्वंतुभ्रातुः कनिष्ठस्यभार्यायांरमसेबलात्॥ अतोमयाधर्मविदाहतोसिवनगोचर॥ ६२॥ त्वंकपित्वान्नजानीषेमहांतोवि चरंतियत्॥ लोकंपुनानाःसंचारैरतस्तान्नातिभाषयेत्॥ ६३ ॥

कंकोत्रदोषइतिचेच्छृणु तिरश्चामनधिकारोहिअज्ञानकृतः तच्चाज्ञानंनतववाल्यादिषुस्वयंप्रतिभातवेदत्वात्देवांशत्वाच्च एवंचकर्तव्याकर्त्तव्य ज्ञानवतामकर्तव्यकरणेदोषोभवत्येवातएवेंद्रादीनामहल्याद्यतिक्रमणादोदोषश्रुतिःसंगच्छते देवानांयज्ञाद्यनधिकारस्तुयजनीयदेवतांतराभा वात् अतएवब्रह्मविद्यायामिंद्रादीनामप्यधिकारःश्रुतिषुश्रूयतेइत्येषोत्रभगवतोभिप्रायः॥६२॥किंचमन्निंदयादोषांतरभागपित्वंजायसेइत्याह त्वंकपित्वादिति संचारैर्लोकंपुनानामहांतोविचरंतियत्यतोऽतस्तान्नातिभाषयेत्नर्निदेत् त्वंतुएवंसंचरंतीतिनजानीषेइत्यन्वयः विचरंतिहीति पाठांतरं एवंचत्वादृशपवित्रीकरणार्थएवायंममसंचारइतिध्वनितं ॥ ६३ ॥

॥ ६४ ॥ अजानतात्वदीयंपरमेश्वरत्वमजानतेत्यर्थः ॥ ६५ ॥ तवाग्रतइतित्वत्स्वरूपज्ञानपूर्वकंतवाग्रतइत्यर्थः तवदर्शनंत्वत्स्वरूपज्ञानंमहायोगिनामपिदुर्लभं ॥ ६६ ॥ विवशःपुत्रादिममताक्रांतोऽपिसाक्षात्त्वांपश्यतोम्रियमाणस्यपरमपदप्राप्तिरितिकिंवक्तव्यमित्यर्थः ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ अमरेंद्रोभवत् तदंशत्वात्तत्रैवलयमापेत्यर्थः ॥ ७० ॥ विमृष्टःस्पृष्टइतियावत् परमंपदमैंद्रंपदं अधिकारांतेमुक्तिदत्वात्तस्यापिपरम

तच्छ्रुत्वाभयसंत्रस्तोज्ञात्वारामंरमापतिं ॥ वालीप्रणम्यरभसाद्रामंवचनमब्रवीत् ॥ ६४ ॥ रामराममहाभाग जानेत्वांपरमेश्वरं ॥ अजानतामयाकिंचिद्दुक्तंतत्क्षंतुमर्हसि ॥ ६५ ॥ साक्षात्त्वच्छरघातेनविशेषेणतवाग्रतः ॥ त्यजाम्यसून्महायोगिदुर्लभंतवदर्शनं ॥ ६६ ॥ यन्नामविवशोगृह्णन्म्रियमाणःपरंपदं ॥ यातिसाक्षात्सएवाद्य मुमूर्षोर्मेपुरःस्थितः ॥ ६७ ॥ देवजानामिपुरुषंत्वांश्रियंजानकींशुभां ॥ रावणस्यवधार्थायजातंत्वांब्रह्मणार्थितं ॥ ६८ ॥ अनुजानीहिमांरामयांतंत्वत्पदमुत्तमं ॥ ममतुल्यबलेबालेअंगदेत्वंदयांकुरु ॥ ६९ ॥ विशल्यंकुरुमे रामहृदयंपाणिनास्पृशन् ॥ तथेतिबाणमुद्धृत्यरामःपस्पर्शपाणिना ॥ त्यक्त्वातद्वानरंदेहममरेंद्रोभवत्क्षणात् ॥ ॥ ७० ॥ वालीरघूत्तमशराभिहतोविमृष्टोरामेणशीतलकरेणसुखाकरेण ॥ सद्योविमुच्यकपिदेहमनन्यलभ्यं प्राप्तःपरंपरमहंसगणैर्दुरापं ॥ ७१ ॥ इतिश्री०कि०द्वितीयःसर्गः ॥ २ ॥

॥ ॐ ॥

निहतेवालिनिरणेरामेणपरमात्मना ॥ दुद्रुवुर्वानराःसर्वेकिष्किंधांभयविह्वलाः ॥ १ ॥ तारामूचुर्महाभागेहतोवालीरणाजिरे ॥ अंगदंपरिरक्षाद्यमंत्रिणःपरिनोदय ॥ २ ॥

पदत्वेनव्यवहारः ॥ ७१ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्याहिमतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृताबध्यात्मरामायणसेतौकिष्किंधाकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ ॐ ॥ निहतेइति ॥ १ ॥ परिनोदयनगरादिरक्षार्थमितिशेषः ॥ २ ॥

चतुर्द्वारकपाटादीनिति आदिनासूक्ष्मानेकद्वारकपाटपरिखादिसंग्रहः ॥ ३ ॥ ४ ॥ निधनंयास्यामि वन्हिप्रवेशेनेतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ येनेति येनबाणेनवालीहतस्तेनबाणेनमांजहि वालिशरीरस्पृष्टतयातत्स्पर्शस्यमत्सुखावहत्वादितिभावः ॥ ८ ॥ ९ ॥ पत्नीदानफलमिति तेन धर्मेणतवापिपत्नीलाभोभविष्यतीतिभावः ॥ १० ॥ वालिघातिनारामेणदापितंवालिनेतिशेषः वालिनोदातृत्वंचमरणेनस्वत्वत्यागमात्रेणेति

चतुर्द्वारकपाटादीन्बध्वारक्षामहेपुरीं ॥ वानराणांतुराजानमंगदंकुरुभामिनि ॥ ३ ॥ निहतंवालिनंश्रुत्वातारा शोकविमूर्छिता ॥ अताडयत्स्वपाणिभ्यांशिरोवक्षश्चभूरिशः ॥ ४ ॥ किमंगदेनराज्येननगरेणधनेनवा ॥ इदानीमेवनिधनंयास्यामिपतिनासह ॥ ५ ॥ इत्युक्त्वात्वरितातत्ररुदतीमुक्तमूर्धजा ॥ ययौतारातिशोकार्तायत्रभर्तृकलेवरं ॥ ६ ॥ पतितंवालिनंदृष्ट्वारक्तैःपांसुभिरावृतं ॥ रुदतीनाथनाथेतिपपतितातस्यपादयोः ॥ ७ ॥ करुणंविलपंतीसाददर्शरघुनंदनं ॥ राममांजहिबाणेनयेनवालीहतस्त्वया ॥ ८ ॥ गच्छामिपतिसालोक्यंपतिर्मामभिकांक्षते ॥ स्वर्गेपिनसुखंतस्यमांविनारघुनंदन ॥ ९ ॥ पत्नीवियोगजंदुःखमनुभूतंत्वयानघ ॥ वालिनेमांप्रयच्छाशुपत्नीदानफलंभवेत् ॥ १० ॥ सुग्रीवत्वंसुखंराज्यंदापितंवालिघातिना ॥ रामेणरुमयासार्धंभुंक्ष्वसापत्नवर्जितं ॥ ॥ ११ ॥ इत्येवंविलपंतींतांतारांरामोमहामनाः ॥ सांत्वयामासदययातत्त्वज्ञानोपदेशतः ॥ १२ ॥ किंभीरुशोचसिव्यर्थंशोकस्याविषयंपतिं ॥ पतिस्तवायंदेहोवाजीवोवावदतत्त्वतः ॥ १३ ॥ पंचात्मकोजडोदेहस्त्वङ्मांसरुधिरास्थिमान् ॥ कालकर्मगुणोत्पन्नःसोप्यास्तेद्यापितेपुरः ॥ १४ ॥

बोध्यं ॥ ११ ॥ १२ ॥ १३ ॥ देहजीवयोःपतित्वंविकल्प्यनाद्यइत्याह पंचात्मकइति पंचभूतात्मकइत्यर्थः इदंजडत्वोपपादकं त्वङ्मांसेत्यादिनात्यंतबीभत्सत्वंदर्शितं कालेनकर्मभिर्गुणैःसत्वादिभिश्चोत्पन्नइत्यनेननश्वरत्वमेवंचतत्रात्यंतंप्रीत्ययोगेकातेपतिबुद्धिरित्यर्थः अथाप्येवंबुद्धिरेवतेतर्हिसोस्त्येवेतिव्यर्थःशोकइत्यर्थः ॥ १४ ॥

नांत्यइत्याह मन्यसइेति निरामयःनाशादिरहितः तदाह नजायतेइत्यादि॥ १५॥ सर्वगतश्चेतनोजीवएकएव अद्वितीयइतिद्वितीयसंबंधरहितस्तदेवाहाकाशवदलेपकइति अलिप्तइत्यर्थः मायागुणैरितिशेषः सकथमिति अविनाशित्वादितिभावः ॥ १६ ॥ देहःकाष्ठवदचित्अचेतनइत्यर्थः जीवश्चिदात्मकोज्ञानस्वरूपएवनतुसुखादिपरिणामवान् एवंसतिसुखादिसंबंधःकस्यस्यात् अचेतनत्वान्नस्थूलस्यसूक्ष्मस्यनाप्यपरिणामित्वादात्मनइत्यर्थः ॥ १७ ॥ उत्तरयति अहंकारादीति देहेंद्रियैःसहतेषुइत्यर्थः अहंकारादिसंबंधःअहंममेत्येवंबुद्धिविषयताइत्यर्थः

मन्यसेजीवमात्मानंजीवस्तर्हिनिरामयः॥नजायतेनम्रियतेनतिष्ठतिनगच्छति ॥ १५ ॥ नस्त्रीपुमान्वाषंढोवा जीवःसर्वगतोव्ययः॥एकएवाद्वितीयोयमाकाशवदलेपकः॥नित्योज्ञानमयःशुद्धःसकथंशोकमर्हति॥१६॥ तारोवाच देहोऽचित्काष्ठवद्रामजीवोनित्यश्चिदात्मकः॥सुखदुःखादिसंबंधःकस्यस्याद्राममेवद॥ १७॥ श्रीरामउवाच अहंकारादिसंबंधोयावद्देहेंद्रियैःसह॥संसारस्तावदेवस्यादात्मनस्त्वविवेकिनः॥ १८ ॥ मिथ्यारोपितसंसारोनस्वयंविनिवर्त्तते॥विषयान्ध्यायमानस्यस्वप्नेमिथ्यागमोयथा ॥ १९ ॥ अनाद्यविद्यासंबंधात्तत्कार्याहंकृतेस्तथा॥संसारोऽपार्थकोपिस्याद्रागद्वेषादिसंकुलः॥ २० ॥

प्रायःस्थूलसूक्ष्मदेहयोरुभयोरप्यहंबुद्धिरेव केषांचित्तुस्थूलदेहेपुत्रादौचममताबुद्धिःसूक्ष्मेतुसर्वेषामहंबुद्धिरेवेतिविवेकः तावदेवाविवेकिनोंतःकरणादिभ्यःस्वस्मिन्विवेकायहवतआत्मनःसंसारःस्यादित्यर्थः ॥ १८ ॥ एवंशुद्धस्यात्मनोन्याविवेकादारोपितःसंसारःस्वतएवनकिंनिवर्तते यथास्वमस्यमिथ्यागमःस्वामिमिथ्यापदार्थदर्शनंनस्वतोनिवर्ततेकिंतुजाग्रदवस्थयैवतद्वदितिभावः ॥ १९ ॥ तत्रस्वमस्यविषयध्यानवत्संसारस्यमूलकारणमाह अनादीति अविद्याअनात्मन्यात्मबुद्धिर्मायावा अयथार्थकःअत्यंतमिथ्याभूतः ॥ २० ॥

मनएवेति मनोऽन्तःकरणं संसारस्तन्मूलकारणमित्यर्थः बंधःसुखादिभोगस्तद्वत् मनएवमनसासमानत्वंआत्ममनसोरैक्यं तद्गतबंधभाक्तद्गतबं धयुक्तोभवतीत्यर्थः ॥ २१॥ २२ ॥ बुद्धीति यथालक्तकादिसामीप्यात्स्फटिकस्यरक्तत्वादिव्यवहारःएवंसंसारधर्मकबुद्धींद्रियादिसामीप्या दात्मनोबलादवशतःसंसारव्यवहारोलोकैःक्रियतइत्यर्थः तदेवाहात्मेति मनसोजडत्वेनज्ञानादिजनकत्वासंभवात् चेतनस्यात्मनोलिंगमनुमाप कंमनोंतःकरणंपरिगृह्यतेनाविवेकंप्राप्य तदुद्भवान् ततोजातान्कामान्विषयान्जुषन्गुणैस्तदीयैरागद्वेषादिभिर्बद्धइवावशःसंसारेवर्तते ॥ २३॥ विषयाणांमनउद्भवत्वंदर्शयति आदाविति गुणान्रागद्वेषादीन् ततोरागद्वेषादितः कर्माणिसृष्टिवदितिशेषः ॥२४॥तत्रकर्मभेदानाह शुक्लेत्यादि

मनएवहिसंसारोबंधश्चैवमनःशुभे ॥ आत्मामनःसमानत्वमेत्यतद्गतबंधभाक् ॥ २१ ॥ यथाविशुद्धःस्फटि कोऽलक्तकादिसमीपगः॥ तत्तद्वर्णयुगाभातिवस्तुतोनास्तिरंजनं॥ २२॥ बुद्धींद्रियादिसामीप्यादात्मनःसंसृति र्बलात्॥ आत्मास्वलिंगंतुमनःपरिगृह्यतदुद्भवान्॥ २३ ॥कामान्जुषन्गुणैर्बद्धःसंसारेवर्त्ततेवशः॥ आदौमनो गुणान्सृष्ट्वाततःकर्माण्यनेकधा॥२४॥ शुक्ललोहितकृष्णानिगतयस्तत्समानतः॥ एवंकर्मवशाज्जीवोभ्रमत्या भूतसंप्लवं॥२५॥ सर्वोपसंहृतौजीवोवासनाभिःस्वकर्मभिः॥अनाद्यविद्यावशगस्तिष्ठत्यभिनिवेशतः॥२६॥

शुक्लकर्माणि हिंसादिरहितजपध्यानादिरूपाणि लोहितानिहिंसामिश्रयागादीनि कृष्णानि पापकर्माणितत्समानतःकर्मस्वरूपतुल्यागतयोगतीः सृष्टिवदितिशेषः गतयइति द्वितीयार्थेआर्षं तत्रशुक्लकर्मणः शुक्लाब्रह्मलोकप्राप्तिरूपोत्तमागतिः लोहितकर्मणोमध्यमास्वर्गगतिः कृष्णकर्मणो ऽधमानरकगतिरित्यर्थः भूतसंप्लवःप्रलयस्तावत्पर्यंतंकर्मवशाद्भ्रमति ॥ २५ ॥ सर्वोपसंहृतौप्रलयेवासनाभिःकर्मभिश्चसहाभिनिवेशतः अं तःकरणादितादात्म्याध्यासात् अंतःकरणाद्युपाधिभूतानाद्यविद्यावशगस्तल्लीनःसन्तिष्ठति ॥ २६ ॥

वासनाश्चमानसानिकर्माणिचतैःसहतद्युक्तएवजायतेवर्षाकालेमंडूकवत्प्रादुर्भवति एवंसृष्टिप्रलययोर्घटीयंत्रमिवावर्त्तमानस्तिष्ठति ॥ २७॥
नन्वेवमस्यमुक्तिप्रत्याशैवनकिंनेत्याह यदेति मद्विषयामतिः ईश्वरोमहानित्येवंबुद्धिर्जायतेइतिशेषः॥२८॥ततःईश्वरविषयबुद्ध्यनंतरं ततःस्व
रूपविज्ञानंस्वरूपंविज्ञायतेऽनेन ततःविषयेषुअनित्याशुचिदुःखरूपंवैराग्यंनित्यानित्यविवेकादिचजायतेइत्यर्थः॥२९॥ तदातादृशवैराग्यादौ
जातेआचार्यप्रसादेनतत्त्वमस्यादिवाक्यार्थज्ञानतःश्रवणमननरूपात्क्षणात् उत्सवात्श्रवणादिविषयोत्साहात्पुनःपुनरनुष्ठानादितियावत् देहा

**सृष्टिकालेपुनःपूर्ववासनामानसैःसह॥ जायतेपुनरप्येवंघटीयंत्रमिवावशः ॥ २७॥ यदापुण्यविशेषेणलभते संगतिंसतां॥ मद्भक्तानांसुशांतानांतदामद्विषयामतिः॥ २८ ॥ मत्कथाश्रवणेश्रद्धादुर्लभाजायतेततः॥ ततः स्वरूपविज्ञानमनायासेनजायते॥२९॥ तदाचार्यप्रसादेनवाक्यार्थज्ञानतःक्षणात्॥ देहेंद्रियमनःप्राणाहंकृति भ्यःपृथक्स्थितं ॥ ३० ॥ स्वात्मानुभवतःसत्यमानंदात्मानमद्वयं ॥ ज्ञात्वासद्योभवेन्मुक्तःसत्यमेवमयोदितं॥ ॥ ३१ ॥ एवंमयोदितंसम्यगालोचयतियोनिशं॥ तस्यसंसारदुःखानिनस्पृशंतिकदाचन॥ ३२ ॥ त्वमप्येतन्म याप्रोक्तमालोचयविशुद्धधीः ॥ नस्पृश्यसेदुःखजालैःकर्मबंधाद्विमोक्ष्यसे॥ ३३ ॥ पूर्वजन्मनितेसुभ्रुकृतामद्भ क्तिरुत्तमा॥ अतस्तवविमोक्षायरूपंमेदर्शितंशुभे॥ ३४॥**

दिभ्यःपृथक्स्थितंसत्यमानंदरूपमद्वितीयमात्मानंस्वात्मानुभवतःस्वात्मविषयादीदृशंब्रह्माहमेवेत्येवंरूपान्निदिध्यासनात् ज्ञात्वाअपरोक्षी
कृत्यसद्यस्तत्कालमेवसंसारान्मुक्तोभवेदित्यर्थः ॥३० ॥३१॥ आलोचयतियुक्त्यानिर्णयतितस्यक्रमेणज्ञानप्राप्त्यासंसारदुःखास्पर्शः ॥ ३२॥
कर्मबंधात्कर्मकृताद्बंधात्संसाररूपादित्यर्थः ॥ ३३ ॥ मेमयारूपंदर्शितं स्वरूपंदर्शितमित्यर्थः अत्रतारायैभगवताविश्वरूपदर्शनंकारित
मितिध्वनयति यद्वादर्शितमित्थंबोधितमित्यर्थः ॥ ३४ ॥

मद्रूपंपरिदृश्यमानंरूपंदर्शितंविश्वरूपंचआलोचयविचारय प्रवाहपतितंसंसारप्रवाहपतितंकार्यंसांसारिकंकार्यंकुर्वत्यपितद्दोषैर्नलिप्यसेइत्यर्थः॥ ३५॥ देहाभिमानजंदेहेअहंममइत्याकारकाभिमानाज्जातं ॥ ३६॥जीवन्मुक्तातदवस्था परमात्मनारामेणसद्गुरुत्वात्क्षणसंगमेनैव॥ ३७॥ सापितिर्यग्योनिरपितारा‌अनादिबंधंसंसाररूपंनिर्धूयतिरस्कृत्य विकल्मषानिष्पापाकृता मुक्ताजीवन्मुक्ताचकृता ॥ ३८ ॥ ३९ ॥ सुग्री

ध्यात्वामद्रूपमनिशमालोचयमयोदितं ॥ प्रवाहपतितंकार्यंकुर्वत्यपिनलिप्यसे ॥ ३५ ॥ श्रीरामेणोदितंसर्वंश्रुत्वातारातिविस्मिता॥ देहाभिमानजंशोकंत्यक्त्वानत्वारघूत्तमं ॥ ३६॥ आत्मानुभवसंतुष्टाजीवन्मुक्ताबभूवह ॥ क्षणसंगममात्रेणरामेणपरमात्मना ॥ ३७॥ अनादिबंधंनिर्धूयमुक्तासापिविकल्मषा ॥ सुग्रीवोऽपिचतच्छ्रुत्वा राममवक्त्रात्समीरितं ॥ ३८ ॥ जहावज्ञानमखिलंस्वस्थचित्तोभवत्तदा ॥ ततःसुग्रीवमाहेदंरामोवानरपुंगवं ॥ ३९ ॥ भ्रातुर्ज्येष्ठस्यपुत्रेणयद्युक्तंसांपरायिकं॥ कुरुसर्वंयथान्यायंसंस्कारादिममाज्ञया ॥ ४० ॥ तथेतिबलिभिर्मुख्यैर्वानरैःपरिणीयतं ॥ वालिनंपुष्पकेक्षिप्त्वासर्वराजोपचारकैः ॥ ४१ ॥ भेरीदुंदुभिनिर्घोषैर्ब्राह्मणैर्मंत्रिभिःसह ॥ यूथपैर्वानरैःपौरैस्तारयाचांगदेनच ॥४२॥ गत्वाचकारतत्सर्वंयथाशास्त्रंप्रयत्नतः॥स्नात्वाजगामरामस्यसमीपंमंत्रिभिःसह ॥४३॥ नत्वारामस्यचरणौसुग्रीवःप्राहहृष्टधीः॥राज्यंप्रशाधिराजेंद्रवानराणांसमृद्धिमत्॥ ४४॥ दासोहंतेपादपद्मंसेवेलक्ष्मणवच्चिरं॥ इत्युक्तोराघवःप्राहसुग्रीवंसस्मितंवचः॥ ४५॥

वंकिमाहेत्यत्राह भ्रातुरिति ज्येष्ठस्यभ्रातुर्यत्सांपरायिकंपारलौकिकंयुक्तं तत्पुत्रेणांगदेनकुरुकारयेत्यर्थः ननुभवच्छत्रोःकथमस्माभिःसंस्कारादिकार्यंतत्राह ममाज्ञयेति ॥ ४० ॥ तथेतीत्यस्यांगीकृत्येतिशेषः परिणीयउत्थाप्य पुष्पकेपुष्पकविमानतुल्येवाहने सर्वराजोपचारकैर्युक्तंवालिनंक्षिप्त्वा ॥ ४१ ॥ ४२ ॥ तन्मृतोचितसंस्कारादि ॥ ४३ ॥ वानराणांराज्यंप्रशाधीत्यन्वयः ॥ ४४ ॥ ४५ ॥

त्वमेवाहं अनेनत्वयाक्रियमाणराज्यभोगएवममभोगइतिसूचितं किंचानासक्तोराज्यंभुंक्ष्वईश्वरप्रेरितोहंराज्यंकुर्वेइतिमत्याच तादृश्याबुध्या क्रियमाणयाक्रिययाभगवांस्तुष्यत्येवेतिध्वनितं पुरराज्याधिपत्येकिष्किंधापुरराज्याधिपत्ये ॥ ४६ ॥ तर्हिमदभिषेककालेतत्रसन्निधानंकुर्वितिचेत्तत्राह नगरमिति पत्तनंनगरं ॥ ४७ ॥ अहंचनगरस्यसमीपेपर्वतस्यशिखरेवत्स्यामीत्यन्वयः ॥४८ ॥ वर्षदिवसान्वर्षाकालं ततःरा

त्वमेवाहंनसंदेहःशीघ्रंगच्छममाज्ञया॥ पुरराज्याधिपत्येत्वंस्वात्मानमभिषेचय॥ ४६॥ नगरंनप्रवेक्ष्यामिचतुर्दशसमाःसखे॥ आगमिष्यतिमेभ्रातालक्ष्मणःपत्तनंतव॥ ४७॥ अंगदंयौवराज्येत्वमभिषेचयसादरं॥ अहंसमीपेशिखरेपर्वतस्यसहानुजः ॥ ४८ ॥ वत्स्यामिवर्षदिवसांस्ततस्त्वंयत्नवान्भव ॥ किंचित्कालंपुरेस्थित्वासीतायाःपरिमार्गणे॥ ४९॥ साष्टांगंप्रणिपत्याहसुग्रीवोरामपादयोः ॥ यदाज्ञापयसेदेवतत्तथैवकरोम्यहं॥५०॥ अनुज्ञातस्तुरामेणसुग्रीवस्तुसलक्ष्मणः ॥ गत्वापुरंतथाचक्रेयथारामेणचोदितः॥ ५१ ॥ सुग्रीवेणयथान्यायंपूजितोलक्ष्मणस्तदा॥ आगत्यराघवंशीघ्रंप्रणिपत्योपतस्थिवान्॥ ५२ ॥ ततोरामोजगामाशुलक्ष्मणेनसमन्वितः॥ प्रवर्षणगिरेरूर्ध्वंशिखरंभूरिविस्तरं॥ ५३ ॥ तत्रैकंगव्हरंदृष्ट्वास्फाटिकंदीप्तिमच्छुभं॥ वर्षवातातपसहंफलमूलसमीपगं॥ वासायरोचयामासतत्ररामःसलक्ष्मणः॥ ५४ ॥ दिव्यमूलफलपुष्पसंयुतेमौक्तिकोपमजलौघपल्वले॥ चित्रवर्णमृगपक्षिशोभितेपर्वतेरघुकुलोत्तमोऽवसत्॥ ५५॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेतृतीयःसर्गः॥ ३॥

ज्याभिषेकानंतरंकिंचित्कालंवर्षासमयंस्वपुरेस्थित्वासीतायाःपरिमार्गणेऽन्वेषणेयत्नवान्भवेत्यन्वयः ॥ ४९॥ ५० ॥ चादितःप्रेरितः ॥५१॥ ॥ ५२ ॥५३ ॥ गव्हरंगुहां फलमूलानिसमीपगानियस्यतत् ॥ ५४॥ मौक्तिकोपमःजलौघोजलसमूहोयेषुतादृशानिपल्वलानियस्मिंस्तादृशेपर्वतेइत्यर्थः नानावर्णैर्मृगैःपक्षिभिश्चशोभिते ॥ ५५ ॥ इतिश्री०अध्यात्मरामायणसेतौकिष्किंधाकांडेतृतीयःसर्गः ॥ ३ ॥

तत्रपर्वतेइत्यर्थः वार्षिकदिनानिव्याप्येतिशेषः अवसदित्यन्वयः ॥ १ ॥ वातप्रेरितजलपूर्णमेघान् अंतरेमध्येस्तनितयुक्तंवैद्युतंविद्युत्समूहोगर्भेयेषांतान् आहितसुकांचन्यःकक्षाःपृष्ठास्तरणानियेषांतादृशान् गजयूथान्यद्वत्तानिववीक्ष्यविस्मयमगात् अत्रगजाबृंहितयुक्ताबोध्या अतएवस्तनितेनाधिक्यं ॥ २ ॥ नवघासंतृणं विस्फारितेक्षणाभगवत्सौंदर्यदर्शनायेतिभावः ॥ ३ ॥ तादृशाःसंतोध्याननिष्ठामुनीश्वराइवन

तत्रवार्षिकदिनानिराघवोलीलयामणिगुहासुसंचरन् ॥ पक्वमूलफलभोगतोषितोलक्ष्मणेनसहितोवसत्सुखं ॥ ॥ १ ॥ वातनुन्नजलपूरितमेघानंतरस्तनितवैद्युतगर्भान् ॥ वीक्ष्यविस्मयमगाद्गजयूथान्यद्वदाहितसुकांचनकक्षान् ॥ २ ॥ नवघासंसमास्वाद्यत्दृष्टपुष्टमृगद्विजाः ॥ धावंतःपरितोरामंवीक्ष्यविस्फारितेक्षणाः ॥ ३ ॥ नचलंतिसदाध्याननिष्ठाइवमुनीश्वराः ॥ रामंमानुषरूपेणगिरिकाननभूमिषु ॥ ४ ॥ चरंतंपरमात्मानंज्ञात्वासिद्धगणाभुवि ॥ मृगपक्षिगणाभूत्वाराममेवानुसेविरे ॥ ५ ॥ सौमित्रिरेकदाराममेकांतेध्यानतत्परं ॥ समाधिविरमेभक्त्याप्रणयाद्विनयान्वितः ॥ ६ ॥ अब्रवीद्देवतेवाक्यात्पूर्वोक्ताद्विगतोमम ॥ अनाद्यविद्यासंभूतःसंशयोत्हृदिसंस्थितः ॥ ॥ ७ ॥ इदानींश्रोतुमिच्छामिक्रियामार्गेणराघव ॥ भवदाराधनंलोकेयथाकुर्वंतियोगिनः ॥ ८ ॥ इदमेवसदाप्राहुर्योगिनोमुक्तिसाधनं ॥ नारदोपितथाव्यासोब्रह्माकमलसंभवः ॥ ९ ॥ ब्रह्मक्षत्रादिवर्णानामाश्रमाणांचमोक्षदं ॥ स्त्रीशूद्राणांचराजेंद्रसुलभंमुक्तिसाधनं ॥ तवभक्तायमेभ्रात्रेब्रूहिलोकोपकारकं ॥ १० ॥

चलंति राममित्याद्युत्तरान्वयि तत्रैतेचरंतोमृगपक्षिगणानकिंतुसिद्धगणाइत्युपक्रुतिर्व्यंग्या ॥ ४ ॥ ५ ॥ ६ ॥ अनादिभूतयाऽविद्ययासंभूतोजातःसंशयोविगतइत्यन्वयः ॥ ७ ॥ क्रियामार्गेणलौकिकपुष्पादिभिःपूजारूपेण यथातत्प्रकारविशिष्टेनपूजामार्गेणयोगिनोभवदाराधनंकुर्वंतितच्छ्रोतुमिच्छामीत्यन्वयः ॥ ८ ॥ इदमेवक्रियामार्गेणाराधनमेव योगिनएवाह नारदइत्यादि ॥ ९ ॥ मेमह्यं ॥ १० ॥

॥ ११ ॥ द्विजत्वंउपनयनसंस्कारंप्राप्य त्क्रांतयोरव्यययोःप्राप्यलब्ध्वाएतयोराराधयेदित्यनेनान्वयः ॥ १२ ॥ पूजास्थानान्याह हृदयइ त्यादि स्वहृदयदेशइत्यर्थः इदंचमूर्धादीनामपिस्मृत्युक्तानामुपलक्षणं अनलेवन्हौ प्रतिमादौप्रतिमास्वर्णरूप्यादिमयीआदिनाब्राह्मणेविभा वसौसूर्यमंडलेअर्चेत्पूजयेत् ॥ १३ ॥ प्रातःस्नानमितिसकलप्रातःकृत्योपलक्षणं ॥ १४ ॥ वेदेति द्विजोवेदोदितैःशूद्रादिस्तंत्रोदितैः मृल्लेपनं सकलस्नानविधेरुपलक्षणं तेनस्नानंकुर्वन्नित्यन्वयः संध्यादिनाहोमतर्पणादि ॥ १५ ॥ ममपूजकोमद्बुद्ध्याभक्त्यास्वगुरुंपूजयेदित्यन्वयः अ

श्रीरामउवाच ममपूजाविधानस्यनांतोस्तिरघुनंदन ॥ तथाऽपिवक्ष्येसंक्षेपाद्यथावदनुपूर्वशः ॥ ११ ॥ स्वगृह्योक्तप्रकारेणद्विजत्वंप्राप्यमानवः ॥ सकाशात्सद्गुरोर्मंत्रंलब्ध्वामद्भक्तिसंयुतः ॥ १२ ॥ तेनसंदर्शितविधिर्मामेवाराधयेत्सुधीः ॥ हृदयेवानलेवार्चेत्प्रतिमादौविभावसौ ॥ १३ ॥ शालिग्रामशिलायांवापूजयेन्मामतंद्रितः ॥ प्रातःस्नानंप्रकुर्वीतप्रथमंदेहशुद्धये ॥ १४ ॥ वेदतंत्रोदितैर्मंत्रैर्मृल्लेपनविधानतः ॥ संध्यादिकर्मयन्नित्यंतत्कुर्याद्विधिनाबुधः ॥ १५ ॥ संकल्पमादौकुर्वीतसिद्ध्यर्थंकर्मणांसुधीः ॥ स्वगुरुंपूजयेद्भक्त्यामद्बुद्ध्यापूजकोमम ॥ १६ ॥ शिलायांस्नपनंकुर्यात्प्रतिमासुप्रमार्जनं ॥ प्रसिद्धैर्गंधपुष्पाद्यैर्मत्पूजासिद्धिदायिका ॥ १७ ॥ अमायिकोऽनुवृत्त्यामांपूजयेन्नियतव्रतः ॥ प्रतिमादिष्वलंकारःप्रियोमेकुलनंदन ॥ १८ ॥

त्रगुर्वसान्निध्येपिध्यानेनजलादौगुरुंपूजयेदितिसंप्रदायः ॥ १६ ॥ शिलायांशिलानिर्मितप्रतिमायां प्रतिमासुमृद्धत्वादिनिर्मितास्वित्यर्थः प्रसिद्धैःस्मृतिप्रसिद्धैः तेनतन्निषिद्धपुष्पादिपूजानर्हमितिसूचितं तेचनिषेधानिबंधेषुद्रष्टव्याविस्तरभयान्नेहलिखिताः ॥ १७ ॥ अमायिकःमायादंभादिरूपातद्रहितः अनुवृत्त्यागुरूपदिष्टमार्गानुवर्तनेन प्रतिमादिषुप्रतिमाश्चतेआदयश्चप्रतिमादयःतेषुप्रतिमादिषुप्रतिमारूपेषुआदिषु आश्रयेषुपूजाधिकरणेष्वित्यर्थः तत्पुरुषःसमानाधिकरणःकर्मधारयः प्रतिमारूपेष्वाश्रयेषु आदिशब्दआश्रयवाचीभीष्मादिश्चसुयोधनइत्यादौप्रसिद्धः अलंकारःपुष्पादिरूपः ॥ १८ ॥

आधारांतरेपूजाविशेषमाहाग्नाविति अग्नौतत्तद्देवतामंत्रेणहोमएवतत्तद्देवतापूजेत्यर्थः भास्करेस्थंडिलेयजेदिति भास्करेयजेदितियत्तत्तदा
कारेस्थंडिलेइत्यर्थः भक्तेनश्रद्धयोपहृतंवार्यपिममप्रीत्यैभवतीतिशेषः अनेनभक्तेरेवमुख्यत्वंदर्शितं॥१९॥भक्ष्यादिकमुपहृतंप्रीत्यैइतिकिंपुनर्व
क्तव्यमित्यर्थः समारभेत्पूजामितिशेषः ॥ २० ॥ तत्रपूजाप्रकारमाह चैलेति अधःकुशासनंतदुपर्यजिनंतदुपरिचैलमितिक्रमः तत्रोपवि
श्यपद्मासनाद्यन्यतमासनेनेत्यर्थः देवस्यसंमुखेइत्यनेनस्थिरासुप्रतिमासुपश्चिमाद्यभिमुखतयाऽपिपूजाभवतीतिसूचितं ॥ २१ ॥ मातृकाअ
कारादिपंचाशद्वर्णात्मिका तन्न्यासप्रकारश्चतंत्रेस्फुटः बहिरिति बहिर्न्यासमांतरंन्यासंचेत्यर्थः केशवादिचतुर्विंशतिनामभिरित्यर्थः सचना

अग्नौयजेतहविषाभास्करेस्थंडिलेयजेत्॥ भक्तेनोपहृतंप्रीत्यैश्रद्धयाममवार्यपि॥ १९ ॥ किंपुनर्भक्ष्यभोज्या
दिगंधपुष्पाक्षतादिकं॥ पूजाद्रव्याणिसर्वाणिसंपाद्यैवंसमारभेत् ॥ २० ॥ चैलाजिनकुशैःसम्यगासनंपरिक
ल्पयेत्॥ तत्रोपविश्यदेवस्यसंमुखेशुद्धमानसः॥ २१ ॥ ततोन्यासंप्रकुर्वीतमातृकाबहिरांतरं ॥ केशवादिततः
कुर्यात्तत्त्वन्यासंततःपरं॥ २२ ॥ मन्मूर्तिपंजरन्यासंमंत्रन्यासंततोन्यसेत् ॥ प्रतिमादावपितथाकुर्यान्नित्यमतं
द्रितः॥ २३ ॥ कलशंस्वपुरोवामेक्षिपेत्पुष्पादिदक्षिणे ॥ अर्घ्यपाद्यप्रदानार्थंमधुपर्कार्थमेवच ॥ २४ ॥

रदपांचरात्रादौस्पष्टः तत्त्वन्यासोपितत्रैवोक्तः॥ २२ ॥ मन्मूर्त्तिपंजरन्यासोविष्णुपंजरस्तोत्रोक्तोमहान्यासइतिसंप्रदायः मंत्रन्यासंमंत्रवर्णै
स्तत्तत्कल्पोक्तंषडंगादिन्यासं प्रतिमादावपीति यथात्मनितथादेवइत्युक्तेः ॥ २३ ॥ ईषद्वामभागावच्छिन्नपुरोभागेकलशंजलपूर्णंस्थापये
दितिशेषः पुष्पादिदक्षिणेक्षिपेत्स्थापयेदित्यर्थः अर्घ्यादिपात्रस्थापनदेशःस्मृतौउक्तः अर्घ्यपात्रंतुवायव्येनैर्ऋत्यांपाद्यपात्रकं मध्येतुमधु
पर्कस्यादेशेत्वाचमनीयकमिति ॥ २४ ॥

जीवसंज्ञितांमत्कलामित्यनेनचेतनःसर्वत्रैकएवेतिबोधितं युक्तंचतत् व्यापकेनैकेनैवचेतनोपपत्तावनेकतत्कल्पनायांमानाभावात् प्रतिकर्म व्यवस्थात्वंतःकरणभेदेनैवोपपन्नेतिहृत्पद्मेतांध्यायेत्॥२५॥तयाव्याप्तमखिलंस्वदेहंभावयेत् तथाभावयित्वातामेवमत्कलांप्रतिमादिष्वावाह येत् तदावाहनेनतामपिचेतनत्वेनध्यात्वा ॥ २६ ॥ यावच्छक्यैरुपचारैर्वाषोडशभिःपंचभिर्वा तुःपादपूरणार्थः अमाययाअदंभादिनामांपूज येत् ॥ २७ ॥ विभवेसतिकर्पूरादिभिःसुगंधपुष्पैश्चमंत्रवदर्चयेत् ॥ २८ ॥ आगमोक्तांअगस्त्यसंहितोक्तां प्रकारयेत्प्रकुर्वीतेत्यर्थः नीराजनै

तथैवाचमनार्थंतुन्यसेत्पात्रचतुष्टयं॥ हृत्पद्मेभानुविमलेमत्कलांजीवसंज्ञितां॥२५॥ ध्यायेत्स्वदेहमखिलंतया व्याप्तमरिंदम॥तामेवावाहयेन्नित्यंप्रतिमादिषुमत्कलां॥ २६ ॥ पाद्यार्घ्याचमनीयाद्यैःस्नानवस्त्रविभूषणैः॥या वच्छक्योपचारैर्वात्वर्चयेन्मामममायया॥२७॥ विभवेसतिकर्पूरकुंकुमागुरुचंदनैः ॥ अर्चयेन्मंत्रवन्नित्यंसुगंध कुसुमैःशुभैः॥२८॥दशावरणपूजांवैत्वागमोक्तांप्रकारयेत्॥नीराजनैर्धूपदीपैर्नैवेद्यैर्बहुविस्तरैः॥२९॥श्रद्धयो पहरेन्नित्यंश्रद्धाभुगहमीश्वरः॥होमंकुर्यात्प्रयत्नेनविधिनामंत्रकोविदः॥३०॥अगस्त्येनोक्तमार्गेणकुंडेनागमवि त्तमः॥जुहुयान्मूलमंत्रेणपुंसूक्तेनाथवाबुधः॥३१॥अथवौपासनाग्नौवाचरुणाहविषातथा ॥ तप्तजांबूनदप्रख्यं दिव्याभरणभूषितं॥३२॥ध्यायेदनलमध्यस्थंहोमकालेसदाबुधः॥पार्षदेभ्योबलिंदत्वाहोमशेषंसमापयेत्॥३३॥

रितिपाठक्रमादर्थक्रमस्यबलवत्त्वाद्धूपदीपनैवेद्यनीराजनानीतिक्रमः नीराजनंपंचारार्तिकादिभिः ॥ २९ ॥ तद्धूपादिश्रद्धयोपहरेद्दद्यात् य तोहंश्रद्धाभुक्श्रद्धांदत्तभोक्ता ॥ ३० ॥ अगस्त्येनेति अगस्त्यसंहितोक्तमार्गेणकृतंयत्कुंडंतेनतस्मिन्नित्यर्थः अधिकरणस्यकरणत्वविवक्षयातृ तीया मूलमंत्रेणआगमोक्तेनपुंसूक्तेनपुरुषसूक्तेन एतद्ब्राह्मणविषयं ॥ ३१॥ तद्विषयेएवाहाथवौपासनाग्नाविति चरुणाहविषाहवीरूपेणच रुणा ॥ ३२ ॥ ध्यायेन्मामितिशेषः पार्षदेभ्यःतंत्रोक्तहनूमदादिभ्यः ॥ ३३ ॥

मांध्यायन् स्मरन्नित्यस्यमनुवर्णानितिशेषः तदेवाह यतवागिति अनेनप्रशस्ततरोमानसोजपउक्तः मुखवासंतद्रूपकर्पूरादियुक्तंतांबूलंदत्वेत्यर्थः ॥ ३४ ॥ मदर्थेमत्प्रीतयेइत्यर्थः कारयेत्कुर्वीतेत्यर्थः निवृत्तप्रेषणाण्णिच् दंडवदित्यनेनाष्टांगप्रणामउक्तः ॥ ३५ ॥ भावनामयंमद्दत्तंप्रसादं शिरसिआधायस्थापयित्वा अनेनमह्यंप्रसादंपुष्पादिरूपंभगवान्ददातीतिभावनयाप्रसादंगृण्हीयादितिसूचितंतंगृहीत्वाशिरसिस्थापयित्वा भावनाभावितेमत्पदेपाणिभ्यांस्वमूर्ध्निगृहीत्वाधृत्वा ॥३६॥ इत्युक्त्वाप्रणमेदित्यन्वयः प्रत्यक्ज्योतिषिस्वहृदयस्थेयतएवध्याताजीवकलाप्रति

ततोजपंप्रकुर्वीतध्यायन्मांयतवाक्स्मरन् ॥ मुखवासंचतांबूलंदत्वाप्रीतिसमन्वितः ॥ ३४ ॥ मदर्थेनृत्यगीतादिस्तुतिपाठादिकारयेत् ॥ प्रणमेद्दंडवद्भूमौहृदयेमांनिधायच ॥ ३५ ॥ शिरस्याधायमद्दत्तंप्रसादंभावनामयं ॥ पाणिभ्यांमत्पदेमूर्ध्निगृहीत्वाभक्तिसंयुतः ॥ ३६ ॥ रक्षमांघोरसंसारादित्युक्त्वाप्रणमेत्सुधीः ॥ उद्वासयेद्यथापूर्वंप्रत्यग्ज्योतिषिसंस्मरन् ॥ ३७ ॥ एवमुक्तप्रकारेणपूजयेद्विधिवद्यदि ॥ इहामुत्रचसंसिद्धिंप्राप्नोतिमदनुग्रहात् ॥ ॥ ३८ ॥ मद्भक्तोयदिमामेवंपूजांचैवदिनेदिने ॥ करोतिममसारूप्यंप्राप्नोत्येवनसंशयः ॥ ३९ ॥ इदंरहस्यंपरमंचपावनंमयैवसाक्षात्कथितंसनातनं ॥ पठत्यजस्रंयदिवाशृणोतियःससर्वपूजाफलभाङ्नसंशयः ॥ ४० ॥ एवंपरात्माश्रीरामःक्रियायोगमनुत्तमं ॥ पृष्टःप्राहस्वभक्तायशेषांशायमहात्मने ॥ ४१ ॥

मायामावाहितापूर्वंतत्रैवोद्वासयेत् तत्रैवप्रविष्टांध्यायेत्एतदेवविसर्जनं ॥ ३७ ॥ इहामुत्रचऐहिकलौकिकींपारलौकिकींचेत्यर्थः ॥ ३८ ॥ मद्भक्तोयदिमामेवंध्यात्वाआवाह्यचदिनेदिनेप्रतिदिनंममपूजांकरोतितदाममसारूप्यंप्राप्नोति ॥ ३९ ॥ सनातनंपूर्वपूर्वैरप्येवमेवानुष्ठितं ॥ ४० ॥ शेषांशाय लक्ष्मणाय ॥ ४१ ॥

प्राकृतवत्प्रकृतिकार्यमनुष्यवत् मायामालंब्यदुःखितइत्यनेनस्वतस्तस्यदुःखलेशोपिनेतिसूचितं ॥ ४२ ॥ एकांतेइतिमंत्रत्वादेकांतेकथनं ॥ ४३॥अनुत्तमःनविद्यतेउत्तमंयस्मादित्यर्थः॥ ४४॥उपकारमेवाह त्वत्कृतेइति ॥ ४५॥दुर्लभांतारामितिवालिपरिग्रहात्त्वयासर्वथाकामिभावे नद्रष्टुमप्यशक्यामित्यर्थः ॥ ४६॥ एकाग्रंतन्मात्रचित्तत्वंयथाभवतितथाईक्षतेप्रतीक्षते कार्यस्यसीतान्वेषणरूपस्य गौरवात्त्वदेकसाध्यत्वादि

पुनःप्राकृतवद्रामोमायामालंब्यदुःखितः॥ हासीतेतिवदन्नैवनिद्रांलेभेकथंचन॥ ४२ ॥ एतस्मिन्नंतरेतत्रकिष्किंधायांसुबुद्धिमान्॥ हनूमान्प्राहसुग्रीवमेकांतेकपिनायकं॥ ४३ ॥ शृणुराजन्प्रवक्ष्यामितवैवहितमुत्तमं॥ रामेणतेकृतःपूर्वमुपकारोत्यनुत्तमः॥ ४४ ॥ कृतघ्नवत्त्वयानूनंविस्मृतःप्रतिभातिमे ॥ त्वत्कृतेनिहतोवालीवीरस्त्रैलोक्यसंमतः॥ ४५ ॥ राज्येप्रतिष्ठितोसित्वंतारांप्राप्तोसिदुर्लभां॥ सरामःपर्वतस्याग्रेभ्रात्रासहवसन्सुधीः॥ ॥ ४६ ॥ त्वदागमनमेकाग्रमीक्षतेकार्यगौरवात्॥ त्वंतुवानरभावेनस्त्रीसक्तोनावबुध्यसे॥ ४७ ॥ करोमीतिप्रतिज्ञायसीतायाःपरिमार्गणं॥ नकरोषिकृतघ्नस्त्वंहन्यसेवालिवद्द्रुतं॥ ४८ ॥ हनूमद्वचनंश्रुत्वासुग्रीवोभयविह्वलः॥ प्रत्युवाचहनूमंतंसत्यमेवत्वयोदितं ॥ ४९ ॥ शीघ्रंकुरुमदाज्ञांत्वंवानराणांतरस्विनां ॥ सहस्राणिदशैदानींप्रेषयाशुदिशोदश ॥ ५० ॥ सप्तद्वीपगतान्सर्वान्वानरानानयंतुते॥ पक्षमध्येसमायांतुसर्वेवानरपुंगवाः॥ ॥ ५१ ॥ येपक्षमतिवर्त्तंतेतेवध्यामेनसंशयः ॥ इत्याज्ञाप्यहनूमंतंसुग्रीवोगृहमाविशत्॥ ५२ ॥ सुग्रीवाज्ञांपुरस्कृत्यहनूमान्मंत्रिसत्तमः॥ तत्क्षणेप्रेषयामासहरीन्दशदिशःसुधीः॥ ५३॥

त्यर्थः ॥ ४७ ॥ कृतघ्नस्त्वंयदिनकरोषितदावालिवत्हन्यसेरामेणेतिशेषः अतःसर्वथान्वेषणमुचितमितिव्यंग्यं ॥४८॥४९॥ वानराणांमदाज्ञां कुरुबोधय॥५०॥आज्ञामाह सप्तेति ॥ ५१ ॥ इत्याज्ञाप्यएवंवानरेषुकर्त्तव्यामाज्ञांबोधयित्वा ॥ ५२ ॥५३ ॥

अगणिताःगुणाःसत्वंपराक्रमश्चयेषांतान्पर्वताकारसदृशंरूपमाकारोयेषांतान्पवनस्यवायोर्हितो तिप्रियःकुमारोहनूमान्दानमानादितृप्तानित्य नेनावश्यंकार्यसिद्धिकारित्वंदर्शितं ॥ ५४ ॥ इतिश्री० सेतौकिष्किंधाकांडेचतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ रामस्त्विति पर्वताग्रेस्थितोम णियुक्तसानौशिखरे ॥ १ ॥ नजानेनशक्नोमीत्यर्थः धातूनामनेकार्थत्वात् ॥ २ ॥ यःकश्चिदपिजीवतीतिब्रूयात्समेप्रियकृत्यत्रकुत्रवायत्र

अगणितगुणसत्वान्वायुवेगप्रचारान्वनचरगणमुख्यान्पर्वताकाररूपान् ॥ पवनहितकुमारःप्रेषयामासदूतान तिरभसतरात्मादानमानादितृप्तान् ॥ ५४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेचतु र्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ रामस्तुपर्वतस्याग्रेमणिसानौनिशामुखे ॥ सीताविरहजंशोकमसहन्निद मब्रवीत् ॥ १ ॥ पश्यलक्ष्मणमेसीताराक्षसेनहृताबलात् ॥ मृताऽमृतावानिश्चेतुंनजानेद्यापिभामिनीं ॥ २ ॥ जी वतीतिममब्रूयात्कश्चिद्वाप्रियकृत्समे ॥ यदिजानामितांसाध्वींजीवंतींयत्रकुत्रवा ॥ ३ ॥ हठादेवाहरिष्यामिसु धामिवपयोनिधेः ॥ प्रतिज्ञांशृणुमेभ्रातर्येनमेजनकात्मजा ॥ ४ ॥ नीतातंभस्मसात्कुर्यांसपुत्रबलवाहनं ॥ हे सीतेचंद्रवदनेवसंतीराक्षसालये ॥५॥ दुःखार्तामामपश्यंतीकथंप्राणान्धरिष्यसि ॥ चंद्रोपिभानुवद्भातिममचं द्राननांविना ॥ ६ ॥ चंद्रत्वंजानकींस्पृष्ट्वाकरैर्मांस्पृशशीतलैः ॥ सुग्रीवोऽपिदयाहीनोदुःखितंमांनपश्यति ॥ ॥ ७ ॥ राज्यंनिष्कंटकंप्राप्यस्त्रीभिःपरिवृतोरहः ॥ कृतघ्नोदृश्यतेव्यक्तंपानासक्तोऽतिकामुकः ॥ ८ ॥

कुत्रापीत्यर्थः ॥ ३ ॥ ४ ॥ वसंतीत्वंकथंप्राणान्धरिष्यसीत्यन्वयः ॥ ५ ॥ विरहदुःखमभिनयति चंद्रोपीति भानुवत्दाहकत्वात् ॥ ६ ॥ चं द्रत्वमिति कर्पूरतोप्यतिशीतलस्यममकामदुःखशामकस्यतद्गात्रस्यस्पर्शेतवकराअपितथागुणशैत्ययुक्ताभूत्वामांसुखयिष्यंतीतिभावः विरह वेदनासहत्वादेवसुग्रीवंनिंदति सुग्रीवोपीति ॥ ७ ॥ यन्मांनपश्यतितत्कृतघ्नःसइवदृश्यते ॥ ८ ॥

कृतघ्नत्वमुपपादयति नायातीति ॥ ९ ॥ एवंयथासीताहर्त्तारंहंतुमिच्छामिएवमित्यर्थः अद्ययथामेमयावालीहतस्तथासुग्रीवोपिभवेदित्यर्थः ॥ १ ० ॥ रुष्टंक्रोधवंतं ॥ १ १ ॥ इदानीमेवेत्याद्युक्त्वाराजाज्ञांविनेदृशकार्यकरणमनुचितमितिप्रतिसंधायाह मामाज्ञापयेति ईदृशेस्थलेप्रथमतोऽप्रतिसंधानंतुरामरोषेणलक्ष्मणस्यापिरोषाविष्टत्वात्अतोगर्भितंनदोषः ॥ १ २ ॥ १ ३ ॥ वालिवन्नहनिष्यसेइत्युक्त्वाभीषयेत्यन्वयः नजिकाकुः ततःसुग्रीवप्रतिभाषितंतद्दत्तोत्तरंआदाय ॥ १ ४ ॥ अत्रागत्यमांश्रावयेतिशेषः तच्छ्रुत्वापश्चाद्यत्कार्यंकर्तुंयोग्यंतत्करिष्यामि अगच्छदिति

नायातिशरदंपश्यन्नपिमार्गयितुंप्रियां॥पूर्वोपकारिणंदुष्टःकृतघ्नोविस्मृतोहिमां॥९॥हन्मिसुग्रीवमप्येवंसपुरंसहबांधवं॥वालीयथाहतोमेऽद्यसुग्रीवोपितथाभवेत्॥ १ ०॥इतिरुष्टंसमालोक्यराघवंलक्ष्मणोऽब्रवीत्॥इदानीमेवगत्वाहंसुग्रीवंदुष्टमानसं॥ १ १॥मामाज्ञापयहत्वातमायास्येरामतेतिकं॥इत्युक्त्वाधनुरादायखड्गंतूणीरमेवच॥ १ २॥ गंतुमभ्युद्यतंवीक्ष्यरामोलक्ष्मणमब्रवीत्॥नहंतव्यस्त्वयावत्ससुग्रीवोमेप्रियःसखा॥ १ ३॥ किंतुभीषयसुग्रीवंवालिवन्नहनिष्यसे॥इत्युक्त्वाशीघ्रमादायसुग्रीवप्रतिभाषितं॥ १ ४॥ आगत्यपश्चाद्यत्कार्यंतत्करिष्याम्यसंशयं॥तथेतिलक्ष्मणोऽगच्छत्त्वरितोभीमविक्रमः॥ १ ५॥ किष्किंधांप्रतिकोपेननिर्दहन्निववानरान्॥सर्वज्ञोनित्यलक्ष्मीकोविज्ञानात्मापिराघवः॥ १ ६॥ सीतामनुशुशोचार्तःप्राकृतःप्राकृतामिव॥बुध्यादिसाक्षिणस्तस्यमायाकार्यातिवर्तिनः॥ १ ७॥रागादिरहितस्यास्यतत्कार्यंकथमुद्भवेत्॥ ब्रह्मणोक्तमृतंकर्तुंराज्ञोदशरथस्यहि॥ १ ८॥

च्छेदः ॥ १ ५ ॥ किष्किंधांप्रत्यगच्छदितिपूर्वेणान्वयः नित्यलक्ष्मीकःअविभक्ततन्नामकमायाशक्तिः तत्संबंधादेवसर्वज्ञःस्वतस्तुविज्ञानात्मा निर्विषयज्ञानस्वरूपोपि ॥ १ ६ ॥ सीतामनुशुशोचेतिविरोधः प्राकृतोऽज्ञोजनःप्राकृतांसंयोगवियोगशालिनीं तत्रशंकते बुध्येत्यादिनाकथमुद्भवेदित्यंतेन मायाकार्यातिवर्तिनःतदस्पृष्टस्य ॥ १ ७ ॥ अतएवरागादिरहितस्य समाधत्ते ब्रह्मणेति ब्रह्मप्रार्थितंरावणवधफलकावतरणं ऋतंसत्यंकर्तुंजातः फलांतरमप्याह राज्ञस्तपःफलदानायच ॥ १ ८ ॥

मानुषवेषधृक्जातः एवंचतद्वेषनिर्वाहायैवैवंचेष्टाकरणमितिभावः फलांतरमपितथाव्यवहरणस्याह मायेति मायामोहितत्वादेवाज्ञानसंयुताः ॥ १९ ॥ प्रथयितुंविस्तारयितुं ॥ २० ॥ मानुषचेष्टकःमनुष्यसदृशचेष्टाकर्ता लोकानांक्रोधादिकालिकस्यव्यवहारस्यसिद्धयेज्ञानायार्थस्यतत्फलस्यचसिद्धये ॥ २१ ॥ तत्तत्कालोचितंव्यवहारंगृह्णन्व्यवहरन्प्रजाःमोहयति रामोप्येवंव्यवहृतवान्तस्मादेवंव्यवहारोयुक्तइतिबोधयति मोहकत्वंचास्यनिवृत्तिमार्गविपरीतत्वेन गुणवर्जितोऽपिअशेषगुणेषुशत्रुवधकांतानुरागादिषुअनुरक्तइवतत्तद्व्यवहरन् अतएवमोहयति ॥ २२॥ कामाद्यलिप्तत्वमेवहेतुपूर्वंनिरूपयति विज्ञानेति स्वयंविज्ञानमूर्तिस्तद्घनःतथाविज्ञानरूपैवशक्तिर्यस्य तेनशक्तिसंसर्गकृतोऽन्य

**तपसःफलदानायजातोमानुषवेषधृक् ॥ माययामोहिताःसर्वेजनाअज्ञानसंयुताः ॥ १९ ॥ कथमेषांभवेन्मोक्षइतिविष्णुर्विचिंतयन् ॥ कथांप्रथयितुंलोकेसर्वलोकमलापहां ॥ २० ॥ रामायणाभिधांरामोभूत्वामानुषचेष्टकः ॥ क्रोधंमोहंचकामंचव्यवहारार्थसिद्धये ॥ २१ ॥ तत्तत्कालोचितंगृह्णन्मोहयत्यवशाःप्रजाः ॥ अनुरक्तइवाशेषगुणेषुगुणवर्जितः ॥ २२ ॥ विज्ञानमूर्तिर्विज्ञानशक्तिःसाक्ष्यगुणान्वितः ॥ अतःकामादिभिर्नित्यमविलिप्तोयथानभः ॥ २३ ॥ विंदंतिमुनयःकेचिज्जानंतिसनकादयः ॥ तद्भक्तानिर्मलात्मानःसम्यक्जानंतिनित्यदा ॥ २४ ॥ भक्तचित्तानुसारेणजायतेभगवानजः ॥ लक्ष्मणोऽपितदागत्वाकिष्किंधानगरांतिकम् ॥ २५ ॥**

थाभावोवारितः अतएवसर्वप्राणिनांशुभाशुभसाक्षीविशिष्टज्ञानशक्तित्वात् अगुणान्वितःगुणान्वितभिन्नःनिर्गुणइतियावत् अतइतिस्पष्टं यथानभआकाशपवनानीतमलेनालिप्तस्तद्वत् ॥ २३ ॥ नन्वेवंभूतोस्माभिर्नगृह्यतेकिंतत्राह विंदंतीति केचिदेवसनकादयोमुनयोजानंतिश्रुतिवाक्यैर्विंदंतिलभंते अपरोक्षतयापिसाक्षात्कुर्वंतिइतियावत् तत्किमन्येनजानंत्येवसर्वथानेत्याह तद्भक्ताइति ईदृशाःसम्यक्जानंत्येवेतिभावः ॥ २४ ॥ तत्रहेतुमाह भक्तेति जायतेज्ञानविषयोजायतइत्यर्थः ॥ २५ ॥

वप्रंप्राकारः ॥ २६ ॥ किलकिलाशब्दोवानराणांक्रोधभयादिकालिकःशब्दः ॥ २७ ॥ समापत्यगृहाच्चलित्वा ॥ २८ ॥ लक्ष्मणसामीप्यंगत्वाप्राप्य ॥ २९ ॥ प्रियवर्धनःप्रियाणांवृद्धिकरणशीलः ॥ ३० ॥ रौद्रमूर्तिनाबालिवधकालिकमूर्तिना ॥ ३१ ॥ लक्ष्मणोबहिःस्थितइतिन्यवेदयदित्यन्वयः ॥ ३२ ॥ लक्ष्मणंतन्निकटं ॥ ३३ ॥ कोपितंसंजातकोपंसांत्वयन्क्षमावंतंकुर्वन्मंदिरमानयप्रापय ॥ ३४ ॥ मृदुभाषि

ज्याघोषमकरोत्तीव्रंभीषयन्सर्ववानरान् ॥ तंदृष्ट्वाप्राकृतास्तत्रवानरावप्रमूर्धनि ॥ २६ ॥ चक्रुःकिलकिलाशब्दंधृतपाषाणपादपाः ॥ तान्दृष्ट्वाक्रोधताम्राक्षोवानरान्लक्ष्मणस्तदा ॥ २७ ॥ निर्मूलान्कर्तुमुद्युक्तोधनुरानम्यवीर्यवान् ॥ ततःशीघ्रंसमापत्यज्ञात्वालक्ष्मणमागतं ॥ २८ ॥ निवार्यवानरान्सर्वानंगदोमंत्रिसत्तमः ॥ गत्वालक्ष्मणसामीप्यंप्रणनामसदंडवत् ॥ २९ ॥ ततोंगदंपरिष्वज्यलक्ष्मणःप्रियवर्धनः ॥ उवाचवत्सगच्छत्वंपितृव्यायनिवेदय ॥ ३० ॥ मामागतंराघवेणचोदितंरौद्रमूर्तिना ॥ तथेतित्वरितंगत्वासुग्रीवायन्यवेदयत् ॥ ३१ ॥ लक्ष्मणःक्रोधताम्राक्षःपुरद्वारिबहिःस्थितः ॥ तच्छ्रुत्वातीवसंत्रस्तःसुग्रीवोवानरेश्वरः ॥ ३२ ॥ आहूयमंत्रिणांश्रेष्ठंहनूमंतमथाऽब्रवीत् ॥ गच्छत्वमंगदेनाशुलक्ष्मणंविनयान्वितः ॥ ३३ ॥ सांत्वयन्कोपितंवीरंशनैरानयमंदिरं ॥ प्रेषयित्वाहनूमंतंतारामाहकपीश्वरः ॥ ३४ ॥ त्वंगच्छसांत्वयंतीतंलक्ष्मणंमृदुभाषितैः ॥ शांतमंतःपुरंनीत्वापश्चाद्दर्शयमेनघे ॥ ३५ ॥ भवत्वितिततस्तारामध्यकक्षंसमाविशत् ॥ हनूमानंगदेनैवसहितोलक्ष्मणांतिकं ॥ ३६ ॥ गत्वाननामशिरसाभक्त्यास्वागतमब्रवीत् ॥ एहिवीरमहाभागभवद्गृहमशंकितं ॥ ३७ ॥

तैःसांत्वयंतीलक्ष्मणंप्रतिगच्छ ततःशांतंशांतकोपंकृत्वाततोऽतःपुरंनीत्वा अनेनात्यंतमित्रताप्रदर्शनं मेमांदर्शय ॥ ३५ ॥ मध्यकक्षंस्त्रीणांसंचारमर्यादास्थलं ॥ ३६ ॥ अशंकितंमेहियतइदंभवद्गृहं ॥ ३७ ॥

राजदारादीन्दृष्ट्वेत्यनेनसेवकदारदर्शनेयथाराज्ञोनसंकोचस्तथाऽस्मद्राजदारदर्शनेतवसंकोचोनोचितइतिभावः ॥ ३८ ॥ गृह्येत्यार्षं ॥ ३९ ॥ यूथपानांमहासौधान्गृहानित्यर्थः ॥ ४० ॥ ताराधिपाननाचंद्रमुखी ॥ ४१ ॥ आदौस्वस्यसेवकत्वाल्लक्ष्मणस्यभगवदवतारत्वाच्चनत्वापश्चान्मित्रभावेनदेवरेत्युक्तिः त्वंसाधुर्भक्तवत्सलोऽतोभक्तेष्वीदृशःकोपोऽनुचितइतिभावः ॥ ४२॥ आकार्षीःअतिशयेनकृतवान् अनाश्वासंनिरंत

प्रविश्यराजदारादीन्दृष्ट्वासुग्रीवमेवच ॥ यदाज्ञापयसेपश्चात्तत्सर्वंकरवाणिभो ॥ ३८ ॥ इत्युक्तालक्ष्मणंभक्त्याकरेगृह्यसमारुतिः ॥ आनयामासनगरमध्याद्राजगृहंप्रति ॥ ३९ ॥ पश्यंस्तत्रमहासौधान्यूथपानांसमंततः॥जगामभवनंराज्ञःसुरेंद्रभवनोपमं ॥४०॥ मध्यकक्षेगतातत्रताराताराधिपानना ॥ सर्वाभरणसंपन्नामदरक्तांतलोचना ॥ ४१ ॥ उवाचलक्ष्मणंनत्वास्मितपूर्वाभिभाषिणी ॥ याहिदेवरभद्रंतेसाधुस्त्वंभक्तवत्सलः ॥ ॥ ४२ ॥ किमर्थंकोपमाकार्षीर्भक्तेभृत्येकपीश्वरे ॥ बहुकालमनाश्वासंदुःखमेवानुभूतवान् ॥४३॥ इदानींबहुदुःखौघाद्भवद्भिरभिरक्षितः ॥ भवत्प्रसादात्सुग्रीवःप्राप्तसौख्योमहामतिः ॥ ४४ ॥ कामासक्तोरघुपतेःसेवार्थंनागतोहरिः॥ आगमिष्यंतिहरयोनानादेशगताःप्रभो ॥ ४५ ॥ प्रेषितादशसाहस्राहरयोरघुसत्तम ॥ आनेतुंवानरान्दिग्भ्योमहापर्वतसन्निभान्॥ ४६॥ सुग्रीवःस्वयमागत्यसर्ववानरयूथपैः॥ वधयिष्यतिदैत्यौघान्रावणंचहनिष्यति ॥४७॥ त्वयैवसहितोऽद्यैवगंतावानरपुंगवः॥ पश्यांतर्भवनंतत्रपुत्रदारसुहृद्वृतं॥४८॥

रमित्यर्थः ॥ ४३ ॥ बहुदुःखौघात्वालितःप्राप्यमाणात् ॥ ४४ ॥ यतःप्राप्तसौख्योऽतःकामासक्तोपिसेवार्थंनागतइतिनअपित्वागतएवकाकुरत्र कथमागतस्तत्राह आगमिष्यंतीति ॥ ४५॥ एवंचैवमुद्यमकरणात्सेवांकृतवानेवेतिभावः ॥ ४६ ॥ ४७ ॥ रामभ्रातृत्वात्त्वयैवसहितो वानरपुंगवोऽद्यैवगंता रामसमीपमितिशेषः अंतर्भवनस्यमध्ये ॥ ४८॥

तेसहैवनय स्वेनैवसहनयेत्यर्थः तारावचनेनातिमधुरेणललितेनकृशक्रोधः ॥ ४९ ॥ यत्रसुग्रीवःस्थितस्तदंतःपुरंजगाम ॥ ५० ॥ अत्यर्थंअ
तिशयेनातिभीतवदुत्पपातपर्यंकादितिशेषः मदविव्हलितेक्षणंमदविकलनेत्रं ॥ ५१ ॥ प्रतीक्षतेत्वांहंतुमितिशेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥

दृष्ट्वासुग्रीवमभयंदत्वानयसहैवते॥ तारायावचनंश्रुत्वाकृशक्रोधोऽथलक्ष्मणः॥४९॥ जगामांतःपुरंयत्रसुग्री
वोवानरेश्वरः॥ रुमामालिंग्यसुग्रीवःपर्यंकेपर्यवस्थितः ॥ ५० ॥ दृष्ट्वालक्ष्मणमत्यर्थंउत्पपातातिभीतवत् ॥
तंदृष्ट्वालक्ष्मणःक्रुद्धोमदविह्वलितेक्षणं ॥ ५१ ॥ सुग्रीवंप्राहदुर्वृत्तविस्मृतोसिरघूत्तमं ॥ वालीयेनहतोवीरःस
बाणोऽद्यप्रतीक्षते॥ ५२॥ त्वमेववालिनोमार्गंगमिष्यसिमयाहतः॥ एवमत्यंतपरुषंवदंतंलक्ष्मणंतदा॥ ५३॥
उवाचहनुमान्वीरःकथमेवंप्रभाषसे॥ त्वत्तोधिकतरोरामेभक्तोयंवानराधिपः॥ ५४ ॥रामकार्यार्थमनिशंजा
गर्तिनतुविस्मृतः॥ आगताःपरितःपश्यवानराःकोटिशःप्रभो ॥५५॥गमिष्यंत्यचिरेणैवसीतायाःपरिमार्गणं॥
साधयिष्यतिसुग्रीवोरामकार्यमशेषतः॥ ५६॥ श्रुत्वाहनूमतोवाक्यंसौमित्रिर्लज्जितोभवत्॥ सुग्रीवोप्यर्घ्यपा
द्याद्यैर्लक्ष्मणंसंप्रपूजयत्॥५७॥ आलिंग्यप्राहरामस्यदासोहंतेनरक्षितः॥ रामःस्वतेजसालोकान्क्षणार्धेनैवजे
ष्यति॥ ५८ ॥ सहायमात्रमेवाहंवानरैःसहितःप्रभो ॥ सौमित्रिरपिसुग्रीवंप्राहकिंचिन्मयोदितं ॥ ५९ ॥ तत्क्ष
मस्वमहाभागप्रणयाद्भाषितंमया॥ गच्छामोद्यैवसुग्रीवरामस्तिष्ठतिकानने॥६०॥ एकएवातिदुःखार्तोजान
कीविरहात्प्रभुः॥ तथेतिरथमारुह्यलक्ष्मणेनसमन्वितः॥ ६१ ॥ वानरैःसहितोराजाराममेवान्वपद्यत॥ ६२॥

जागर्तिउद्यमवान्भवति अस्मिन्नेवसमयेआकारणार्थंगताःवानराःसेनांक्रर्षंतआगताइत्याह आगताइति ॥ ५५ ॥ परिमार्गणंकर्तुमितिशे
षः ॥ ५६ ॥ ५७ ॥ ५८ ॥ यत्किंचिन्मयोदितंतत्क्षमस्वेत्यन्वयः ॥ ५९ ॥ प्रणयात्प्रणयकोपात् ॥ ६० ॥ ६१ ॥ ६२ ॥

॥ ६३ ॥ इतिश्रीमत्सकल० सेतौकिष्किंधाकांडेपंचमःसर्गः ॥ ५ ॥ ॥ ७ ॥ ॥ ७ ॥ दृष्ट्वेति चैलंचजीर्णवासोऽजिनंच



॥ १ ॥ स्मितेनचारुसुंदरंमुखांबुजंयस्यतं ॥ २ ॥ ३ ॥ अनामयमारोग्यं अंतिकेस्वसमीपे ॥ ४ ॥ ५ ॥ कुलाचलाहिमालयादयःसप्तपर्व





भेरीमृदंगैर्बहुऋक्षवानरैःश्वेतातपत्रैर्व्यजनैश्चशोभितः ॥ नीलांगदाद्यैर्हनुमत्प्रधानैःसमावृतोराघवमभ्यगाद्ध रिः ॥६३॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेपंचमःसर्गः ॥ ५ ॥ ॥ ७ ॥ दृष्ट्वारामं समासीनंगुहाद्वारिशिलातले ॥ चैलाजिनधरंश्यामंजटामौलिविराजितं ॥ १ ॥ विशालनयनंशांतंस्मितचारु मुखांबुजं ॥ सीताविरहसंतप्तंपश्यंतंमृगपक्षिणः ॥ २ ॥ रथाद्दूरात्समुत्पत्त्यवेगात्सुग्रीवलक्ष्मणौ ॥ रामस्यपादयो रग्रेपेततुर्भक्तिसंयुतौ ॥ ३ ॥ रामःसुग्रीवमालिंग्यपृष्ट्वानामयमंतिके ॥ स्थापयित्वायथान्यायंपूजयामासधर्म वित् ॥ ४ ॥ ततोब्रवीद्रघुश्रेष्ठंसुग्रीवोभक्तिनम्रधीः ॥ देवपश्यसमायांतींवानराणांमहाचमूं ॥ ५ ॥ कुलाचलाद्रि संभूतामेरुमंदरसन्निभाः ॥ नानाद्वीपसरिच्छैलवासिनःपर्वतोपमाः ॥ ६ ॥ असंख्याताःसमायांतिहरयःकाम रूपिणः ॥ सर्वेदेवांशसंभूताःसर्वेयुद्धविशारदाः ॥ ७ ॥ अत्रकेचिद्गजबलाःकेचिद्दशगजोपमाः ॥ गजायुतबलाः केचिदन्येऽमितबलाःप्रभो ॥ ८ ॥ केचिदंजनकूटाभाःकेचित्कनकसन्निभाः ॥ केचिद्रक्तांतवदनादीर्घवालास्त थापरे ॥ ९ ॥ शुद्धस्फटिकसंकाशाःकेचिद्राक्षससन्निभाः ॥ गर्जंतःपरितोयांतिवानरायुद्धकांक्षिणः ॥ १० ॥ त्व दाज्ञाकारिणःसर्वेफलमूलाशनाःप्रभो ॥ ऋक्षाणामधिपोवीरोजांबवान्नामबुद्धिमान् ॥ ११ ॥ एषमेमंत्रिणां श्रेष्ठःकोटिभल्लुकवृंदपः ॥ हनूमानेषविख्यातोमहासत्त्वपराक्रमः ॥ १२ ॥



ताः ॥ ६ ॥ ७ ॥ अमितबलाइतिच्छेदः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ कोटिभल्लूकवृंदपःकोटीतिवृंदविशेषणं ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ प्रत्येकतःसार्वविभक्तिकस्तसिः एकैकइत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ कार्यगौरवंजानासि अतोयस्यांदिशि येयोग्यास्तांस्तत्रनियुंक्ष्वेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ अत्यर्थमतिशयेनमहाबलानाज्ञात्वाप्रयत्नेनतानेवप्रेषयामासेत्यन्वयः तानेवाह युव

वायुपुत्रोऽतितेजस्वीमंत्रीबुद्धिमतांवरः ॥ नलोनीलश्चगवयोगवाक्षोगंधमादनः ॥ १३ ॥ शरभोमैंदवश्चैवग जःपनसएवच ॥ वलीमुखोदधिमुखःसुषेणस्तारएवच ॥ १४ ॥ केसरीचमहासत्त्वःपिताहनुमतोबली ॥ एतेमेयू थपारामप्राधान्येनमयोदिताः ॥ १५ ॥ महात्मानोमहावीर्याःशक्रतुल्यपराक्रमाः ॥ एतेप्रत्येकतःकोटिकोटिवान रयूथपाः ॥ १६ ॥ तवाज्ञाकारिणःसर्वेसर्वेदेवांशसंभवाः ॥ एषवालिसुतःश्रीमानंगदोनामविश्रुतः ॥ १७ ॥ वालि तुल्यबलोवीरोराक्षसानांबलांतकः ॥ एतेचान्येचबहवस्त्वदर्थेत्यक्तजीविताः ॥ १८ ॥ योद्धारःपर्वताग्रैश्चनिपु णाःशत्रुघातने ॥ आज्ञापयरघुश्रेष्ठसर्वेतेवशवर्तिनः ॥ १९ ॥ रामःसुग्रीवमालिंग्यहर्षपूर्णाश्रुलोचनः ॥ प्राहसु ग्रीवजानासिसर्वत्वंकार्यगौरवं ॥ २० ॥ मार्गणार्थेहिजानक्यानियुंक्ष्वयदिरोचते ॥ श्रुत्वारामस्यवचनंसुग्री वःप्रीतमानसः ॥ २१ ॥ प्रेषयामासबलिनोवानरान्वानरर्षभः ॥ दिक्षुसर्वासुविविधान्वानरान्प्रेष्यसत्वरं ॥ ॥ २२ ॥ दक्षिणांदिशमत्यर्थंप्रयत्नेनमहाबलान् ॥ युवराजंजांबवंतंहनूमंतंमहाबलं ॥ २३ ॥ नलंसुषेणंशरभं मैंदंद्विविदमेवच ॥ प्रेषयामाससुग्रीवोवचनंचेदमब्रवीत् ॥ २४ ॥ विचिन्वंतुप्रयत्नेनभवंतोजानकींशुभां ॥ मा सादर्वाङ्निवर्तध्वंमच्छासनपुरःसराः ॥ २५ ॥ सीतामदृष्ट्वायदिवोमासादूर्ध्वंदिनंभवेत् ॥ तदाप्राणांतिकंदंडंम त्तःप्राप्स्यथवानराः ॥ २६ ॥

राजमिति ॥ २३ ॥ २४ ॥ मच्छासनपुरःसराःमच्छासनंपुरःसरमग्रेयेषांतादृशाः अनेनमच्छासनं नविस्मर्त्तव्यमितिसूचितं ॥ २५ ॥ प्राणांतिकंप्राणांतसंबंधिनंतत्संपादकमितियावत् अध्यात्मादित्वाट्ठञ् ॥ २६ ॥

श्रीरामंनत्वातत्पार्श्वेउपविवेशेत्यन्वयः ॥ २७ ॥ मेममांगुलीयकंगृहाणेतिशेषः हिःपादपूरणे ॥ २८ ॥ ननुअंगदादीन्विहायमह्यमेवकिमर्थं दीयतेतत्राह अस्मिन्निति सत्त्वंबलंबुद्धिच ॥२९॥ परिमार्गणेतन्निमित्तमित्यर्थः ॥३०॥३१॥ किलकिलाशब्दंमुंचंतोमुष्टिभिःक्षणाज्जघ्नुःराक्षसमितिशेषः ॥ ३२ ॥ नायमितिसुकरवधत्वादितिभावः ॥ ३३ ॥ शुष्कंकंठोष्ठतालुकंयेषांते ॥ ३४ ॥ ततःगह्वरात् ॥ ३५ ॥ उत्सुकाः







इतिप्रस्थाप्यसुग्रीवोवानरान्भीमविक्रमान् ॥ रामस्यपार्श्वेश्रीरामंनत्वाचोपविवेशसः ॥ २७ ॥ गच्छंतंमारुतिंदृष्ट्वारामोवचनमब्रवीत् ॥ अभिज्ञानार्थमेतन्मेह्यंगुलीयकमुत्तमं ॥२८॥ मन्नामाक्षरसंयुक्तंसीतायैदीयतांरहः ॥ अस्मिन्कार्येप्रमाणंहित्वमेवकपिसत्तम ॥ जानामिसत्त्वंतेसर्वंगच्छपंथाःशुभस्तव ॥ २९ ॥ एवंकपीनांराज्ञातेविसृष्टाःपरिमार्गणे ॥ सीतायाअंगदमुखाबभ्रमुस्तत्रतत्रह॥३०॥ भ्रमंतोविंध्यगहनेददृशुःपर्वतोपमं॥ राक्षसंभीषणाकारंभक्षयंतंमृगान्गजान् ॥ ३१ ॥ रावणोयमितिज्ञात्वाकेचिद्वानरपुंगवाः ॥ जघ्नुःकिलकिलाशब्दंमुंचंतोमुष्टिभिःक्षणात् ॥ ३२ ॥ नायंरावणइत्युक्त्वाययुरन्यन्महद्वनं ॥ तृषार्ताःसलिलंतत्रनाविंदन्हरिपुंगवाः ॥ ३३ ॥ विभ्रमंतोमहारण्येशुष्ककंठोष्ठतालुकाः ॥ ददृशुर्गह्वरंतत्रतृणगुल्मावृतंमहत् ॥ ३४ ॥ आर्द्रपक्षान्क्रौंचहंसान्निःसृतान्ददृशुस्ततः॥अत्रास्तेसलिलंनूनंप्रविशामोमहागुहां ॥ ३५ ॥ इत्युक्त्वाहनुमानग्रेप्रविवेशतमन्वयुः ॥ सर्वेपरस्परंधृत्वाबाहून्बाहुभिरुत्सुकाः ॥ ३६ ॥ अंधकारेमहद्दूरंगत्वाऽपश्यन्कपीश्वराः ॥ जलाशयान्मणिनिभतोयान्कल्पद्रुमोपमान् ॥ ३७ ॥



जलविषयोत्कंठावंतइत्यर्थः परस्परंबाहुभिर्बाहून्धृत्वासर्वेहनूमंतमन्वयुः अत्यंधकारादेवंकरणं ॥ ३६ ॥ महद्दूरंबहुदूरमित्यर्थः मणिनिभतोयान्मणितुल्यनिर्मलजलान् कल्पद्रुमोपमानितिउत्तरान्वयि ॥ ३७ ॥

मधुद्रोणसमन्वितान्द्रोणपरिमितमधुयुतान् गृहान्गृहाणि अर्धचार्दिः॥३८॥ अतएवविस्मितालब्धाश्चर्याः ॥ ३९॥ योगमास्थितांचित्तवृत्ति निरोधजसिद्धिप्राप्तां ॥४०॥ भक्तिर्भीतिर्योगिनीविषये किंकिमर्थमागताः॥४१॥ कुतआगताइतिशेषः मत्स्थानंकिंप्रधर्षथ किमितिबलात्प्र

वृक्षान्पक्कफलैर्नम्रान्मधुद्रोणसमन्वितान्॥ गृहान्सर्वगुणोपेतान्मणिवस्त्रादिपूरितान् ॥ ३८ ॥ दिव्यभक्षान्न सहितान्मानुषैःपरिवर्जितान्॥ विस्मितास्तत्रभवनेदिव्येकनकविष्टरे॥ ३९ ॥ प्रभयादीप्यमानांतुददृशुःस्त्रिय मेकलां॥ ध्यायंतींचीरवसनांयोगिनींयोगमास्थितां॥४०॥प्रणेमुस्तांमहाभागांभक्त्याभीत्याचवानराः॥ दृष्ट्वा तान्वानरान्देवीप्राहयूयंकिमागताः॥४१॥ कुतोवाकस्यदूतावामत्स्थानंकिंप्रधर्षथ॥तच्छ्रुत्वाहनुमानाहशृणुव क्ष्यामिदेविते॥ ४२ ॥ अयोध्याधिपतिःश्रीमान्राजादशरथःप्रभुः॥ तस्यपुत्रोमहाभागोज्येष्ठोरामइतिश्रुतः॥ ॥ ४३॥ पितुराज्ञांपुरस्कृत्यसभार्यःसानुजोवनं॥ गतस्तत्रहृताभार्यातस्यसाध्वीदुरात्मना॥४४॥ रावणेनततो रामःसुग्रीवंसानुजोययौ॥ सुग्रीवोमित्रभावेनरामस्यप्रियवल्लभां॥ ४५ ॥ मृगयध्वमितिप्राहततोवयमुपाग ताः॥ ततोवनंविचिन्वंतोजानकींजलकांक्षिणः॥ ४६॥ प्रविष्टागह्वरंघोरंदैवादत्रसमागताः॥ त्वंवाकिमर्थ मत्रासिकावात्वंवदनःशुभे ॥ ४७॥ योगिनीचतथादृष्ट्वावानरान्प्राहहृष्टधीः॥यथेष्टंफलमूलानिजग्ध्वापीत्वा मृतंपयः॥ ४८॥ आगच्छततत्तोवक्ष्येममवृत्तांतमादितः॥ तथेतिभुक्त्वापीत्वाचहृष्टास्तेसर्ववानराः॥ ४९॥ दे व्याःसमीपंगत्वातेबद्धांजलिपुटाःस्थिताः॥ ततःप्राहहनूमंतंयोगिनीदिव्यदर्शना॥ ५० ॥ हेमानामपुरादिव्यरू पिणीविश्वकर्मणः॥पुत्रीमहेशंनृत्येनतोषयामासभामिनी॥ ५१ ॥

विष्टाः॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ तथादृष्ट्वाक्षुत्तृड्युतान्दृष्ट्वा ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

प्रददौहेमायाइतिशषः ॥ ५२ ॥ दिव्यगंधर्वोदिव्याख्योगंधर्वस्तस्यकन्या ॥ ५३ ॥ साहेमा ॥ ५४ ॥ ५५ ॥ तान्वानरान् रामंगत्वातत्समीपं गत्वास्तुत्वार्थाद्रामसेव ॥ ५६ ॥ यातासि लुटिरूपं इतःपूर्वोक्तहेमानियोगात्अस्मादेशाच्च ॥ ५७ ॥ वेगात्वेगादिवक्षणेनैवेत्यर्थः पूर्वस्थितं वनंगताः ॥ ५८ ॥ ५९ ॥ रोमांचिततनूरुहाजातरोमांचतनूरुहा ॥ ६०॥६१॥ मायायाःपरतःस्थितंतदनधीनं ॥ ६२ ॥ विवर्तोपादानतयांत

तुष्टोमहेशःप्रददाविदंदिव्यपुरंमहत् ॥ अत्रस्थितासासुदतीवर्षाणामयुतायुतं ॥ ५२ ॥ तस्याअहंसखीविष्णुत त्परामोक्षकांक्षिणी ॥ नाम्नास्वयंप्रभादिव्यगंधर्वतनयापुरा ॥ ५३ ॥ गच्छंतीब्रह्मलोकंसामामाहेदंतपश्चर ॥ अ त्रैवनिवसंतीत्वंसर्वप्राणिविवर्जिते ॥५४॥ त्रेतायुगेदाशरथिर्भूत्वानारायणोव्ययः॥ भूभारहरणार्थायविचरि ष्यतिकानने ॥ ५५ ॥ मार्गंतोवानरास्तस्यभार्यामायांतितेगुहां ॥ पूजयित्वाथतान्गत्वारामंस्तुत्वाप्रयत्नतः ॥ ॥ ५६ ॥ यातासिभवनंविष्णोर्योगिगम्यंसनातनं ॥ इतोहंगंतुमिच्छामिरामंद्रष्टुंत्वरान्विता ॥ ५७ ॥ यूयंपिदध्व मक्षीणिगमिष्यथबहिर्गुहां ॥ तथैवचक्रुस्तेवेगाद्गताःपूर्वस्थितंवनं ॥ ५८ ॥ सापित्यक्त्वागुहांशीघ्रंययौराघवस न्निधिं ॥ तत्ररामंससुग्रीवंलक्ष्मणंचददर्शह ॥ ५९ ॥ कृत्वाप्रदक्षिणंरामंप्रणम्यबहुशःसुधीः ॥ आहगद्गदयावा चारोमांचिततनूरुहा ॥ ६० ॥ दासीतवाहंराजेंद्रदर्शनार्थमिहागता ॥ बहुवर्षसहस्राणितप्तंमेदुश्चरंतपः ॥६१ ॥ गुहायांदर्शनार्थंतफलितंमेद्यतत्तपः ॥ अद्यहित्वांनमस्यामिमायायाःपरतःस्थितं ॥ ६२ ॥ सर्वभूतेषुचालक्ष्यं बहिरंतरवस्थितं ॥ योगमायाजवनिकाच्छन्नोमानुषविग्रहः ॥ ६३ ॥



र्यामितयाचसर्वभूतानांबहिरंतरवस्थितमपितैरलक्ष्यं जवनिकानटानांवेषग्रहणस्थानावरणंपटनिर्मितं नटाश्चतत्रप्रविष्टास्तयाछन्नाभवंति तद्वद्योगमाययात्वंछन्नोगुप्तःकृतःसन्अज्ञानदृशांतैरित्यर्थः ॥ ६३ ॥

नलक्ष्यसे रूपधृक्तत्तद्रामादिरूपधृक् शैलूषोनटइव सयदारामादिवेषंकृत्वारामाद्यनुकरणंकरोतितदारामइत्येवगृह्यते नतुपूर्वदृष्टोऽपितद्रूपे णतद्वत् ॥ ६४ ॥ भागवतानांभगवद्भक्तीच्छावतां एवंभूतेरूपेभक्तिरूपोयोगस्तद्वांछयात्वमवतीर्णोऽसि तादृशंत्वांस्त्रीशरीरत्वात्तामसी अहंकथंजानामि अथयोग्यतासत्त्वेपितज्ज्ञानापेक्षामेनास्तीत्याह लोकेइति तवतत्त्वंचिदानंदादिरूपं ॥ ६५ ॥ स्वापेक्ष्यमर्थमाह ममैत दिति मोक्षदर्शनंमोक्षोपायदर्शकंपादयुगुलंतेत्वयादर्शितं अतोऽन्याकांक्षामेनास्तीत्यर्थः ॥ ६६ ॥ तदेवविशिनष्टि अदर्शनमिति भवार्णानां

नलक्ष्यसेऽज्ञानदृशांशैलूषइवरूपधृक् ॥ महाभागवतानांत्वंभक्तियोगविधित्सया ॥ ६४ ॥ अवतीर्णोसिभगवन् कथंजानामितामसी ॥ लोकेजानातुयःकश्चित्तवतत्त्वंरघूत्तम ॥ ६५ ॥ ममैतद्देवरूपंतेसदाभातुहृदालये ॥ राम तेपादयुगुलंदर्शितंमोक्षदर्शनं ॥ ६६ ॥ अदर्शनंभवार्णानांसन्मार्गपरिदर्शनं ॥ धनपुत्रकलत्रादिविभूतिपरिद र्पितः ॥ अकिंचनधनंत्वाद्यनाभिधातुंजनोर्हति ॥ ६७ ॥ निवृत्तगुणमार्गायनिष्किंचनधनायते ॥ ६८ ॥ नमः स्वात्माभिरामायनिर्गुणायगुणात्मने ॥ कालरूपिणमीशानमादिमध्यांतवर्जितं ॥ ६९ ॥

भवार्णवानामित्यर्थः वर्णलोपआर्षः सन्मार्गस्तत्त्वज्ञानोपायः धनादिगर्वगर्वितोजनः अकिंचनानांत्यक्तसर्वविषयाणांधनभूतंदरिद्रस्यधन मिवेच्छाविषयंत्वांअभिधातुंवार्तालापंकर्तुंचनार्हतितथापिस्तौमीतिशेषः ॥ ६७ ॥ निवृत्तोगुणमार्गःप्रवृत्तिमार्गरूपःसंसारःस्वतएवयस्मा त्तस्मै ॥ ६८ ॥ स्वात्मन्येवचिदानंदरूपेऽभिरमतेतस्मैअतएवनिर्गुणाय गुणानांविषयाणामपिविवर्तोपादानत्वात्तदात्मने कालरूपिणंतेनसर्व संहर्तृत्वं ईशानत्वेनजगत्स्रष्टृत्वतत्पालकत्वेउक्ते सर्वस्रष्टृत्वादेवतस्यादिमध्यांतवर्जितत्वं मध्यस्याद्यंतसापेक्षत्वात्तस्याप्यभावः ॥ ६९ ॥

समंचरंतंअंतर्यामितयेत्यर्थः नृविडंबनंमनुष्यव्यवहारानुकरणरूपंअनुकरणमेतदितिकश्चिन्नवेद ॥ ७०॥ समत्वादेवाह नतेइत्यादि परोभिन्नः सर्वरूपत्वात्तवेतिभावः यद्वा दयितद्वेष्याभ्यांपरउदासीनः तथाविधंशत्रुमित्रोदासीनत्वं यथारावणःशत्रुर्विभीषणोमित्रंअन्येउदासीनाइति ॥७१॥ अजस्यसर्वकारणत्वात्स्वकारणहीनस्य अकर्तुःकर्तृत्वादिधर्महीनस्य अपरिणामित्वादितिभावः ईशस्यसन्निधानमात्रेणसर्वनियंतुः तिर्यङ्गरादिषुतिर्यंचोमत्स्यादयःतेषुमनुष्येषुचयज्जन्मकर्मादितदत्यंतविडंबनंअनुकरणंतत्तज्जातेरितिशेषः नतुवास्तवमितिभावः॥७२॥तत्रप्रकृ

समंचरंतंसर्वत्रमन्येत्वांपुरुषंपरं॥ देवतेचेष्टितंकश्चिन्नवेदनृविडंबनं ॥ ७० ॥ नतेस्तिकश्चिद्दयितोद्वेष्योवापर एवच॥ त्वन्मायापिहितात्मानस्त्वांपश्यंतितथाविधं॥ ७१ ॥ अजस्याकर्तुरीशस्यदेवतिर्यङ्नरादिषु॥ जन्मकर्मादिकंयद्यत्तदत्यंतविडंबनं॥ ७२ ॥ त्वामाहुरक्षरंजातंकथाश्रवणसिद्धये ॥ केचित्कोशलराजस्यतपसःफलसिद्धये॥ ७३ ॥ कौसल्ययाप्रार्थ्यमानंजातमाहुःपरेजनाः॥ दुष्टराक्षसभूभारहरणायार्थितोविभुः ॥७४॥ ब्रह्मणा नररूपेणजातोऽयमितिकेचन॥ शृण्वंतिगायंतिचयेकथास्तेरघुनंदन ॥ ७५ ॥ पश्यंतितवपादाब्जंभवार्णवसुतारणं॥ त्वन्मायागुणबद्धाहंव्यतिरिक्तंगुणाश्रयं॥ ७६ ॥

तावतारप्रयोजनमाह त्वामिति अक्षरमपिलोकानांस्वकथाश्रवणजसिद्धिप्राप्तयेजातमाहुः केचित्कोशलराजस्य ॥ ७३ ॥ ७४॥ ब्रह्मणाप्रार्थितोनररूपेणजातइत्यन्वयः आद्यप्रयोजनस्यैवमुख्यत्वंप्रतिपादयितुंतच्छ्रवणादिजांसिद्धिमाह शृण्वंतीत्यादिना ॥ ७५ ॥ पश्यंतीति ते त्वत्पादाब्जंपश्यंतीत्यन्वयः त्वत्पादाब्जदर्शनमेवत्वच्छ्रवणजामुख्यासिद्धिरित्यर्थः त्वत्पादाब्जशब्देनमुख्यंचिदानंदात्मकंत्वत्स्वरूपमेवविवक्षितमित्याह त्वन्मायेति त्वन्मायागुणैःसत्वरजस्तमोभिर्बद्धायेऽहमःअहंकारविशिष्टास्तेभ्योव्यतिरिक्तंतद्दोषास्पृष्टंगुणानामाश्रयंप्रवर्त्तकंयद्रूपंतद्दर्शनमेवतज्जन्यासिद्धिरित्यर्थः ॥ ७६ ॥

अविषयंवाङ्मनोविषयंत्वांस्तोतुंचकथंजानीयांप्रवृत्ताभवेयं तज्ज्ञानंदुर्लभमेवस्तोतुमपिनसामर्थ्यमितिभावः एवंचस्तुतेरशक्यत्वात्केवलंप्रणाममेवकरोमीत्याह नमस्यामीति ॥ ७७ ॥ प्रसन्नःसम्प्रणतानामघस्यपापस्यहर्ता ॥ ७८ ॥ निश्चलांभक्तिंदेहीत्यन्वयः ॥ ७९ ॥ प्राकृतेषु त्वद्भक्तिहीनेषु संसारसक्तेष्वितियावत् ॥ ८०॥ मेमानसंवक्ष्यमाणगुणविशिष्टरूपंस्मरतु पीतवाससंभ्रांतमितिपुंस्त्वमार्षं ॥ ८१ ॥८२ ॥ बदरी

कथंत्वांदेवजानीयांस्तोतुंवाऽविषयंविभुं ॥ नमस्यामिरघुश्रेष्ठंबाणासनशरान्वितं ॥ लक्ष्मणेनसहभ्रात्रासुग्रीवादिभिरन्वितं ॥ ७७ ॥ एवंस्तुतोरघुश्रेष्ठःप्रसन्नःप्रणताघहृत् ॥ उवाचयोगिनींभक्तांकिंतेमनसिकांक्षितं ॥ ॥ ७८ ॥ साप्राहराघवंभक्त्याभक्तिंतेभक्तवत्सल ॥ यत्रकुत्रापिजातायानिश्चलांदेहिमेप्रभो ॥ ७९ ॥ त्वद्भक्तेषु सदासंगोभूयान्मेप्राकृतेषुन ॥ जिह्वामेरामरामेतिभक्त्यावदतुसर्वदा ॥ ८० ॥ मानसंश्यामलंरूपंसीतालक्ष्मणसंयुतं ॥ धनुर्बाणधरंपीतवाससंमुकुटोज्ज्वलं ॥ ८१ ॥ अंगदैर्नूपुरैर्मुक्ताहारैःकौस्तुभकुंडलैः ॥ भांतंस्मरतुमेरामवरंनान्यंवृणेप्रभो ॥ ८२ ॥ श्रीरामउवाच भवत्वेवंमहाभागेगच्छत्वंबदरीवनं ॥ तत्रैवमांस्मरंतीत्वंत्यक्त्वेदंभूतपंचकं ॥ मामेवपरमात्मानमचिरात्प्रतिपद्यसे ॥ ८३ ॥ श्रुत्वारघूत्तमवचोऽमृतसारकल्पंगत्वातदैवबदरीतरुखंडजुष्टं ॥ तीर्थंतदारघुपतिंमनसास्मरंतीत्यक्त्वाकलेवरमवापपरंपदंसा ॥ ८४ ॥ इतिश्रीमदध्यात्म० किष्किंधाकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥

वनंबदरिकाश्रमं इदंभूतपंचकंभूतपंचकात्मकमिदंदेहमित्यर्थः ॥ ८३ ॥ परमात्मानंमांप्रतिपद्यसे वर्तमानसामीप्येलट् अनेनस्वसायुज्यरूपा मुक्तिस्तपःपूर्वकंतत्रदेहत्यागेनदर्शिता तरुखंडंतरुसमूहः ॥ ८४ ॥ इतिश्रीमत्सकल० सेतौकिष्किंधाकांडेषष्ठःसर्गः ॥ ६ ॥

अथतत्रेति विमुह्यंतः सीतालाभाभावादितिशेषः सीतामार्गणेनतत्रप्राप्तक्लेशेनकर्शिताःकृशत्वंप्राप्ताः ॥१॥ मासोगतःसुग्रीवाज्ञप्तकालादधिकःकालोगतइत्यर्थः ॥ २ ॥ राजशासनंमासांतःसीतान्वेषणरूपं ॥ ३ ॥ मिषात्रामकार्याकरणरूपात् ॥ ४ ॥ तदेवाह इदानीमिति ॥ ५ ॥ नन्वेवमकृत्यंत्वद्वधरूपंसुग्रीवःकथंकुर्यात्तत्राह मातृकल्यामिति ज्येष्ठभ्रातृपत्नीत्वात्तस्यकार्यविचारोनेतिभावः एषोक्तिर्बालभावेनमृते

अथतत्रसमासीनावृक्षखंडेषुवानराः॥ चिंतयंतोविमुह्यंतःसीतामार्गणकर्शिताः ॥१॥ तत्रोवाचांगदःकांश्चिद्वानरान्वानरर्षभः॥ भ्रमतांगह्वरेऽस्माकंमासोनूनंगतोऽभवत् ॥ २ ॥ सीतानाधिगतास्माभिर्नकृतंराजशासनं॥ यदिगच्छामकिष्किंधांसुग्रीवोऽस्मान्हनिष्यति॥ ३॥ विशेषतःशत्रुसुतंमांमिषान्निहनिष्यति॥ मयितस्य कुतःप्रीतिरहंरामेणरक्षितः॥ ४॥ इदानींरामकार्यमेनकृतंतन्मिषंभवेत्॥ तस्यमद्धननेनूनंसुग्रीवस्यदुरात्मनः ॥५॥ मातृकल्यांभ्रातृभार्यांपापात्मानुभवत्यसौ॥ नगच्छेयमतःपार्श्वंतस्यवानरपुंगवाः॥६॥ त्यक्ष्यामिजीवितंचात्रयेनकेनापिमृत्युना॥ इत्यश्रुनयनंकेचिद्दृष्ट्वावानरपुंगवाः ॥ ७ ॥ व्यथिताःसाश्रुनयनायुवराजमथाब्रुवन्॥ ८॥ किमर्थंतवशोकोत्रवयंतेप्राणरक्षकाः॥ भवामोनिवसामोऽत्रगुहायांभयवर्जिताः ॥ ९ ॥ सर्वसौभाग्यसहितंपुरंदेवपुरोपमं ॥ शनैःपरस्परंवाक्यंवदतांमारुतात्मजः ॥ १० ॥ श्रुत्वांगदंसमालिंग्यप्रोवाचनयकोविदः॥ विचार्यतेकिमर्थंतेदुर्विचारोनयुज्यते ॥ ११ ॥

भर्तरित्रैवर्णिकव्यतिरिक्तस्त्रियाअन्योपगमस्यादूषणात् ॥ ६ ॥ येनकेनापिउद्बंधनादिप्रकारेण ॥ ७॥ ८॥ वयंतेप्राणरक्षकाभवामः तदुपायमाहुः अत्रगुहायांवसामइति ॥ ९ ॥ शनैःपरस्परमेवंवदतांवाक्यंश्रुत्वाइत्यन्वयः ॥ १० ॥ किमर्थंविचार्यतेसुग्रीवतोवधादिकमिति शेषः अयमितरवानरोक्तोदुर्विचारोगुहावासरूपस्तुसर्वथानयुज्यते ॥ ११॥

तत्रसुग्रीवतोभयंवारयति राज्ञइति तारापुत्रइत्यनेनतारायामतिप्रीतेस्त्वयिनतथाव्यवहारसंभावनापीतिभावः रामादपिनभयमित्याह रामस्येति ॥ १२ ॥ सीतालाभोऽपिभाव्येवेत्याह अहमिति अतोहेवत्सान्यंविचारंनविचारय ॥ १३ ॥ वानरीयांगुहावासोक्तिंदूषयति गुहेति निर्भेद्योऽभेद्यः तदेतदयुक्तमितिशेषः यतोजगत्त्रयेरामबाणानामभेद्यंकिंनकिमपीत्यर्थः तेनात्रवासेमहद्रामभयमितिभावः ॥ १४ ॥ यदेतैर्वान

राज्ञोऽत्यंतप्रियस्त्वंहितारापुत्रोतिवल्लभः॥ रामस्यलक्ष्मणात्प्रीतिस्त्वयिनित्यंप्रवर्धते ॥ १२ ॥ अतोनराघवाद्भीतिस्तवराज्ञोविशेषतः॥ अहंतवहितेसक्तोवत्सनान्यंविचारय॥ १३ ॥ गुहावासश्चनिर्भेद्यइत्युक्तंवानरैस्तुयत्॥ तदेतद्रामबाणानामभेद्यंकिंजगत्त्रये॥ १४॥ येत्वांदुर्बोधयंत्येतेवानरावानरर्षभ ॥ पुत्रदारादिकंत्यक्त्वाकथंस्थास्यंतितेत्वया॥ १५॥ अन्यद्गुह्यतमंवक्ष्येरहस्यंशृणुमेसुत ॥ रामोनमानुषोदेवःसाक्षान्नारायणोव्ययः॥ ॥ १६॥ सीताभगवतीमायाजनसंमोहकारिणी॥ लक्ष्मणोभुवनाधारःसाक्षाच्छेषःफणीश्वरः॥ १७॥ ब्रह्मणाप्रार्थिताःसर्वेरक्षोगणविनाशने॥ मायामानुषभावेनजातालोकैकरक्षकाः ॥ १८ ॥ वयंचपार्षदाःसर्वेविष्णोर्वैकुंठवासिनः॥ मनुष्यभावमापन्नेस्वेच्छयापरमात्मनि॥ १९॥ वयंवानररूपेणजातास्तस्यैवमायया॥ वयंतुतपसापूर्वमाराध्यजगतांपतिं॥ २० ॥ तेनैवानुगृहीतास्मःपार्षदत्वमुपागताः ॥ इदानीमपितस्यैवसेवांकृत्वैवमायया॥ २१ ॥ पुनर्वैकुंठमासाद्यसुखंस्थास्यामहेवयं॥ इत्यंगदमथाश्वास्यगताविंध्यंमहाचलं॥ २२॥

रैरुक्तंवयंतेप्राणरक्षकाइति तदपिमिथ्येत्याह येत्वामिति ॥ १५ ॥ १६ ॥ १७ ॥ रक्षोगणविनाशनेतन्निमित्तंप्रार्थिताइत्यन्वयः मायामानुषभावेनेति वतेषांवास्तवंमनुष्यत्वंकिंतुमाययैवेतिभावः ॥१८॥१९॥ नन्वेवंवानररूपमस्माकंकिमर्थंतत्राह तस्यैवमाययेति ॥२०॥ २१॥२२॥

दक्षिणांबुधेस्तीरेमहेंद्राख्यगिरेःपादंप्रत्यंतपर्वतमाययुरित्यन्वयः ॥ २३ ॥ भयवर्धनंदर्शनमात्रेणभयवृद्धिकरं किंकुर्मइतिवादिनःवदनशीलाःसंतःउदधेस्तीरेनिषेदुरथमंत्रयामासुरित्यन्वयः ॥ २४ ॥ २५ ॥ गुहांतरेगुहामध्ये वाशब्दावप्यर्थौ ॥ २६ ॥ सुग्रीववधतःसुग्रीवात्प्राप्स्यमानवधतः प्रायोपवेशनंतत्प्राप्त्युपायाभावेऽनशनेनमरणसंकल्पः ॥ २७॥ उपाविवेशुरित्यत्रगुणआर्षः ॥२८॥२९॥ बहुःविपुलोबहुसंख्यश्च

विचिन्वंतोथशनकैर्जानकींदक्षिणांबुधेः ॥ तीरेमहेंद्राख्यगिरेःपवित्रंपादमाययुः ॥ २३॥ दृष्ट्वासमुद्रंदुष्पारमगाधंभयवर्धनं ॥ वानराभयसंत्रस्ताःकिंकुर्मइतिवादिनः ॥ २४॥ निषेदुरुदधेस्तीरेसर्वेचिंतासमन्विताः ॥ मंत्रयामासुरन्योन्यमंगदाद्यामहाबलाः ॥ २५॥ भ्रमतामेवनोमासोगतोत्रैवगुहांतरे ॥ नदृष्टोरावणोवाद्यसीतावाजनकात्मजा ॥ २६॥ सुग्रीवस्तीक्ष्णदंडोस्मान्निहंत्येवनसंशयः॥ सुग्रीववधतोऽस्माकंश्रेयःप्रायोपवेशनं॥२७॥ इतिनिश्चित्यतत्रैवदर्भानास्तीर्यसर्वतः॥ उपाविवेशुस्तेसर्वेमरणेकृतनिश्चयाः॥ २८॥ एतस्मिन्नंतरेतत्रमहेंद्राद्रिगुहांतरात् ॥ निर्गत्यशनकैरागाद्गृध्रःपर्वतसन्निभः॥ २९ ॥ दृष्ट्वाप्रायोपवेशेनस्थितान्वानरपुंगवान् ॥ उवाचशनकैर्गृध्रःप्राप्तोभक्ष्योद्यमेबहुः॥ ३० ॥ एकैकशःक्रमात्सर्वान्भक्षयामिदिनेदिने ॥ श्रुत्वातद्गृध्रवचनंवानराभीतमानसाः॥ ३१ ॥ भक्षयिष्यतिनःसर्वानसौगृध्रोनसंशयः ॥ रामकार्यंचनास्माभिःकृतंकिंचिद्धरीश्वराः॥ ॥ ३२ ॥ सुग्रीवस्यापिचहितंनकृतंस्वात्मनामपि ॥ वृथानेनवधंप्राप्तागच्छामोयमसादनं ॥ ३३ ॥

॥३०॥ ३१॥ किंचित्किंचिदपीत्यर्थः हरीश्वराइत्यंगदहनूमदादीन्संबोध्येतरवानरवाक्यं ॥३२॥ सुग्रीवहितंजानकीसमाचारोक्त्यारामसंतोषरूपं आत्मनोहितं तथासुग्रीवसंतोषरूपं अनेनगृध्रेणवृथावधंनाशंप्राप्ताःप्रापिताः यमसादनंयमगृहं गच्छामः वर्त्तमानसामीप्येलट् ॥ ३३ ॥

योगिनामपिदुरावापमित्यत्वन्वयः दुराङ्वपूर्वादामोतेःखलु् षष्ठयार्षीशेषेवा ॥ ३४॥ कर्णपीयूषसन्निभंकर्णयोरमृततुल्यमित्यर्थः जटायुरि
तिनामेत्यनेनान्वयः ॥ ३५ ॥ यूयंकेतदुच्यतामित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८॥ लक्ष्मणेचनिर्गतइत्यनुकर्षः रामरामेतिक्रोशंतीहृतेत्यन्वयः श्रु

अहोजटायुर्धर्मात्मारामस्यार्थेमृतःसुधीः॥ मोक्षंप्रापदुरावापंयोगिनामप्यरिंदमः ॥ ३४ ॥ संपातिस्तुतदावा
क्यंश्रुत्वावानरभाषितं॥ केवायूयंममभ्रातुःकर्णपीयूषसंनिभं ॥ ३५ ॥ जटायुरितिनामाद्यव्याहरंतःपरस्परं ॥
उच्यतांवोभयंमाभून्मत्तःप्लवगसत्तमाः॥ ३६॥ तमुवाचांगदःश्रीमानुत्थितोगृध्रसन्निधौ॥ रामोदाशरथिःश्री
मान्लक्ष्मणेनसमन्वितः ॥ ३७ ॥ सीतयाभार्ययासार्धंविचचारमहावने ॥ तस्यसीताहृतासाध्वीरावणेनदुरा
त्मना॥ ३८॥ मृगयांनिर्गतेरामेलक्ष्मणेचहृताबलात्॥ रामरामेतिक्रोशंतीश्रुत्वागृध्रःप्रतापवान्॥ ३९॥ जटा
युर्नामपक्षींद्रोयुद्धंकृत्वासुदारुणं ॥ रावणेनहतोवीरोराघवार्थेमहाबलः ॥ ४० ॥ रामेणदग्धोरामस्यसायुज्य
मगमत्क्षणात्॥ रामःसुग्रीवमासाद्यसख्यंकृत्वाग्निसाक्षिकं॥ ४१ ॥ सुग्रीवचोदितोहत्वावालिनंसुदुरासदं॥रा
ज्यंददौवानराणांसुग्रीवायमहाबलः॥ ४२॥ सुग्रीवःप्रेषयामाससीतायाःपरिमार्गणे॥ अस्मान्वानरवृंदान्वैम
हासत्वान्महाबलः॥ ४३॥ मासादर्वाङ्निवर्तध्वंनोचेत्प्राणान्हरामिवः॥ इत्याज्ञयाभ्रमंतोस्मिन्वनेगह्वरमध्यगाः
॥ ४४॥ गतोमासोनजानीमःसीतांवारावणंचवा॥ मर्तुंप्रायोपविष्टाःस्मस्तीरेलवणवारिधेः॥ ४५ ॥ यदिजा
नासिहेपक्षिन्सीतांकथयनःशुभां॥ अंगदस्यवचःश्रुत्वासंपातिर्हृष्टमानसः॥ ४६॥

त्वातत्क्रोशनंश्रुत्वेत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ परिमार्गणेतन्निमित्तं विषयसप्तमीयं वानरवृंदातनूयुक्तानस्मान् हनूमदाद्यपेक्षयाब
हुवचनं ॥ ४३ ॥ गह्वरंगुहा भ्रमंतइत्यस्यस्थिताइतिशेषः ॥ ४४ ॥ गतोमासइत्यस्यैवंभ्रमतामित्यादिः ॥ ४५ ॥४६ ॥

॥ ४७ ॥ नयध्वंमांजलांतिकमित्युक्त्याम्गपक्ष्यादीनामपियथाज्ञानंधर्माधिकारोस्तीतिसूचयति ॥ ४८ ॥ तत्सलिलेसमुद्रस्यजले ॥ ४९ ॥ हरीश्वरैर्नीतःस्वस्थानंप्रापितइत्यर्थः ॥ ५० ॥ सुरक्षितास्तीतिशेषः ॥ ५१ ॥ समुद्रमध्येइत्यनेनचतुर्दिक्षुसमुद्रपरिखमेवतद्वीपमिति



उवाचमत्प्रियोभ्राताजटायुःप्लवगेश्वराः॥बहुवर्षसहस्रांतेभ्रातृवार्ताश्रुतामया॥४७॥वाक्साहाय्यंकरिष्येहंभवतांप्लवगेश्वराः॥भ्रातुःसलिलदानायनयध्वंमांजलांतिकं॥४८॥पश्चात्सर्वंशुभंवक्ष्येभवतांकार्यसिद्धये॥तथेतिनिन्युस्तेतीरंसमुद्रस्यविहंगमं॥सोपितत्सलिलेस्नात्वाभ्रातुर्दत्वाजलांजलिं॥४९॥पुनःस्वस्थानमासाद्यस्थितोनीतोहरीश्वरैः॥संपातिःकथयामासवानरान्परिहर्षयन्॥५०॥लंकानामनगर्यास्तेत्रिकूटगिरिमूर्धनि॥तत्राशोकवनेसीताराक्षसीभिःसुरक्षिता॥५१॥समुद्रमध्येसालंकाशतयोजनदूरतः॥दृश्यतेमेनसंदेहःसीताचपरिदृश्यते॥५२॥गृध्रत्वाद्दूरदृष्टिर्मेनात्रसंशयितुंक्षमं॥शतयोजनविस्तीर्णंसमुद्रंयस्तुलंघयेत्॥५३॥सएवजानकींदृष्ट्वापुनरायास्यतिध्रुवं॥अहमेवदुरात्मानंरावणंहंतुमुत्सहे॥५४॥भ्रातृहंतारमेकाकीकिंतुपक्षविवर्जितः॥यतध्वमतियत्नेनलंघितुंसरितांपतिं॥ततोहंतारघुश्रेष्ठोरावणंराक्षसाधिपं॥५५॥उल्लंघ्यसिंधुंशतयोजनायतंलंकांप्रविश्याथविदेहकन्यकां॥दृष्ट्वासमाभाष्यचवारिधिंपुनस्तर्तुंसमर्थःकतमोविचार्यतां॥५६॥

इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेसप्तमःसर्गः॥ ७ ॥ ॥ ७ ॥ अथतेकौतुकाविष्टाःसंपातिंसर्ववानराः॥पप्रच्छुर्भगवन्ब्रूहिस्वमुदंतंत्वमादितः॥ १ ॥

सूचितं लंकामेमयादृश्यतेसीताचदृश्यते ॥ ५२ ॥ तत्रहेतुमाह गृध्रत्वादिति नात्रसंशयितुंक्षमं अत्रसंशयोनकार्यइत्यर्थः ॥ ५३ ॥ ५४ ॥ पक्षविवर्जितइत्यनेनबलातिशयेपिगमनशक्तिहीनत्वंसूचितं ॥ ५५ ॥ ५६ ॥ इतिश्रीमत्सकलराज० किष्किंधाकांडेसप्तमःसर्गः॥७॥ १ ॥

पक्षहीनत्वमस्यकुतइतिवानराणांजिज्ञासांज्ञात्वातदुत्तरमाह संपातिरिति पुराकृतंस्ववृत्तांतं स्वशब्दआत्मात्मीयोभयवाची स्वस्यस्वभा
तुश्चवृत्तांतं तमेवाह अहमित्यादि रूढयौवनौयौवनमध्यंप्राप्तौ ॥ २ ॥ अतएवबलदर्पितौ ॥ ३ ॥ जटायुःप्रतापितः कविष्ठत्वात्तन्मोहतस्तंप
रित्रातुंपक्षैराच्छाद्यस्थितोऽहंसूर्यरश्मिभिर्दग्धपक्षोऽत्रपतितोदूरपतनान्मूर्च्छितआसमितिशेषः ॥ ४ ॥ ५ ॥ दिनत्रयात्तदुत्तरंपुनःप्राणसहि

संपातिःकथयामासस्ववृत्तांतंपुराकृतं ॥ अहंपुराजटायुश्चभ्रातरौरूढयौवनौ ॥ २ ॥ बलेनदर्पितावावांबलजि
ज्ञासयाखगौ ॥ सूर्यमंडलपर्यंतंगंतुमुत्पतितौमदात् ॥ ३ ॥ बहुयोजनसाहस्रंगतौतत्रप्रतापितः ॥ जटायुस्तंपरि
त्रातुंपक्षैराच्छाद्यमोहतः ॥ ४ ॥ स्थितोऽहंरश्मिभिर्दग्धपक्षोऽस्मिन्विंध्यमूर्धनि ॥ पतितोदूरपतनान्मूर्च्छितोऽ
हंकपीश्वराः ॥५॥ दिनत्रयात्पुनःप्राणसहितोदग्धपक्षकः ॥ देशंवागिरिकूटान्वानजानेभ्रांतमानसः ॥६॥ शनै
रुन्मील्यनयनेदृष्ट्वातत्राश्रमंशुभं ॥ शनैःशनैराश्रमस्यसमीपंगतवानहं ॥ ७ ॥ चंद्रमानाममुनिराट्दृष्ट्वामांवि
स्मितोऽवदत् ॥ संपातेकिमिदंतेद्यविरूपंकेनवाकृतं ॥ ८ ॥ जानामित्वामहंपूर्वमत्यंतंबलवानसि ॥ दग्धौकिम
र्थंतेपक्षौकथ्यतांयदिमन्यसे ॥ ९ ॥ ततःस्वचेष्टितंसर्वंकथयित्वातिदुःखितः ॥ अब्रुवंमुनिशार्दूलंदत्येऽहंदाववं
न्हिना ॥ १० ॥ कथंधारयितुंशक्तोविपक्षोजीवितंप्रभो ॥ इत्युक्तोथमुनिर्वीक्ष्यमांदयार्द्रविलोचनः ॥ ११ ॥ शृ
णुवत्सवचोमेऽद्यश्रुत्वाकुरुयथेप्सितं ॥ देहमूलमिदंदुःखंदेहःकर्मसमुद्भवः ॥ १२ ॥

तोदग्धपक्षकोयतोऽतोभ्रांतमानसोदेशादीन्नजाने ॥ ६ ॥ ७ ॥ अद्यतेइदंरूपंकिकेनवापूर्वंदृष्टंतदुत्तमंरूपंविरूपंकृतं ॥ ८ ॥ पूर्वंबलवानसी
तिवर्त्तमानसामीप्येलट् ॥ ९ ॥ दाववन्हिना तत्तुल्यचिंतयेत्यर्थः ॥ १० ॥ चिंतामभिनयति कथमिति ॥ ११ ॥ तत्रदेहस्यतन्मूलस्यचतत्त्व
ज्ञानंविनाछेत्तुमशक्यतयाभोगैकनाश्यंदुःखमितिवक्तुमुपक्रमते देहेति ॥ १२ ॥

ननुकोसावहंपदार्थोयद्बुद्धिर्देहेतत्राह अहंकारइति अविद्यायाजडत्वात्तत्संभवोसावपिजडइतिभावः अविद्यासंभवत्वेऽपिसंभवकालापरि
च्छेदादनादिरित्युक्तः ॥ १३ ॥ तप्तायःपिंडोयथावन्हिनायुक्तस्ततःपृथक्कर्तुमशक्यश्चतथाऽयमहंकारश्चितइत्यर्थः तेनचित्तादात्म्यापन्ना
हंकारेणचेतनवान्चैतन्यवानिव ॥ १४ ॥ एवमात्मनश्चेतनस्यअहंकृतेर्बलात्तत्संबंधबलात्अहंदेहइतिबुद्धिः तत्कृतएषसंसारःसुखा
दिसाधकःकर्मद्वारेतिबोध्यं ॥ १५ ॥ एवंनिर्विकारस्यापिआत्मनोऽहंकारादिभिर्मिथ्यातादात्म्याद्देहोहं यद्वाततोऽतिरिक्तोऽपिकर्मकर्त्ता

कर्मप्रवर्त्ततेदेहेऽहंबुध्यापुरुषस्यहि ॥ अहंकारस्त्वनादिःस्यादविद्यासंभवोजडः॥ १३ ॥ चिच्छाययासदायुक्त
स्तप्तायःपिंडवत्सदा॥तेनदेहस्यतादात्म्याद्देहश्चेतनवान्भवेत्॥ १४॥देहोऽहमितिबुद्धिःस्यादात्मनोऽहंकृतेर्बलात्॥
तन्मूलएषसंसारःसुखदुःखादिसाधकः॥ १५ ॥ आत्मनोनिर्विकारस्यमिथ्यातादात्म्यतःसदा ॥ देहोऽहंकर्मक
र्त्ताहमितिसंकल्प्यसर्वदा॥ १६ ॥ जीवःकरोतिकर्माणितत्फलैर्बध्यतेऽवशः ॥ ऊर्ध्वाधोभ्रमतेनित्यंपापपुण्या
त्मकःस्वयं॥ १७॥ कृतंमयाधिकंपुण्यंयज्ञदानादिनिश्चितं॥ स्वर्गंगत्वासुखंभोक्ष्येइतिसंकल्पवान्भवेत्॥१८॥
तथैवाध्यासतस्तत्रचिरंभुक्त्वासुखंमहत् ॥क्षीणपुण्यःपतत्यर्वागनिच्छन्कर्मचोदितः॥ १९॥

हमितिसंकल्पपूर्वकंप्रायोदेहोऽहमितिबुद्धिरेवसर्वस्य कस्यचित्प्राग्भवपुण्यवशात्तद्बुद्धिविलयेऽपिकर्मकर्त्तेतिबुद्धिरस्त्येवेतिभावः ॥ १६ ॥
कर्माणिकरोति अहंकरोमीतिसंकल्पादेवावशस्तत्फलैःसुखादिभिर्बध्यते अनेनयोनाहंकर्त्तेतिभावयतितस्यनैवबंधइतिसूचितं तद्बंधप्रकार
माह ऊर्ध्वेति पुण्येनोर्ध्वंपापेनाधोभ्रमतेइत्यर्थः ॥१७॥ तदेवविवृणोति कृतमिति इतिसंकल्पवान्भवेत् स्वर्गतःसुखभोगीचेतिशेषः ॥१८॥
तथैवाध्यासतःअहंबहुपुण्यकर्तेत्यध्यासेन तत्रस्वर्गे अनिच्छन्नपिपततीतिअवशइत्युक्तस्यविवरणं ॥ १९ ॥

ततःपातपूर्वकंयेनप्रकारेणगर्भेवासस्तदुपपादयति पतित्वेति इंदोर्मंडलेपतित्वाततोनीहारैस्तत्किरणद्वाराभूसंबद्धैरेवसंबद्धोभूत्वाभूमौपतति ततोव्रीह्यादौअनुशयित्वेनस्थित्वाचतुर्विधंभोज्यंभक्ष्यभोज्यलेह्यचोष्यरूपं तदन्यतमद्भूत्वापुरुषैर्भुज्यते ततोभोजनानंतरंरेतोभूत्वास्थितइतिशेषः ततस्तेनपुंसास्त्रीयोनौऋतुकालेसिंचितःसिक्तः आर्षत्वात्साधुः ॥ २० ॥ २१ ॥ सिक्तःसजीवएकेनदिनेनजरायुपरिवेष्टितंयोनिरक्तेन संयुक्तंकललंकललाख्यपरिणामवद्भूत्वारूढत्वंदाढर्यमाप्नुयात् जरायुर्गर्भवेष्टनं ॥ २२ ॥ बुद्बुदाकारतांतदाकारपरिणामविशेषं एवमग्रेऽ

पतित्वामंडलेचेंदोस्ततोनीहारसंयुतः ॥ भूमौपतित्वाव्रीह्यादौतत्रस्थित्वाचिरंपुनः ॥ २० ॥ भूत्वाचतुर्विधंभोज्यंपुरुषैर्भुज्यतेततः ॥ रेतोभूत्वापुनस्तेनऋतौस्त्रीयोनिसिंचितः ॥ २१ ॥ योनिरक्तेनसंयुक्तंजरायुपरिवेष्टितं ॥ दिनेनैकेनकललंभूत्वारूढत्वमाप्नुयात् ॥ २२ ॥ तत्पुनःपंचरात्रेणबुद्बुदाकारतामियात् ॥ सप्तरात्रेणतदपिमांसपेशित्वमाप्नुयात् ॥ २३ ॥ पक्षमात्रेणसापेशीरुधिरेणपरिप्लुता ॥ तस्याएवांकुरोत्पत्तिःपंचविंशतिरात्रिषु ॥ २४ ॥ ग्रीवाशिरश्चस्कंधश्चपृष्ठवंशस्तथोदरं ॥ पंचधांगानिचैकैकंजायंतेमासतःक्रमात् ॥ २५ ॥ पाणिपादौतथापार्श्वःकटिर्जानुतथैवच ॥ मासद्वयात्प्रजायंतेक्रमेणैवनचान्यथा ॥ २६ ॥ त्रिभिर्मासैःप्रजायंतेअंगानांसंधयःक्रमात् ॥ सर्वांगुल्यःप्रजायंतेक्रमान्मासचतुष्टये ॥ २७ ॥ नासाकर्णौचनेत्रेचजायंतेपंचमासतः ॥ दंतपंक्तिर्नखागुह्यंपंचमेजायतेतथा ॥ २८ ॥ अर्वाक्षण्मासतश्छिद्रंकर्णयोर्भवतिस्फुटं ॥ पायुर्मेढ्रमुपस्थंचनाभिश्चापिभवेन्नृणां ॥ २९ ॥

पि ॥ २३ ॥ रुधिरेणपरिप्लुताभवतीतिशेषः तस्याएवपेशीरूपपरिणामस्यैव पंचविंशतिरात्रिषुगतास्वितिशेषः समासांताभावोनित्यत्वात् ॥ २४ ॥ अंकुरानेवाह ग्रीवेत्यादि पंचधांगानिपंचधांगांकुराःमासतःमासेनेत्यर्थः क्रमात्प्रथमंग्रीवेत्यादिक्रमेण ॥ २५ ॥ पाणीत्याद्यप्येवमेव ॥ २६ ॥ २७ ॥ पंचमासतःपंचमेमासि दंताद्यपिपंचमेएवमासि ॥ २८ ॥ २९ ॥

विभक्तावयवत्वंपृथक्ज्ञानविषयावयवत्वंएतद्वक्ष्यमाणंचगर्भोपनिषदिवैद्यकसंहितासुशारीरकेचस्फुटं विस्तरभयात्तन्नेहलिख्यते ॥ ३० ॥ एवंएवंरीत्यावर्धतइत्यन्वयः चैतन्यंप्राप्नोतिनदभिव्यक्तिंप्राप्नोतीत्यर्थः ॥३१॥ नाभीति नाभिसूत्रंनालाख्यंमातूरसनाड्यासंबद्धंतदीयाल्परंध्रेणगर्भजठरंप्राप्तान्मातृभुक्तान्नसारतोगर्भगःपिंडोवर्धते अल्परंध्रप्राप्ताल्पाहारत्वेपिस्वकर्मतोनम्रियेतनम्रियतइत्यर्थः ॥३२ ॥ सर्वाणिजन्मानितत्कृतानिकर्माणिचस्मृत्वाजठरानलयोगादतिसंतप्तोवचनमाह ॥ ३३ ॥ नानेति पुत्रादिसंबंधमनुभूतवानितिसंबंधः ॥ ३४ ॥ तथाकुटुंबभ

सप्तमेमासिरोमाणिशिरःकेशास्तथैवच ॥ विभक्तावयवत्वंचसर्वंसंपद्यतेऽष्टमे ॥३०॥ जठरेवर्धतेगर्भःस्त्रियाएवंविहंगम ॥ पंचमेमासिचैतन्यंजीवःप्राप्नोतिसर्वशः ॥ ३१ ॥ नाभिसूत्राल्परंध्रेणमातृभुक्तान्नसारतः ॥ वर्धतेगर्भगःपिंडोनम्रियेतस्वकर्मतः ॥ ३२ ॥ स्मृत्वासर्वाणिजन्मानिपूर्वकर्माणिसर्वशः ॥ जठरानलतप्तोऽयमिदंवचनमब्रवीत् ॥ ३३ ॥ नानायोनिसहस्रेषुजायमानोऽनुभूतवान् ॥ पुत्रदारादिसंबंधंकोटिशःपशुबांधवान् ॥ ३४ ॥ कुटुंबभरणासक्त्यान्यायान्यायैर्धनार्जनं ॥ कृतंनाकरवंविष्णुचिंतांस्वप्नेऽपिदुर्भगः ॥ ३५ ॥ इदानींतत्फलंभुंजेगर्भदुःखंमहत्तरं ॥ अशाश्वतेशाश्वतवद्देहेतृष्णासमन्वितः ॥ ३६ ॥ अकार्याण्येवकृतवान्नकृतंहितमात्मनः ॥ इत्येवंबहुधादुःखमनुभूयस्वकर्मतः ॥ ३७ ॥ कदानिष्क्रमणंमेस्याद्गर्भान्निरयसन्निभात् ॥ इतऊर्ध्वंनित्यमहंविष्णुमेवानुपूजये ॥ ३८ ॥ इत्यादिचिंतयन्जीवोयोनियंत्रप्रपीडितः ॥ जायमानोऽतिदुःखेननरकात्पातकीयथा ॥ ३९ ॥

रणासक्त्यातन्मात्रासक्त्या नतुधर्मासक्त्यान्यायान्यायैर्धर्म्याधर्म्यैरुपायैर्धनार्जनंकृतंमयेतिशेषः तथाविष्णुचिंतांस्वप्नेपिनाकरवमहंनकृतवानित्यर्थः ॥ ३५ ॥ तत्फलभूतंगर्भदुःखंभुंजेइत्यन्वयः अशाश्वतेतत्प्रायःपतितजलबिंदुवन्नश्वरेदेहे शाश्वतवस्तुनीवममेदंस्यादितीच्छायुक्तः ॥ ३६ ॥ नकृतमित्यस्यमयेतिशेषः अनुभूयेत्यस्यइदानींगर्भदुःखंभुंजेइत्यनेनान्वयः ॥ ३७ ॥ ३८ ॥ योनियंत्रप्रपीडितःजन्मकाले अतएवातिदुःखेनजायमानः बहिःपततीतिशेषः नरकात्पातकीत्येकोदृष्टांतः ॥ ३९ ॥

तथापूतिव्रणाद्दुर्गंधिव्रणान्निपतितोऽपरः कृमिरिवएषः पततीतिशेषः ततोबाल्यादिदुःखानिभुनक्ति एवंसर्वेजंतवोविभुंजतेनकश्चिदेवेत्यर्थः ॥ ४० ॥यानिसर्वाणिविदितानितानिमयावर्णितानि यानितुयौवनादिषुदुःखानिसर्वतःसर्वैःप्राप्याणिसर्वत्रसर्वेषुजंतुषुविदितानिसर्वैर्ज्ञातानित्व याचानुभूतानिसर्वविदितत्वादेवमयानवर्णितानि॥ ४१ ॥एवमिति इत्यस्मादित्याकारादभ्यासाज्जातादभिनिवेशतः अहंकर्तेत्याद्याकारात् नि रयस्वर्गादिकंगर्भवासादिदुःखानिचभवंतीत्यन्वयः ॥ ४२ ॥ देहद्वयात् स्थूलसूक्ष्मरूपात्पागुक्तादन्यं तर्हिप्रकृतिरेवस्यानेत्याह प्रकृतेःपरंज्ञात्वादे

पूतिव्रणान्निपतितःकृमिरेषइवापरः॥ ततोबाल्यादिदुःखानिसर्वेएवंविभुंजते ॥ ४० ॥ त्वयाचैवानुभूतानिसर्व त्रविदितानिच ॥ नवर्णितानिमेगृध्रयौवनादिषुसर्वतः ॥ ४१ ॥ एवंदेहोऽहमित्यस्मादभ्यासान्निरयादिकं ॥ गर्भ वासादिदुःखानिभवंत्यभिनिवेशतः ॥ ४२ ॥ तस्माद्देहद्वयादन्यमात्मानंप्रकृतेःपरं ॥ ज्ञात्वादेहादिममतांत्य क्त्वात्मज्ञानवान्भवेत् ॥ ४३ ॥ जाग्रदादिविनिर्मुक्तंसत्यज्ञानादिलक्षणम् ॥ शुद्धंबुद्धंसदाशांतमात्मानमवधा रयेत् ॥ ४४ ॥ चिदात्मनिपरिज्ञातेनष्टेमोहेऽज्ञसंभवे ॥ देहःपततुवारब्धकर्मवेगेनतिष्ठतु ॥ ४५ ॥ योगिनोनहि दुःखंवासुखंवाज्ञानसंभवं ॥ तस्माद्देहेनसहितोयावत्प्रारब्धसंक्षयः ॥ ४६ ॥ तावत्तिष्ठसुखेनत्वंधृतकंचुकसर्प वत् ॥ अन्यद्वक्ष्यामितेपक्षिन्शृणुमेपरमंहितं ॥ ४७ ॥

हादिषुममतांअहंममेतिबुद्धिविषयतांत्यक्त्वा आत्मज्ञानवान् आत्मैवेदंसर्वमितिज्ञानवान्भवेत् ॥ ४३ ॥ ध्येयात्मस्वरूपमाह जाग्रदादीति जाग्रत्स्वप्नसुषुप्त्याख्यावस्थात्रयरहितं शुद्धंमायादोषालिप्तं बुद्धंबोधस्वरूपं॥ ४४॥ अज्ञानविषयातज्जन्येमोहेदेहादिष्वहंममताख्येनष्टेनाशंप्राप्ते देहस्थितौनाशेवा ॥ ४५ ॥ योगिनआत्मज्ञस्याज्ञानजेसुखदुःखेनभवतः यावत्प्रारब्धक्षयोभवतितावद्देहेनसहितःसुखंतिष्ठ यथाकंचुकवा न्सर्पोयावत्तत्त्यागकालंतत्धत्तेऽनंतरंत्यजतितद्वत् ॥ ४६ ॥ ४७ ॥

॥४८॥४९॥परिमार्गणेतन्निमित्तं॥५०॥तीरमागमिष्यंतितैः सहकारणवशात् फलमिहकारणंपक्षोत्पत्तिरूपफलायतैः समागमोभविष्यति॥५१॥ तदेवाह तदैवेति तवपक्षौद्वौनिश्चयमुत्पत्स्येतेइत्यर्थः ॥ ५२ ॥ ५३ ॥ निश्चयंद्रक्ष्यथ तन्मुन्युक्तपक्षभवनिश्चयेनतदुक्तरावणवधोप्यवश्यंभावी सचनसीतादर्शनंविनेतितदप्यवश्यंभविष्यतीतिनिश्चयः॥५४॥यन्नामस्मरणमात्रात् यःकश्चिद्दुर्जनोऽपिइयानितिपरिच्छेदरहितंसंसारसमुद्रंतीर्त्वाविष्णोःपदंगच्छति एवंदृश्यमानप्रकारेणत्रिजगतांस्थितिकारिणःसर्वजगदुत्पत्तिस्थितिलयकर्तुः स्थितिपदेनेतरदप्युपलक्ष्यते रामस्यभ

त्रेतायुगेदाशरथिर्भूत्वानारायणोऽव्ययः ॥ रावणस्यवधार्थायदंडकानागमिष्यति ॥ ४८ ॥ सीतयाभार्यया सार्धंलक्ष्मणेनसमन्वितः ॥ तत्राश्रमेजनकजांभ्रातृभ्यांरहितेवने ॥ ४९ ॥ रावणश्चोरवन्नीत्वालंकायांस्थापयिष्यति॥तस्याःसुग्रीवनिर्देशाद्वानराःपरिमार्गणे ॥ ५० ॥ आगमिष्यंतिजलधेस्तीरंतत्रसमागमः॥त्वयातैःकारणवशाद्भविष्यतिनसंशयः॥ ५१ ॥ तदासीतास्थितिंतेभ्यःकथयस्वयथार्थतः ॥ तदैवतवपक्षौद्वावुत्पत्स्येतेपुनर्नवौ ॥ ५२ ॥ संपातिरुवाच बोधयामासमांचंद्रनामामुनिकुलेश्वरः ॥ पश्यंतुपक्षौमेजातौनूतनावतिकोमलौ ॥ ५३ ॥ स्वस्तिवोस्तुगमिष्यामिसीतांद्रक्ष्यथनिश्चयं॥ यत्नंकुरुध्वंदुर्लंघ्यसमुद्रस्यविलंघने ॥ ५४ ॥ यन्नामस्मृतिमात्रतोऽपरिमितंसंसारवारांनिधिंतीर्त्वागच्छतिदुर्जनोऽपिपरमंविष्णोःपदंशाश्वतं॥ तस्यैवस्थितिकारिणस्त्रिजगतांरामस्यभक्ताःप्रियायूयंकिंनसमुद्रमात्रतरणेशक्ताःकथंवानराः॥ ५५॥ इतिश्रीम० कि० अष्टमःसर्गः॥ ८॥ ॥ ७॥ गतेविहायसागृध्रराजेवानरपुंगवाः॥हर्षेणमहताविष्टाःसीतादर्शनलालसाः॥१॥

क्ताःप्रियाश्चयूयंशतयोजनपरिच्छिन्नस्यसमुद्रमात्रस्यतरणेकिंकुतोनशक्ताः कथंचनशक्ताइतिव्यतिरेकालंकारः ॥ ५५ ॥ इतिश्रीमत्सकल०अध्यात्मरामायणेसेतौकिष्किधाकांडेअष्टमःसर्गः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥ गतेइति पक्षलाभादितिभावः हर्षेणेति महद्रिष्टंगतमितितत्पक्षदर्शनप्रत्ययेनसीतादर्शनमवश्यंभावीतिहर्षेणच ॥ १ ॥

नक्रचक्रंनक्रसमूहः तरंगादिभिःतरंगाअल्पाआदिनामहत्योलहर्यः दुर्ग्रहंदुःस्पर्शंआकाशस्यस्पर्शत्वंअस्यतुग्राहादियुक्तत्वात् ॥२ ॥ कथमेनं तरामहइतिपरस्परमवोचन्इत्यन्वयः ॥ ३ ॥ कृतविक्रमाःपूर्वंबहुशःकृतपराक्रमाः कोराजकार्यंकरिष्यतितद्वदंत्वितिशेषः ॥ ४ ॥ यस्तद्वदिष्यतिअहंकर्तेतिसएषांप्राणदाताअतःयोमहाबलःसशीघ्रमुत्तिष्ठतु अतोत्तिष्ठत्वित्यार्षःसंधिः ॥ ५ ॥ भूयाद्भवेदित्यर्थेआर्षं ॥ ६ ॥ ७ ॥

ऊचुःसमुद्रंपश्यंतोनक्रचक्रभयंकरं॥ तरंगादिभिरुन्नद्धमाकाशमिवदुर्ग्रहं ॥ २ ॥ परस्परमवोचन्वैकथमेनंतरामहे॥ उवाचचांगदस्तत्रश्रृणुध्वंवानरोत्तमाः॥ ३॥ भवंतोत्यंतबलिनःशूराश्चकृतविक्रमाः ॥ कोवाऽत्रवारिधिंतीर्त्वाराजकार्यंकरिष्यति ॥ ४ ॥ एतेषांवानराणांसप्राणदातानसंशयः ॥ अतोत्तिष्ठतुमेशीघ्रंपुरतोयोमहाबलः॥ ५॥ वानराणांचसर्वेषांरामसुग्रीवयोरपि॥ सएवपालकोभूयान्नात्रकार्याविचारणा॥ ६ ॥इत्युक्तेयुवराजेनतूर्ष्णींवानरसैनिकाः॥ आसन्नोचुःकिंचिदपिपरस्परविलोकिनः॥ ७॥ अंगदउवाच उच्यतांवैबलंसर्वैःप्रत्येकंकार्यसिद्धये॥ केनवासाध्यतेकार्यंजानीमस्तदनंतरं ॥ ८ ॥ अंगदस्यवचःश्रुत्वाप्रोचुर्वीराबलंपृथक्॥ योजनानांदशारभ्यदशोत्तरगुणंजगुः॥ ९ ॥ शतादर्वाग्जांबवांस्तुप्राहमध्येवनौकसां ॥ पुरात्रिविक्रमेदेवेपादंभूमानलक्षणं॥ १० ॥ त्रिःसप्तकृत्वोऽहमगांप्रदक्षिणविधानतः ॥ इदानींवार्धकग्रस्तोनशक्नोमिविलंघितुं॥ ११ ॥ अंगदोऽप्याहमेगंतुंशक्यंपारंमहोदधेः ॥ पुनर्लंघनसामर्थ्यंनजानाम्यस्तिवानवा॥ १२ ॥

सर्वैर्युष्माभिर्वनिश्चयेनप्रत्येकंस्वस्वबलंउच्यतां ततःकार्यसाधकंनिश्चेष्यामइत्यर्थः ॥ ८॥ दशोत्तरगुणं दशसंख्योत्तरोगुणोयस्यतत् एकोदशपरोविंशतिःपरस्त्रिंशदित्येवंक्रमेण ॥ ९ ॥ जांबवांस्तुनवतियोजनानीत्याहेत्यर्थः पुरात्रिविक्रमेदेवेऽवतीर्णेसतितदीयंभूमानंभूपरिच्छेदलक्षणकार्यंयस्यतादृशंभूपरिच्छेदकंपादं ॥ १० ॥ एकविंशतिवारंप्रदक्षिणविधानेनाहमगांतत्परितइतिशेषः ॥ ११ ॥ १२ ॥

त्वन्नोनियामकोस्माकमाज्ञाकर्ताराजात्वंयद्यपिसमर्थोसितथापित्वामाज्ञप्तुंमेनयुक्तं ॥ १३ ॥ कार्यंकेनापिनकृतंजीवितुंचनशक्यतेराजभयाद्‌तोमरणनिश्चयेनस्वप्स्यामइत्यर्थः ॥ १४ ॥ कार्यसिद्धिर्भविष्यतिअचिरेणचभविष्यतितंदर्शयिष्यामि ॥ १५॥ कार्यगौरवेगुरुतरकार्येप्राप्तेऽज्ञेनेवभवताकितूष्णींस्थीयतइत्यन्वयः ॥ १६ ॥ अतःसामर्थ्यंदर्शय ननुसामर्थ्याभावेकिंदर्शनीयमितिचेन्नेत्याह त्वमिति ॥ १७ ॥

तमाहजांबवान्वीरस्त्वंराजानोनियामकः॥ नयुक्तंत्वांनियोक्तुंमेत्वंसमर्थोऽसियद्यपि॥ १३ ॥ अंगदउवाच एवंचेत्पूर्ववत्सर्वेस्वप्स्यामोदर्भविष्टरे॥ केनापिनकृतंकार्यंजीवितुंचनशक्यते॥ १४ ॥ तमाहजांबवान्वीरोदर्शयिष्यामितेसुत॥ येनास्माकंकार्यसिद्धिर्भविष्यत्यचिरेणच॥ १५॥ इत्युक्काजांबवान्प्राहहनूमंतमवस्थितं॥ हनूमन्किंरहस्तूष्णींस्थीयतेकार्यगौरवे॥ १६॥ प्राप्तेऽज्ञेनेवसामर्थ्यंदर्शयाद्यमहाबल ॥ त्वंसाक्षाद्वायुतनयोवायुतुल्यपराक्रमः॥ १७॥ रामकार्यार्थमेवत्वंजनितोसिमहात्मना॥ जातमात्रेणतेपूर्वंदृष्ट्वोद्यंतंविभावसुं॥ १८ ॥ पक्कंफलंजिघृक्षामीत्युत्प्लुतंबालचेष्टया ॥ योजनानांपंचशतंपतितोसिततोभुवि ॥ १९ ॥ अतस्त्वद्बलमाहात्म्यंकोवाशक्नोतिवर्णितुं॥ उत्तिष्ठकुरुरामस्यकार्यंनःपाहिसुव्रत॥ २० ॥ श्रुत्वाजांबवतोवाक्यंहनूमानतिहर्षितः॥ चकारनादंसिंहस्यब्रह्मांडंस्फोटयन्निव॥ २१॥ बभूवपर्वताकारस्त्रिविक्रमइवापरः॥ लंघयित्वाजलनिधिंकृत्वालंकांचभस्मसात्॥ २२॥ रावणंसकुलंहत्वानेष्येजनकनंदिनीं॥ यद्वाबध्वागलेरज्ज्वारावणंवामपाणिना॥ २३॥

जनितोसिउत्पादितोसि विभावसुंसूर्यं ॥ १८ ॥ जिघृक्षामीतियहीष्यामीत्यर्थेआर्षं योजनानांपंचशतमुत्प्लुतंततोभुविपतितः ॥ १९ ॥ नोस्मान्पाहिरक्ष ॥ २० ॥ सिंहस्यनादंतस्येवनादमित्यर्थः ॥ २१ ॥ २२ ॥ आनेष्यइतिच्छेदः रावणंगलेबध्वाएकहस्तेगृहीत्वावामपाणिनासपर्वतांलंकांधृत्वारामायेक्षिपामि ॥ २३ ॥

यद्वेति सीतायाआनयनेरामाज्ञाभावादितिभावःदृष्ट्वैवेतिनतुतांगृहीत्वानापिरावणादीनृगृहीत्वेत्यर्थः ॥ २४ ॥ २५ ॥ भवतात्‌आशि षिलोट्‌ ॥ २६ ॥ वायुस्त्वामनुगच्छत्वितिशकुनप्रार्थनं समामंत्र्ययोजयित्वा ॥ २७ ॥ अद्भुतदर्शनःअतिमहाशरीरत्वात्‌ ॥ २८॥ तदे

लंकांसपर्वतांधृत्वारामस्याग्रेक्षिपाम्यहं ॥ यद्वादृष्ट्वैवयास्यामिजानकींशुभलक्षणां ॥ २४ ॥ श्रुत्वाहनूमतोवाक्यंजांबवानिदमब्रवीत्‌ ॥ दृष्ट्वैवागच्छभद्रंतेजीवंतींजानकींशुभां ॥ २५ ॥ पश्चाद्रामेणसहितोदर्शयिष्यसिपौरुषं ॥ कल्याणंभवताद्भद्रगच्छतस्तेविहायसा ॥ २६ ॥ गच्छंतंरामकार्यार्थंवायुस्त्वामनुगच्छतु ॥ इत्याशीर्भिः समामंत्र्यविसृष्टःप्लवगाधिपैः ॥ २७ ॥ महेंद्राद्रिशिरोगत्वाबभूवाद्भुतदर्शनः ॥ २८ ॥ महानगेंद्रप्रतिमोमहात्मासुवर्णवर्णोऽरुणचारुवक्रः ॥ महाफणींद्राभसुदीर्घबाहुर्वातात्मजोऽदृश्यतसर्वभूतैः ॥ २९ ॥ इतिश्रीमद०उमामहेश्वरसं० किष्किंधाकांडेनवमःसर्गः ॥ ९ ॥ ॥ छ ॥ समाप्तमिदंकिष्किंधाकांडं ॥ छ ॥ ॥ छ ॥

वाह महानगेंद्रेति ॥ २९ ॥ इतिश्रीमत्सकल०किष्किंधाकांडेनवमःसर्गः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः ॥ शतेति लिलंघयिषुः स्वार्थेणिच् आनंदसंदोहः तत्समूहरूपः तत्समूहवान्वा ॥ १॥२ ॥ रामनिर्मुक्तंरामत्यक्तं पश्यामीति भाविन्यपिवर्त्तमानत्वारोपोवश्यंभावित्वद्योतनाय ॥ ३ ॥ कृतार्थः जगन्मातृदर्शनेनेतिभावः ममसमुद्रलंघनमकिंचित्करमित्याह प्राणेति ॥ ४ ॥ अपारमित्युभयान्वयि त्रिविधपरिच्छेदशून्यंतत्पदंतत्स्वरूपं तदंगभूतायाअंगुलिस्तद्भूषणभूतायामुद्रिकासाअस्यास्तीत्यर्शआद्यच्

**श्रीमहादेवउवाच शतयोजनविस्तीर्णंसमुद्रंमकरालयं ॥ लिलंघयिषुरानंदसंदोहोमारुतात्मजः ॥ १ ॥ ध्यात्वारामंपरात्मानमिदंवचनमब्रवीत् ॥ पश्यंतुवानराःसर्वेगच्छंतंमांविहायसा ॥ २ ॥ अमोघंरामनिर्मुक्तंमहाबाणमिवाखिलाः ॥ पश्याम्यद्यैवरामस्यपत्नींजनकनंदिनीं ॥ ३ ॥ कृतार्थोऽहंकृतार्थोऽहंपुनःपश्यामिराघवं ॥ प्राणप्रयाणसमयेयस्यनामसकृत्स्मरन् ॥ ४ ॥ नरस्तीर्त्वाभवांभोधिमपारंयातितत्पदं ॥ किंपुनस्तस्यदूतोऽहंतदंगांगुलिमुद्रिकः ॥ ५ ॥ तमेवहृदयेध्यात्वालंघयाम्यल्पवारिधिं ॥ इत्युक्त्वाहनुमान्बाहूप्रसार्यायतवालधिः ॥ ६ ॥ ऋजुग्रीवोर्ध्वदृष्टिःसन्नाकुंचितपदद्वयः ॥ दक्षिणाभिमुखस्तूर्णंपुप्लुवेऽनिलविक्रमः ॥ ७ ॥ आकाशात्त्वरितंदेवैर्वीक्ष्यमाणोजगामसः ॥ दृष्ट्वाऽनिलसुतंदेवागच्छंतंवायुवेगतः ॥ ८ ॥ परीक्षणार्थंसत्त्वस्यवानरस्येदमब्रुवन् ॥ गच्छत्येषमहासत्त्वोवानरोवायुविक्रमः ॥ ९ ॥**

॥ ५ ॥ अल्पवारिधिमित्यपारभवांभोधेर्व्यतिरेकालंकारः तंलंघयामीतिकिंवक्तव्यमित्यन्वयः बाहूइत्यादिवानरोत्प्लवनजातिवर्णनं आयतवालधिः प्रसारितपुच्छः ॥ ६ ॥ ऋजुग्रीवऊर्ध्वदृष्टिरित्यर्थः कर्मधारयः अनिलोवायुः तत्सदृशपराक्रमः ॥ ७ ॥ आकाशात्आकाशेस्थित्वेत्यर्थः ॥ ८ ॥ वानरस्यसत्त्वस्यवानरीयबलस्यपरीक्षणार्थमिदमब्रुवन् विचारयामासुरित्यर्थः तद्वक्ष्यति एवंविचार्येति धातूनामनेकार्थत्वाद्ब्रूञोऽपिविचारेवृत्तिः ॥ ९ ॥

लंकाप्रवेशेशक्तोऽथवानेतिसंदेहस्तस्मादस्यबलंजानीमहे निर्णेष्यामइत्यर्थः ॥ १० ॥ देवतावृंदःदेवतासमूहः ॥ ११ ॥ १२ ॥ १३ ॥ क्षुध



लंकांप्रवेष्टुंशक्तोवानवाजानीमहेबलं ॥ एवंविचार्यनागानांमातरंसुरसाभिधां ॥ १० ॥ अब्रवीद्देवतावृंदःकौ



तूहलसमन्वितः ॥ गच्छत्वंवानरेंद्रस्यकिंचिद्विघ्नंसमाचर ॥ ११ ॥ ज्ञात्वातस्यबलंबुद्धिंपुनरेहित्वरान्विता ॥ इत्यु



क्तासाययौशीघ्रंहनुमद्विघ्नकारणात् ॥ १२ ॥ आवृत्यमार्गंपुरतःस्थित्वावानरमब्रवीत् ॥ एहिमेवदनंशीघ्रंप्रवि
शस्वमहामते ॥ १३ ॥ देवैस्त्वंकल्पितोभक्षःक्षुधासंपीडितात्मनः ॥ तामाहहनुमान्मातरहंरामस्यशासनात् ॥
॥ १४ ॥ गच्छामिजानकींद्रष्टुंपुनरागम्यसत्वरः ॥ रामायकुशलंतस्याःकथयित्वात्वदाननं ॥ १५ ॥ निवेक्ष्येदेहि
मेमार्गंसुरसायैनमोऽस्तुते ॥ इत्युक्तापुनरेवाहसुरसाक्षुधितास्म्यहं ॥ १६ ॥ प्रविश्यगच्छमेवक्त्रंनोचेत्त्वांभक्षया
म्यहं ॥ इत्युक्तोहनुमानाहमुखंशीघ्रंविदारय ॥ १७ ॥ प्रविश्यवदनंतेऽद्यगच्छामित्वरयान्वितः ॥ इत्युक्त्वायोज
नायामदेहोभूत्वापुरःस्थितः ॥ १८ ॥ दृष्ट्वाहनूमतोरूपंसुरसापंचयोजनं ॥ मुखंचकारहनुमान्द्विगुणंरूपमादध
त् ॥ १९ ॥ ततश्चकारसुरसायोजनानांचविंशतिं ॥ वक्त्रंचकारहनुमांस्त्रिंशद्योजनसम्मितं ॥ २० ॥ ततश्चका
रसुरसापंचाशद्योजनायतं ॥ वक्त्रंतदाहनूमांस्तुबभूवांगुष्ठसन्निभः ॥ २१ ॥ प्रविश्यवदनंतस्याःपुनरेत्यपुरःस्थि
तः ॥ प्रविष्टोनिर्गतोऽहंतेवदनंदेवितेनमः ॥ २२ ॥ एवंवदंतंदृष्ट्वासाहनूमंतमथाब्रवीत् ॥ गच्छसाधयरामस्य
कार्यंबुद्धिमतांवर ॥ २३ ॥ देवैःसंप्रेषिताहंतेबलंजिज्ञासुभिःकपे ॥ दृष्ट्वासीतांपुनर्गत्वारामंद्रक्ष्यसिगच्छभो ॥ २४ ॥

यासंपीडितआत्मायस्यास्तस्याइत्यर्थः ॥ १४ ॥ १५ ॥ निवेक्ष्येप्रवेक्ष्यामि ॥ १६ ॥ मेवक्त्रंप्रविश्य ततोनिःसृत्यगच्छेत्यर्थः ॥ १७ ॥ योज



नमात्रदीर्घदेहः ॥ १८ ॥ १९ ॥ त्रिंशद्योजनसम्मितंवपुश्चकारेतिशेषः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पुनर्गत्वाकिष्किंधामितिशेषः ॥ २४ ॥

॥ २५ ॥ मणिकांचनपर्वतंमण्यादियुक्तश्रृंगयुतंपर्वतं ॥ २६ ॥ सचिवोभव मध्येविश्रामदानेनसहायोभवेत्यर्थः तत्सहायार्थनिमित्तंमत्प्रेरणेकोहेतुस्तत्राह सगरैरिति पुरापूर्वंसगरैर्वर्धितइतिहेतोरहंसागरस्तन्नामाऽभवं ॥ २७ ॥ तस्यवंशेचरामस्तत्कार्यार्थंचायंगच्छति ॥ २८ ॥

इत्युक्त्वासाययौदेवलोकंवायुसुतःपुनः ॥ जगामवायुमार्गेणगरुत्मानिवपक्षिराट् ॥ २५ ॥ समुद्रोऽप्याहमैनाकंमणिकांचनपर्वतं ॥ गच्छत्येषमहासत्त्वोहनूमान्मारुतात्मजः ॥ २६ ॥ रामस्यकार्यसिद्ध्यर्थंतस्यत्वंसचिवोभव ॥ सगरैर्वर्धितोयस्मात्पुराहंसागरोऽभवं ॥ २७॥ तस्यान्वयेबभूवासौरामोदाशरथिःप्रभुः ॥ तस्यकार्यार्थसिद्ध्यर्थंगच्छत्येषमहाकपिः ॥ २८ ॥ त्वमुत्तिष्ठजलात्तूर्णंत्वयिविश्राम्यगच्छतु ॥ सतथेतिप्रादुरभूज्जलमध्यान्महोन्नतः ॥ २९ ॥ नानामणिमयैःश्रृंगैस्तस्योपरिनराकृतिः ॥ प्राहयांतंहनूमंतंमैनाकोऽहंमहाकपे ॥ ३० ॥ समुद्रेणसमादिष्टस्त्वद्विश्रामायमारुते ॥ आगच्छामृतकल्पानिजग्ध्वापक्वफलानिमे ॥ ३१ ॥ विश्राम्यात्रक्षणंपश्चाद्गमिष्यसियथासुखं ॥ एवमुक्तोऽथतंप्राहहनूमान्मारुतात्मजः ॥ ३२ ॥ गच्छतोरामकार्यार्थंभक्षणंमेकथंभवेत् ॥ विश्रामोवाकथंमेस्याद्गंतव्यंत्वरितंमया ॥ ३३ ॥ इत्युक्त्वास्पृष्टशिखरःकराग्रेणययौकपिः ॥ किंचिद्दूरंगतस्यास्यछायांछायाग्रहोऽग्रहीत् ॥ ३४ ॥ सिंहिकानामसाघोराजलमध्येस्थितासदा ॥ आकाशगामिनांछायामाक्रम्याकृष्यभक्षयेत् ॥ ३५ ॥ तयागृहीतोहनुमांश्चिंतयामासवीर्यवान् ॥ केनेदंमेकृतंवेगरोधनंविघ्नकारिणा ॥ ३६ ॥

अतस्त्वमुत्तिष्ठेत्यन्वयः ॥ २९ ॥ नानामणिमयैःश्रृंगैर्महोन्नतइत्यन्वयः तस्योपरिनराकृतिर्मनुष्याकारेणस्थितोमैनाकःप्राह ॥ ३० ॥ ३१ ॥ विश्राम्येत्यार्षं ॥ ३२ ॥ कथंभवेदित्यादेरनुचितंतदित्यर्थः तत्रहेतुर्गंतव्यंत्वरितंमयेति ॥ ३३ ॥ करायेणस्पृष्टशिखरोययावित्यन्वयः छायास्पर्शमात्रेणजंतूनांगतिनिरोधेनाकर्षकश्छायाग्रहइत्युच्यते ॥ ३४ ॥ तदेवाह सिंहिकेतिभक्षयेत् भक्षयतिइत्यर्थेआर्षः ॥ ३५ ॥ ३६ ॥

विस्मयआश्चर्ययत्कस्याप्यदर्शनंवेगरोधश्चेत्याश्चर्यं प्रसारयत्प्रासारयत अडभावआर्षः ॥ ३७ ॥ सिंहिकांतन्नाम्नींराक्षसीं ॥ ३८ ॥ दक्षिणंकूलंसागरस्येतिशेषः ॥ ३९ ॥ ४० ॥ बहुभिःप्राकारैःअंतर्दुर्गमध्यदुर्गबहिर्दुर्गसंबंधिभिः परिखाःप्राकारबहिर्गर्ताः ॥ ४१ ॥ वेक्ष्या

दृश्यतेनैवकोऽप्यत्रविस्मयोमेप्रजायते ॥ एवंविचिंत्यहनुमानधोदृष्टिंप्रसारयत् ॥ ३७ ॥ तत्रदृष्ट्वामहाकायांसिंहिकांघोररूपिणीं ॥ पपातसलिलेतूर्णपद्माामेवाहनद्रुषा ॥ ३८ ॥ पुनरुत्प्लुत्यहनुमान्दक्षिणाभिमुखोययौ ॥ ततोदक्षिणमासाद्यकूलंनानाफलद्रुमं ॥ ३९ ॥ नानापक्षिमृगाकीर्णनानापुष्पलतावृतं ॥ ततोददर्शनगरंत्रिकूटाचलमूर्धनि ॥ ४० ॥ प्राकारैर्बहुभिर्युक्तंपरिखाभिश्चसर्वतः ॥ प्रवेक्ष्यामिकथंलंकामितिचिंतापरोभवत् ॥ ४१ ॥ रात्रौवेक्ष्यामिसूक्ष्मोऽहंलंकांरावणपालितां ॥ एवंविचिंत्यतत्रैवस्थित्वालंकांजगामसः ॥ ४२ ॥ धृत्वासूक्ष्मंवपुर्द्वारंप्रविवेशप्रतापवान् ॥ तत्रलंकापुरीसाक्षाद्राक्षसीवेषधारिणी ॥ ४३ ॥ प्रविशंतंहनूमंतंदृष्ट्वालंकाव्यतर्जयत् ॥ कस्त्वंवानररूपेणमामनादृत्यलंकिनीं ॥ ४४ ॥ प्रविश्यचोरवद्रात्रौकिंभवान्कर्तुमिच्छति ॥ इत्युक्त्वारोषताम्राक्षीपादेनाभिजघानतं ॥ ४५ ॥ हनुमानपितांवाममुष्टिनावज्ञयाहनत् ॥ तदैवपतिताभूमौरक्तमुद्वमतीभृशं ॥ ॥ ४६ ॥ उत्थायप्राहसालंकाहनूमंतंमहाबलं ॥ हनूमन्गच्छभद्रंतेजितालंकात्वयानघ ॥ ४७ ॥ पुराहंब्रह्मणाप्रोक्तात्यष्टाविंशतिपर्यये ॥ त्रेतायुगेदाशरथीरामोनारायणोव्ययः ॥ ४८ ॥

मिप्रवेक्ष्यामि सूक्ष्मःसूक्ष्मशरीरोभूत्वेत्यर्थः लंकांजगाम रात्राविति शेषः ॥ ४२ ॥ सूक्ष्मंवपुर्धृत्वाद्वारंप्रविवेश ॥ ४३ ॥ ४४ ॥ रात्रौचोरवत्प्रविश्य गच्छसीतिशेषः सत्वंकइत्येकः किंभवानित्यादिप्रश्नांतरं ॥ ४५ ॥ ४६ ॥ ४७ ॥ अष्टाविंशतिपर्ययेइति यद्यपिअन्यत्रचतुर्विंशतिमेपर्यायेत्रेतायांरामावतारोऽष्टविंशतिमेपर्यायेद्वापरांतेकृष्णावतारइत्युक्तंतथाऽपिकल्पांतरपरतयाविरोधपरिहारोऽवसेयः ॥ ४८ ॥

योगमायाचसीतेतिजनिष्यतइत्यन्वयः कचित् अवतारपूर्वकालेप्रार्थितोजनिष्यतइत्यन्वयः ॥ ४९ ॥ ५० ॥ साचिव्यंसख्यं ॥ ५१ ॥ ५२॥ ॥ ५३ ॥ यतस्त्वयाहंलंकाजितातस्मात्त्वयासर्वंराक्षसकुलंजितं अथसीतास्थितिस्थानमाह रावणांतःपुरेति ॥५४॥५५ ॥५६॥ यतोमेराघव

जनिष्यतेयोगमायासीताजनकवेश्मनि ॥ भूभारहरणार्थायप्रार्थितोयंमयाक्कचित् ॥ ४९ ॥ सभार्योराघवोऽत्रा त्रागमिष्यतिमहावनं ॥ तत्रसीतांमहामायांरावणोपहरिष्यति ॥ ५० ॥ पश्चाद्रामेणसाचिव्यंसुग्रीवस्यभविष्य ति ॥ सुग्रीवोजानकींद्रष्टुंवानरान्प्रेषयिष्यति ॥ ५१ ॥ तत्रैकोवानरोरात्रावागमिष्यतितेंतिकं ॥ त्वयाचभर्त्सितः सोऽपित्वांहनिष्यतिमुष्टिना ॥ ५२ ॥ तेनाहतात्वंव्यथिताभविष्यसियदानघे ॥ तदैवरावणस्यांतोभविष्यतिनसं शयः ॥ ५३ ॥ तस्मात्त्वयाजितालंकाजितंसर्वंत्वयानघ ॥ रावणांतःपुरवरेक्रीडाकाननमुत्तमं ॥ ५४ ॥ तन्मध्ये ऽशोकवनिकादिव्यपादपसंकुला ॥ अस्तितस्यांमहावृक्षःशिंशपानाममध्यगः ॥ ५५ ॥ तत्रास्तेजानकीघोररा क्षसीभिःसुरक्षिता ॥ दृष्ट्वैवगच्छत्वरितंराघवायनिवेदय ॥ ५६ ॥ धन्याहमप्यद्यचिरायराघवस्मृतिर्ममासीद्भ वपाशमोचनी ॥ तद्भक्तसंगोऽप्यतिदुर्लभोममप्रसीदतांदाशरथिःसदाहृदि ॥ ५७ ॥ उल्लंघितेऽब्धौपवनात्मजे नधरासुतायाश्चदशाननस्य ॥ पुस्फोरवामाक्षिभुजश्चतीव्रंरामस्यदक्षांगमतींद्रियस्य ॥ ५८ ॥ इतिश्रीमद ध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेप्रथमःसर्गः ॥ १ ॥ ॥ छ ॥

स्मृतिरासीदतोऽहमपिधन्या तद्भक्तसंगस्यापिदुर्लभत्वंकिंवक्तव्यमितिभावः प्रसीदतांप्रसन्नःसन्आस्तां ॥ ५७ ॥ पुस्फोरस्फुरितमभवत् भु जोवामएवस्त्रियावामांगस्फुरणंशुभसूचकंपुंसोऽशुभदमितिभावः अतींद्रियस्यइंद्रियाविषयस्यरामस्यदक्षांगंपुस्फोर यद्वारामसंबंधिअतींद्रि यंगुप्तंयदिंद्रियंतस्यदक्षांगंदक्षिणभागःपुस्फोर तत्स्फुरणंचस्त्रीलाभसूचकंपुंसामित्याहुः ॥५८॥ इतिश्रीम० सुंदरकांडेप्रथमःसर्गः ॥१॥ ॥छ॥

ततइति सूक्ष्मतनुःसूक्ष्मवानररूपः ॥ १ ॥ सीतान्वेषणकार्यार्थीसीतान्वेषणरूपकार्येच्छावान् विविच्यदृष्ट्वा ॥ २ ॥ ततोलंकावाक्यंस्मृत्वाहनूमानूशीघ्रंजगाम ॥ ३ ॥ सुरपादपाःकल्पवृक्षादयः ॥ ४ ॥ फलैरानम्राणिशाखाग्राणियेषांतैःपादपैः ॥ ५ ॥ अभ्रंलिहमत्युच्चंचैत्यप्रासादंदेवतास्थानविशेषं अत्युच्चत्वान्मणिस्तंभादियुतत्वाच्चविस्मयः ॥६ ॥ समतीत्येति चैत्यप्रासादमितिशेषः ॥ ७ ॥ अत्यंतनिबिडपत्रत्वादेवादृष्टआ

ततोजगामहनुमान्लंकांपरमशोभनां ॥ रात्रौसूक्ष्मतनुर्भूत्वाबभ्रामपरितःपुरीं ॥ १ ॥ सीतान्वेषणकार्यार्थीप्रविवेशनृपालयं ॥ तत्रसर्वप्रदेशेषुविविच्यहनुमान्कपिः ॥ २ ॥ नापश्यज्जानकींस्मृत्वाततोलंकाभिभाषितं ॥ जगामहनुमान्शीघ्रमशोकवनिकांशुभां ॥ ३ ॥ सुरपादपसंबाधांरत्नसोपानवापिकां ॥ नानापक्षिमृगाकीर्णांस्वर्णप्रासादशोभितां ॥ ४ ॥ फलैरानम्रशाखाग्रपादपैःपरिवारितां ॥ विचिन्वन्जानकींतत्रप्रतिवृक्षंमरुत्सुतः ॥ ॥ ५॥ ददर्शाभ्रंलिहंतत्रचैत्यप्रासादमुत्तमं ॥ दृष्ट्वाविस्मयमापन्नोमणिस्तंभशतान्वितं ॥६॥ समतीत्यपुनर्गत्वाकिंचिद्दूरंसमारुतिः ॥ ददर्शशिंशपावृक्षमत्यंतनिबिडच्छदं ॥ ७ ॥ अदृष्टातपमाकीर्णंस्वर्णवर्णविहंगमं ॥ तन्मूलेराक्षसीमध्येस्थितांजनकनंदिनीं ॥८॥ ददर्शहनुमान्वीरोदेवतामिवभूतले ॥ एकवेणींकृशांदीनांमलिनांबरधारिणीं ॥ ९ ॥ भूमौशयानांशोचंतींरामरामेतिभाषिणीं ॥ त्रातारंनाधिगच्छंतीमुपवासकृशांशुभां ॥ १० ॥ शाखांतच्छदमध्यस्थोददर्शकपिकुंजरः ॥ कृतार्थोऽहंकृतार्थोऽहंदृष्ट्वाजनकनंदिनीं ॥ ११ ॥

तपोयत्रजनैस्तं स्वर्णवर्णविहंगमैःपक्षिभिराकीर्णव्याप्तमित्यर्थेमयूरव्यंसकादित्वात्समासः ॥ ८ ॥ एकवेणींहरणदिनावधिसंस्काररहितामित्यर्थः यद्वा शोभार्थमन्यदावेणीत्रयबंधःपुरतोद्वयंपश्चादेकेति संप्रतितुसंस्काररा हित्यात्पृष्ठलंबिनीएकैवेत्यर्थः दीनांस्वजनविरहाद्दीनामिव शोचंतीं आत्मानमितिशेषः ॥ ९ ॥ १० ॥ शाखानामंतेप्रांतेयेछदाःपत्राणितेषांमध्यस्थः तद्दर्शनजानंदाभिनयःकृतार्थइत्यादि ॥ ११ ॥

॥ १२ ॥ किमेतत् किंजन्योयंशब्दः ॥ १३ ॥ अलीयततद्दर्शनेनकरिष्यमाणकार्यभंगभियेतिभावः ॥ १४ ॥ १५ ॥ इत्येवंचितयन्रावणो राघवेणेतिश्लोकोक्तंचितयन्नित्यंसदाहृदिराममेवध्यायन्नास्तइतिशेषः अतस्तस्मिन्दिनेपररात्रौहनूमत्प्रवेशदिनरात्रिसंबंध्यपररात्रेइत्यर्थः समासांताभावस्तदनित्यत्वात् ॥ १६ ॥ स्वप्नेनिद्रासमयेरामादिष्टःकश्चिद्वानरोलंकामागत्यवृक्षाग्रस्थोऽनुपश्यतिसीतामितिशेषः ॥ १७ ॥

मय्यैवसाधितंकार्यंरामस्यपरमात्मनः ॥ ततःकिलकिलाशब्दोबभूवांतःपुराद्बहिः ॥ १२ ॥ किमेतदितिसंल्लीनो वृक्षपत्रेषुमारुतिः ॥ आयांतंरावणंतत्रस्त्रीजनैःपरिवारितं ॥ १३ ॥ दशास्यंविंशतिभुजंनीलांजनचयोपमं ॥ दृष्ट्वाविस्मयमापन्नःपत्रखंडेष्वलीयत ॥ १४ ॥ रावणोराघवेणाशुमरणंमेकथंभवेत् ॥ सीतार्थमपिनायाति रामःकिंकारणंभवेत् ॥ १५ ॥ इत्येवंचिंतयन्नित्यंराममेवसदाहृदि ॥ तस्मिन्दिनेपररात्रौरावणोराक्षसाधिपः ॥ ॥ १६ ॥ स्वप्नेरामेणसंदिष्टःकश्चिदागत्यवानरः ॥ कामरूपधरःसूक्ष्मोवृक्षाग्रस्थोऽनुपश्यति ॥ १७ ॥ इतिदृष्ट्वाद्भु तंस्वप्नंस्वात्मन्येवानुचिंत्यसः ॥ स्वप्नःकदाचित्सत्यःस्यादेवंतत्रकरोम्यहं ॥ १८ ॥ जानकींवाक्शरैर्विध्यदुःखितां नितरामहं ॥ करोमिदृष्ट्वारामायनिवेदयतुवानरः ॥ १९ ॥ इत्येवंचिंतयन्सीतासमीपमगमद्द्रुतं ॥ नूपुराणां किंकिणीनांश्रुत्वाशिंजितमंगना ॥ २० ॥

इतिअद्भुतंस्वप्नंदृष्ट्वाअयंस्वप्नःकदाचित्सत्योभवेत् अतस्तत्रसीतासमीपंगत्वाएवंकरोमीति अचिंतयदितिशेषः ॥ १८ ॥ यदचिंतयत्तदाह जानकीमिति विध्येतिल्यबार्षः तांवाक्शरैर्विध्वानितरांदुःखितांकरोमितदृष्ट्वावानरोरामायनिवेदयतु एवंहिरामःशीघ्रंआगच्छेदितिभावः ॥ १९ ॥ नूपुराणिपादभूषणानि किंकिण्योजघनभूषणानि शिंजितंशब्दं ॥ २० ॥

भीतासीतारूपांगनास्वात्मन्येवस्वशरीरेएवलीयमानास्थितेत्यन्वयः रामेर्पितंस्थापितमांतरंचित्तंयया ॥ २१ ॥ किमाहतदाह सुमध्यमेइत्या
दि ॥२२॥२३॥ लोकाश्चाररूपाःप्रयत्नेनसमंततोवीक्षमाणाअपिरामंनपश्यंति ॥ २४ ॥ त्वयिनिस्पृहेणइच्छाहीनेनपूर्णकामत्वादित्यांतरोर्थः
त्वयासदालिंगितोऽपिध्यानेनसदाहृदिचिंतनात् अतएवसमीपस्थोऽपि यद्वा शक्तिशक्तिमतोरभेदात्सदालिंगितोविभुत्वाच्चसमीपस्थोयद्यपि
॥ २५ ॥ तथाऽप्यस्यरामस्यहृदयेत्वयित्वद्विषयस्नेहोनजायते अतएवेयत्कालंत्वदुपेक्षातस्येतिभावः सर्वत्रसमत्वात्तस्यनक्वापिस्नेहइतितत्त्वं

सीताभीतालीयमानास्वात्मन्येवसुमध्यमा ॥ अधोमुख्यश्रुनयनास्थितारामार्पितांतरा ॥ २१ ॥ रावणोऽपित
दासीतामालोक्याहसुमध्यमे ॥ मांदृष्ट्वाकिंवृथासुभ्रुस्वात्मन्येवविलीयसे ॥ २२ ॥ रामोवनचराणांहिमध्येतिष्ठ
तिसाऽनुजः ॥ कदाचिद्दृश्यतेकैश्चित्कदाचिन्नैवदृश्यते ॥ २३ ॥ मयातुबहुधालोकाःप्रेषितास्तस्यदर्शने ॥ नप
श्यंतिप्रयत्नेनवीक्षमाणाःसमंततः ॥ २४ ॥ किंकरिष्यसिरामेणनिस्पृहेणसदात्वयि ॥ त्वयासदालिंगितोऽपिस
मीपस्थोऽपिसर्वदा ॥ २५ ॥ हृदयेऽस्यनचस्नेहस्त्वयिरामस्यजायते ॥ त्वत्कृतान्सर्वभोगांश्चत्वद्गुणानपिराघवः ॥
॥ २६ ॥ भुंजानोऽपिनजानातिकृतघ्नोनिर्गुणोऽधमः ॥ त्वमानीतामयासाध्वीदुःखशोकसमाकुला ॥ २७ ॥ इ
दानीमपिनायातिभक्तिहीनःकथंव्रजेत् ॥ निःसत्वोनिर्ममोमानीमूढःपंडितमानवान् ॥ २८ ॥

किंचत्वत्कृतान्सर्वभोगांस्त्वयास्ववृत्तिद्वारोपनीतान्सर्वभोगान्सर्वविषयान्तथात्वद्गुणान्सुखसंकल्पकामादीन्भुंजानोऽपिअहंभोक्तेतिनजाना
तितथाभिमानराहित्यात् अतएवकृतघ्नः अतएवनिर्गुणः योहिगुणवान्सउपकारंमनुतएव अधमःउपकारविस्मरणात् किंचनधर्मनिशब्दविष
योभवतीत्यधमशब्दवाच्यइतियावत् कृतघ्नत्वाद्युपपादयति त्वमिति॥२६॥२७॥यतस्त्वयिभक्तिहीनोतःकथंव्रजेत् स्वस्थानतस्त्वत्प्राप्त्यर्थ
मिमंदेशमित्यर्थः निःसत्वोनिर्बलः निर्ममोममताहीनः त्वयिइयंममेतिबुद्धिहीनः ॥ २८ ॥

नराधमंपंचम्यर्थेबहुव्रीहिरितिकश्चित् किंकरिष्यसितादृशेऽनुरागेणकिंप्रयोजनमित्यर्थः असुरोत्तममितिनराधमव्यतिरेकउक्तः ॥ २९ ॥ देवगंधर्वनागानांतद्योषितामित्यर्थः नियोक्त्रीप्रभुतयाआज्ञापयित्री प्रतिपद्यसेअंगीकरोषि ॥ ३० ॥ निधायतृणमंतरे पतिव्रतायाःसाक्षात्परपुरुषेणवार्तालापस्यानौचित्यादितिभावः त्वंचतृणतुल्यइत्यपिद्योतयितुंच ॥ ३१ ॥ शुनीवेत्युपमयाअत्यंतंपराक्रमराहित्यंसूचितं ॥३२॥

नराधमंत्वद्विमुखंकिंकरिष्यसिभामिनि॥त्वय्यतीवसमासक्तंमांभजस्वासुरोत्तमं॥ २९ ॥देवगंधर्वनागानांयक्षकिन्नरयोषितां॥भविष्यसिनियोक्त्रीत्वंयदिमांप्रतिपद्यसे॥ ३० ॥रावणस्यवचःश्रुत्वासीतामर्षसमन्विता॥ उवाचाधोमुखीभूत्वानिधायतृणमंतरे ॥ ३१ ॥ राघवाद्बिभ्यतानूनंभिक्षुरूपंत्वयाधृतं ॥ रहितेराघवाभ्यांत्वंशुनीवहविरध्वरे ॥ ३२ ॥ हृतवानसिमांनीचतत्फलंप्राप्स्यसेऽचिरात् ॥ यदारामशराघातविदारितवपुर्भवान् ॥ ॥ ३३ ॥ज्ञास्यसेमानुषंरामंगमिष्यसियमांतिकं॥ समुद्रंशोषयित्वावाशरैर्बद्ध्वाथवारिधिं ॥ ३४ ॥ हंतुंत्वांसमरेरामोलक्ष्मणेनसमन्वितः॥ आगमिष्यत्यसंदेहोद्रक्ष्यसेराक्षसाधम ॥३५॥ त्वांसपुत्रंसहबलंहत्वानेष्यतिमांपुरं॥ श्रुत्वारक्षःपतिःक्रुद्धोजानक्याःपरुषाक्षरं॥ ३६ ॥ वाक्यंक्रोधसमाविष्टःखड्गमुद्यम्यसत्वरः॥ हंतुंजनकराजस्यतनयांताघलोचनः॥३७॥मंदोदरीनिवार्याहपतिंपतिहितेरता॥त्यजैनांमानुषींदीनांदुःखितांकृपणांकृशां॥ ३८ ॥

अचिरादितिच्छेदः अल्पेनैवकालेनेत्यर्थः यदारामशराघातैर्विदारितवपुर्भवान्भविष्यतीतिशेषः ॥ ३३ ॥ तदारामंमानुषंज्ञास्यसियमांतिकंचगमिष्यसि शरैःसमुद्रंशोषयित्वावा अथअथवावारिधिंबध्वासेतुबंधेनेतिशेषः ॥ ३४ ॥ तदागमनंचत्वमनुपदमेवद्रक्ष्यसेइत्यन्वयः ॥ ३५॥ जानक्याःपरुषाक्षरंवाक्यंश्रुत्वाक्रुद्धोभवदितिशेषः ॥ ३६ ॥ ततःक्रोधसमाविष्टःखड्गमुद्यम्यजनकराजतनयांहंतुमुद्यतोऽभवदितिशेषः ॥ ॥ ३७ ॥ अन्यानुरक्तत्वात्तद्वियोगाच्चदैन्यादिविशिष्टां ॥ ३८ ॥

यास्त्वामेववरयंतिताबह्व्यःसंतीतियोजना मदेनकाममदेनमत्तेमदयुक्तेइवविलोचनेयासांताः ॥ ३९ ॥ सकामनामद्विषयकामनासहितासती यथामेवशगाभविष्यतिनतुबलात्तथायतध्वमित्यन्वयः तर्जनंभीषणं आदरणंसांत्वं ॥ ४०॥४१॥ कुरुतपक्वांकुरुतेत्यर्थः ॥ ४२ ॥ स्वतर्जनैः

देवगंधर्वनागानांबह्व्यःसंतिवरांगनाः ॥ त्वामेववरयंत्युच्चैर्मदमत्तविलोचनाः ॥ ३९ ॥ ततोब्रवीद्दशग्रीवोराक्षसीर्विकृताननाः ॥ यथामेवशगासीताभविष्यतिसकामना ॥ तथायतध्वंत्वरितंतर्जनादरणादिभिः ॥ ४० ॥ द्विमासाभ्यंतरेसीतायदिमेवशगाभवेत् ॥ तदासर्वसुखोपेताराज्यंभोक्ष्यतिसामया ॥ ४१ ॥ यदिमासद्वयादूर्ध्वंमच्छय्यांनाभिनंदति ॥ तदामेप्रातराशायहत्वाकुरुतमानुषीं ॥ ४२ ॥ इत्युक्त्वाप्रययौस्त्रीभीरावणोऽतःपुरालयं ॥ राक्षस्योजानकीमेत्यभीषयंत्यःस्वतर्जनैः ॥ ४३ ॥ तत्रैकाजानकीमाहयौवनंतेव्यथागतं ॥ रावणेनसमासाद्यसफलंतुभविष्यति ॥ ४४ ॥ अपराचाहकोपेनकिंविलंबेनजानकी ॥ इदानींछेद्यतामंगंविभज्यचपृथक्पृथक् ॥ ४५ ॥ अन्यातुखड्गमुद्यम्यजानकींहंतुमुद्यता ॥ अन्याकरालवदनाविदार्यास्यमभीषयत् ॥ ४६ ॥ एवंतांभीषयंतीस्ताराक्षसीर्विकृताननाः ॥ निवार्यत्रिजटावृद्धाराक्षसीवाक्यमब्रवीत् ॥ ४७ ॥ शृणुध्वंदुष्टराक्षस्योमद्वाक्यंवोहितंभवेत् ॥ ४८ ॥ नभीषयध्वंरुदतींनमस्कुरुतजानकीं ॥ इदानीमेवमेस्वप्नेरामःकमललोचनः ॥ ४९ ॥ आरुह्यैरावतंशुभ्रंलक्ष्मणेनसमागतः ॥ दग्ध्वालंकांपुरींसर्वांहत्वारावणमाहवे ॥ ५० ॥

स्वबुद्धिकल्पितभीषणोपायैःस्वक्रौर्ययोग्यैर्वा ॥ ४३ ॥ इदंसांत्वस्याप्युपलक्षणं तदेवाह तत्रैकेति ॥ ४४ ॥ भीषणान्याह अपराचेति किंविलंबेन अस्यावधेइतिशेषः जानकीइदानीमेवछेद्यतांअस्याअंगंपृथक्पृथक्विभज्यपच्यतामितिशेषः ॥ ४५ ॥ ४६ ॥ ४७ ॥ मद्वाक्यंशृणुध्वं यन्मदुक्तंसद्वोहितंभवेत् ॥ ४८ ॥ वाक्यमाह नेति इदानीमेवमेमयारामःस्वप्नेदृष्टइत्यन्वयः ॥ ४९ ॥ कथंदृष्टस्तदाह आरुह्येति समागतःसंयुक्तः ॥ ५० ॥

स्वांकेजानकीमारोप्यअगस्त्यपर्वतस्यमूर्धनिऊर्ध्वभागेस्थितोदृष्टः एवंरामविषयंशुभस्वप्नमुक्त्वारावणविषयमनिष्टस्वप्नमाह रावणइति ॥ ॥ ५१ ॥ वदनमालिकांस्वमुंडमालांस्वहस्तेकृत्वागाहदित्यर्थः नन्वेवंकिलंकाऽराक्षसैवभविष्यतीत्याशंक्यनेत्याह विभीषणइति रामस्यसे वांकरोतिएवंविधःस्वप्नोदृष्टोऽतःसोऽत्रराज्यंकर्तेत्याह सर्वथेत्यादि ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ त्रातारमप्राप्नुवतीदुःखेनमूर्च्छितामूर्च्छिते

आरोप्यजानकींस्वांकेस्थितोदृष्टोऽगमूर्धनि ॥ रावणोगोमयन्हदेतैलाभ्यक्तोदिगंबरः ॥ ५१ ॥ अगाहत्पुत्रपौत्रैश्चकृत्वावदनमालिकां ॥ विभीषणस्तुरामस्यसन्निधौदृष्टमानसः ॥ ५२ ॥ सेवांकरोतिरामस्यपादयोर्भक्तिसंयुतः ॥ सर्वथारावणंरामोहत्वासकुलमंजसा ॥ ५३ ॥ विभीषणायाधिपत्यंदत्वासीतांशुभाननां ॥ अंकेनिधायस्वपुरींगमिष्यतिनसंशयः ॥ ५४ ॥ त्रिजटायावचःश्रुत्वाभीतास्ताराक्षसस्त्रियः ॥ तूष्णीमासंस्तत्रतत्रनिद्रावशमुपागताः ॥ ५५ ॥ तर्जिताराक्षसीभिःसासीताभीतातिविव्हला ॥ त्रातारंनाधिगच्छंतीदुःखेनपरिमूर्च्छिता ॥ ५६ ॥ अश्रुभिःपूर्णनयनाचिंतयंतीदमब्रवीत् ॥ प्रभातेभक्षयिष्यंतिराक्षस्योमांनसंशयः ॥ इदानीमेवमरणंकेनोपायेनमेभवेत् ॥ ५७ ॥ एवंसुदुःखेनपरिप्लुतासाविमुक्तकंठंरुदतीचिराय ॥ आलंब्यशाखांकृतनिश्चयामृतौनजानतीकंचिदुपायमंगना ॥ ५८ ॥ इतिश्रीमदध्यात्मरामायणेउमाम०सुं० द्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥
उद्बंधनेनवामोक्ष्येशरीरंराघवंविना ॥ जीवितेनफलंकिंस्यान्ममरक्षोधिमध्यतः ॥ १ ॥

वाश्रुयुक्तनेत्राचिंतयंतीदमात्मनासहाब्रवीत् ॥ ५६ ॥ ५७ ॥ मृतौकृतनिश्चयामरणस्यकंचिदुपायंकमप्युपायमजानतीशाखामालंब्यचिरायातिष्ठदितिशेषः ॥ ५८ ॥ इतिश्रीमत्सकलराजविप० सुंदरकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ ७ ॥ ततस्तदुपायंनिश्चित्याहोद्बंधनेनवेति ॥ १ ॥

उद्बंधनसाधनमाह दीर्घावेणीति अथानंतरंएवंमरणायनिश्चितबुद्धिजानकींविलोक्येत्यन्वयः ॥ २ ॥ किंचिद्विचार्यअयंवचनावसरइतिनि श्चित्यसूक्ष्मरूपःसन्जानक्यास्तस्याएवश्रोत्रगंयथाभवतितथाशनैःशनैरभाषतेत्यन्वयः ॥ ३ ॥ तद्वचआह इक्ष्वाक्विति ॥ ४ ॥ लक्षणैःसामु द्रिकोक्तोत्तमलक्षणैः शत्रुहाशत्रुघ्नाख्यइत्यर्थः ॥ ५ ॥ ६ ॥ रावणेननीतेत्यन्वयः ॥ ७ ॥ मार्गमाणःअन्वेषयन् ॥ ८ ॥ दिवंस्वर्लोकंतल्लोकवा

दीर्घावेणीममात्यर्थमुद्बंधायभविष्यति ॥ एवंनिश्चितबुद्धिंतांमरणायाथजानकीं ॥ २ ॥ विलोक्यहनुमान्किंचि द्विचार्यैतदभाषत ॥ शनैःशनैःसूक्ष्मरूपोजानक्याःश्रोत्रगंवचः ॥ ३ ॥ इक्ष्वाकुवंशसंभूतोराजादशरथोमहान् ॥ अ योध्याधिपतिस्तस्यचत्वारोलोकविश्रुताः ॥ ४ ॥ पुत्रादेवसमाःसर्वेलक्षणैरुपलक्षिताः ॥ रामश्चलक्ष्मणश्चैवभरत श्चैवशत्रुहा ॥ ५ ॥ ज्येष्ठोरामःपितुर्वाक्याद्दंडकारण्यमागतः ॥ लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह ॥ ६ ॥ उ वासगौतमीतीरेपंचवट्यांमहामनाः ॥ तत्रनीतामहाभागासीताजनकनंदिनी ॥ ७ ॥ रहितेरामचंद्रेणरावणेन दुरात्मना ॥ ततोरामोतिदुःखार्तोमार्गमाणोऽथजानकीं ॥ ८ ॥ जटायुषंपक्षिराजमपश्यत्पतितंभुवि ॥ तस्मैद त्वादिवंशीघ्रमृष्यमूकमुपागमत् ॥ ९ ॥ सुग्रीवेणकृतामैत्रीरामस्यविदितात्मनः ॥ तद्भार्याहारिणंहत्वावालिनं रघुनंदनः ॥ १० ॥ राज्येभिषिच्यसुग्रीवंमित्रकार्यंचकारसः ॥ सुग्रीवस्तुसमानाय्यवानरान्वानरप्रभुः ॥ ११ ॥ प्रेषयामासपरितोवानरान्परिमार्गणे ॥ सीतायास्तत्रचैकोऽहंसुग्रीवसचिवोहरिः ॥ १२ ॥

समितियावत् ॥ ९ ॥ रामस्यसंकल्पमात्रात्सर्वसाधकस्यनवानरमैत्र्याःप्रयोजनमित्यौद्धत्यपरिहारायसुग्रीवेणकृतेत्युक्तंनतुरामेणकृतेति तद्भार्याहारिणंसुग्रीवभार्याहारिणं ॥ १० ॥ मित्रकार्यंसुग्रीवकृतमित्रत्वकार्यं सहायभूतान्समानीयनानापर्वतादिभ्योदूतैर्वानरान्किष्किंधां समानाय्य ॥ ११ ॥ तान्वानरान्सीतायाःपरिमार्गणेतन्निमित्तंपरितःप्रेषयामासेत्यन्वयः ॥ १२ ॥

समुद्रमुल्लंघ्यलंकानगरींदृष्ट्वातत्रतत्रजानकींविचिन्वन्अन्वेषयन्शनैःक्रमेणाशोकवनिकांदृष्ट्वातत्रतांविचिन्वन्शिंशपातरुंदृष्टवान् अत्रशिंशपामूलेजानकीमद्राक्षमतोऽत्रागतोहंकृतकृत्यःसंवृत्तइतिशेषः ॥ १३ ॥ १४ ॥ १५ ॥ वायुनेति तस्यजगत्क्रियासाक्षित्वात्तेनकथितत्वसंभावना ॥ १६ ॥ स्वप्नोवेत्यादिविकल्पत्रयंसत्यस्वप्नभ्रमातिरिक्तंकिंचित्कर्तृकंप्रमाजनकंवाक्यमित्यर्थः तत्रदुःखहेतुनानिद्राभावात्स्वप्न

संपातिवचनाच्छीघ्रमुल्लंघ्यशतयोजनं ॥ समुद्रंनगरींलंकांविचिन्वन्जानकींशुभां ॥ १३ ॥ शनैरशोकवनिकांविचिन्वन्शिंशपातरुं ॥ अद्राक्षंजानकीमत्रशोचंतींदुःखसंप्लुतां ॥ १४ ॥ रामस्यमहिषींदेवींकृतकृत्योहमागतः ॥ इत्युक्त्वोपररामाथमारुतिर्बुद्धिमत्तरः ॥ १५ ॥ सीताक्रमेणतत्सर्वंश्रुत्वाविस्मयमाययौ ॥ किमिदंमेश्रुतंव्योम्निवायुनासमुदीरितं ॥ १६ ॥ स्वप्नोवामेमनोभ्रांतिर्यदिवासत्यमेवतत् ॥ निद्रामेनास्तिदुःखेनजानाम्येतत्कुतोभ्रमः ॥ १७ ॥ येनमेकर्णपीयूषंवचनंसमुदीरितं ॥ सदृश्यतांमहाभागःप्रियवादीममाग्रतः ॥ १८ ॥ श्रुत्वातज्जानकीवाक्यंहनुमान्पत्रखंडतः ॥ अवतीर्यशनैःसीतापुरतःसमवस्थितः ॥ १९ ॥ कलविंकप्रमाणांगोरक्तास्यःपीतवानरः ॥ ननामशनकैःसीतांप्रांजलिःपुरतःस्थितः ॥ २० ॥ दृष्ट्वातंजानकीभीतारावणोयमुपागतः ॥ मांमोहयितुमायातोमाययावानराकृतिः ॥ २१ ॥

स्यासंभवः भ्रमोपिनेत्याह जानाम्येतत् एतत्पदार्थजातंयथास्थितस्वरूपेणजानामिअतोनभ्रमसंभवः यद्वाभ्रांतःस्वाज्ञानेभ्रमत्वंनविकल्पयतिममचतथाविकल्पोतोनभ्रमइतिभावः ॥ १७ ॥ तस्मात्सत्यत्वमेवनिश्चित्याह येनेति सममाग्रतोदृश्यतां ममाऽग्रतोभूत्वात्मानंदर्शयत्वित्यर्थः ॥ १८ ॥ पत्रखंडतः पत्रसमूहात् ॥ १९ ॥ भाषायांचिमणाचिमणीकलविंकश्चटकः चटकःकलविंकःस्यात्तस्यस्त्रीचटकातयोः पुमपत्येचाटकैरस्त्र्यपत्येचटकैवहिइत्यमरः पीतवर्णोवानरःपीतवानरः ॥ २० ॥ २१ ॥

॥ २२ ॥ शंकांरावणत्वशंकां परमात्मनइतितःस्वरूपाभिज्ञत्वेनतद्दासत्वसत्यताप्रत्यायनाय ॥ २३ ॥ २४ ॥ २५ ॥ यथात्वंदासोहमितिभाषसेतथावानरमनुष्ययोःसंगतिःप्रतीयतेसात्रकथंघटतइत्यर्थः ॥ २६ ॥ शबर्येति भगवतात्वद्वृत्तांतेशबरींप्रतिपृष्टेसतिसुग्रीवसमीपं



इत्येवंचिंतयित्वासातूष्णीमासीदधोमुखी ॥ पुनरप्याहतांसीतांदेवियत्त्वंविशंकसे ॥ २२ ॥ नाहंतथाविधोमातस्त्यजशंकांमयिस्थितां ॥ दासोऽहंकोशलेंद्रस्यरामस्यपरमात्मनः ॥ २३ ॥ सचिवोऽहंहरींद्रस्यसुग्रीवस्यशुभप्रदे ॥ वायोःपुत्रोऽहमखिलप्राणभूतस्यशोभने ॥ २४ ॥ तच्छ्रुत्वाजानकीप्राहहनूमंतंकृतांजलिं ॥ वानराणांमनुष्याणांसंगतिर्घटतेकथं ॥ २५ ॥ यथात्वंरामचंद्रस्यदासोहमितिभाषसे ॥ तामाहमारुतिःप्रीतोजानकींपुरतःस्थितः ॥ २६ ॥ ऋष्यमूकमगाद्रामःशबर्यानोदितःसुधीः ॥ सुग्रीवोऋष्यमूकस्थोदृष्टवान्रामलक्ष्मणौ ॥ २७ ॥ भीतोमांप्रेषयामासज्ञातुंरामस्यत्वद्गतं ॥ ब्रह्मचारिवपुर्धृत्वागतोहंरामसन्निधिं ॥ २८ ॥ ज्ञात्वारामस्यसद्भावंस्कंधोपरिनिधायतौ ॥ नीत्वासुग्रीवसामीप्यंसख्यंचाकरवंतयोः ॥ २९ ॥ सुग्रीवस्यत्दृताभार्यावालिनातंरघूत्तमः ॥ जघानैकेनबाणेनततोराज्येभ्यषेचयत् ॥ ३० ॥ सुग्रीवंवानराणांसप्रेषयामासवानरान् ॥ दिग्भ्योमहाबलान्वीरान्भवत्याःपरिमार्गणे ॥ ३१ ॥ गच्छंतंराघवोदृष्ट्वामामभाषतसादरं ॥ ३२ ॥ त्वयिकार्यमशेषंमेस्थितंमारुतनंदन ॥ ब्रूहिमेकुशलंसर्वंसीतायैलक्ष्मणस्यच ॥ ३३ ॥

गच्छससीतामार्गणंकरिष्यतीतितयोक्तइत्यर्थः ॥ २७ ॥ भीतोवालिप्रेरितत्वभ्रांत्या ॥ २८ ॥ तौरामलक्ष्मणौ सख्यंचअकरवंकारितवानित्यर्थः अंतर्भावितण्यर्थः ॥ २९ ॥ तंवालिनंजघान वानराणांराज्येभ्यषेचयत्सुग्रीवमित्यन्वयः ॥ ३० ॥ ससुग्रीवोभवत्याःपरिमार्गणेतन्निमित्तंवानरान्प्रेषयामास ॥ ३१ ॥ ३२ ॥ अशेषंकार्यंत्वयिस्थितंत्वमेवसकलकार्यसाधनेसमर्थः मेमम ॥ ३३ ॥

मेएतदंगुलीयकंसीतायैपरिज्ञानार्थंरामीयएवायमितिनिश्चयार्थंदीयतां मन्नामाक्षरमुद्रितंमन्नामाक्षरमुद्रयायुतं ॥ ३४॥ ३५ ॥ नमस्कृत्वा मुद्रिकांददौ पुनर्नमस्कृत्वाचदूरात्स्थितः अनेनदानवेलायांकिंचित्समीपमुपसृतइतिज्ञायते ॥ ३६ ॥ मुद्रिकांदृष्ट्वाप्रमुदिताजाता ततःशिरसाधृत्वास्रवदानंदनेत्रजाजातास्रवंतिआनंदेननेत्रजान्यश्रूणियस्याःसा ॥३७॥ कपेमुद्रिकारक्षणाद्बुद्धिमांस्त्वंमेप्राणदातासि राघवेभक्तोऽसि तस्यप्रियकारीचासि अतोराघवस्यतवैवविश्वासोस्तीतिमन्येच ॥ ३८ ॥विश्वास्यतांयुक्त्यासाधयति नोचेत्त्वयिविश्वासश्चेन्नस्यात्तदान्य

अंगुलीयकमेतन्मेपरिज्ञानार्थमुत्तमं ॥सीतायैदीयतांसाधुमन्नामाक्षरमुद्रितं॥ ३४॥इत्युक्त्वाप्रददौमह्यंकराग्रादंगुलीयकं॥ प्रयत्नेनमयानीतंदेविपश्यांगुलीयकं ॥ ३५ ॥ इत्युक्त्वाप्रददौदेव्यैमुद्रिकांमारुतात्मजः ॥ नमस्कृत्वास्थितोदूराद्बद्धांजलिपुटोहरिः॥३६॥ दृष्ट्वासीताप्रमुदितारामनामांकितांतदा॥ मुद्रिकांशिरसाधृत्वास्रवदानंदनेत्रजा॥३७॥कपेमेप्राणदातात्वंबुद्धिमानसिराघवे॥भक्तोऽसिप्रियकारीत्वंविश्वासोऽस्तितवैवहि॥३८॥ नोचेन्मत्सन्निधिंचान्यंपुरुषंप्रेषयेत्कथं॥हनूमन्दृष्टमखिलंममदुःखादिकंत्वया ॥ ३९ ॥सर्वंकथयरामाययथामेजायतेदया॥मासद्वयावधिप्राणाःस्थास्यंतिममसत्तम॥४० ॥नागमिष्यतिचेद्रामोभक्षयिष्यतिमांखलः॥ अतःशीघ्रंकपींद्रेणसुग्रीवेणसमन्वितः ॥ ४१ ॥वानरानीकपैःसार्धंहत्वारावणमाहवे ॥ सपुत्रंसबलंरामोयदिमांमोचयेत्प्रभुः॥ ४२ ॥ तत्तस्यसदृशंवीर्यंवीरवर्णयवर्णितं॥ यथामांतारयेद्रामोहत्वाशीघ्रंदशाननं ॥ ४३ ॥

मविश्वस्तंपुरुषरूपंत्वांकथंमत्सन्निधिंप्रेषयेत् ॥ ३९ ॥ यथामेमयिराघवस्यदयाजायतेतथासर्वंराक्षसीकृततर्जनादिकथयेत्यर्थः मासद्वयेति अग्रेमरणमेव त्वदग्रेएवरावणेनतथाप्रतिज्ञातत्वादितिभावः ॥ ४० ॥ तदेवाह नागमिष्यतीति ॥ ४१ ॥ वानरानीकपैःसार्धमत्रागत्यरावणमुक्तविशेषणंहत्वायदिमांप्रभुर्मोचयेत्तत्कृतबंधनादितिशेषः ॥ ४२ ॥ तत्तदा वीरवर्णय ब्राह्मणैश्चवर्णितंतस्यवीर्यंसदृशंभवेत् यथावर्णितंभवेत् अन्यथाविपरीतमेवेत्यर्थः ॥ ४३ ॥

अतस्तथेति वाचावचनकृतरामप्रणया धर्मंबंदीमोक्षजं यथायथारूपोदृष्टस्तथाजानेशीघ्रमागमिष्यतीत्यादि ॥ ४४ ॥ ४५ ॥ तंहनूमंतं जानकीआह किमाह रामइत्यादि ॥ ४६ ॥ हनूमानुत्तरयति मेस्कंधावित्यादि ॥४७॥ आततंविस्तीर्णं ॥ ४८ ॥ ४९ ॥ भ्रात्रासहरामंद्रष्टुं



तथायतस्वहनुमन्वाचाधर्ममवाप्नुहि ॥ हनूमानपितामाहदेविदृष्टोयथामया ॥ ४४ ॥ रामःसलक्ष्मणःशीघ्रमागमिष्यतिसायुधः ॥ सुग्रीवेणससैन्येनहत्वादशमुखंबलात् ॥ ४५ ॥ समानेष्यतिदेवित्वामयोध्यांनात्रसंशयः ॥ तमाहजानकीरामःकथंवारिधिमाततं ॥ ४६ ॥ तीर्त्वायास्यत्यमेयात्मावानरानीकपैःसह ॥ हनूमानाहमेस्कंधावारुह्यपुरुषर्षभौ ॥ ४७ ॥ आयास्यतःससैन्यश्वसुग्रीवोवानरेश्वरः ॥ विहायसाक्षणेनैवतीर्त्वावारिधिमाततं ॥ ४८ ॥ निर्दहिष्यतिरक्षौघांस्त्वत्कृतेनात्रसंशयः ॥ अनुज्ञांदेहिमेदेविगच्छामित्वरयान्वितः ॥ ४९ ॥ द्रष्टुंरामंसहभ्रात्रात्वरयामितवांतिकं ॥ देविकिंचिदभिज्ञानंदेहिमेयेनराघवः ॥ ५० ॥ विश्वसेन्मांप्रयत्नेनततोगंतासमुत्सुकः ॥ ततःकिंचिद्विचार्याथसीताकमललोचना ॥ ५१ ॥ विमुच्यकेशपाशांतेस्थितंचूडामणिंददौ ॥ अनेनविश्वसेद्रामस्त्वांकपींद्रसलक्ष्मणः ॥ ५२ ॥ अभिज्ञानार्थमन्यच्चवदामितवसुव्रत ॥ चित्रकूटगिरौपूर्वमेकदारहसिस्थितः ॥ मदंकेशिरआधायनिद्रातिरघुनंदनः ॥ ५३ ॥ ऐंद्रःकाकस्तदागत्यनखैस्तुंडेनचासकृत् ॥ मत्पादांगुष्ठमारक्तंविददारामिषाशया ॥ ५४ ॥

गच्छामि गत्वाचतवांतिकमागंतुंत्वरयामि राघवःयथामांविश्वसेत्जानकीसर्वथादृष्टवानितितथाकिंचिदभिज्ञानंदेहि ॥ ५० ॥ ततोहंसमुत्सुकःरामदर्शनोत्सुकः प्रयत्नेनत्वद्दत्ताभिज्ञानंरक्षन्गंताराघवसमीपमितिशेषः किंचिद्विचार्यतद्वचसोयुक्तत्वंविचार्य ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ऐंद्रःइंद्रलोकस्थःकाकरूपधरइंद्रपुत्रइत्यर्थः आमिषंमांसं ॥ ५४ ॥

एततू्त्वत्पादांगुष्ठविदारणरूपं ॥ ५५ ॥ मांपुनःपुनरभिद्रवंतमित्यन्वयः रक्तमास्यंनखतुंडंयस्यतं ॥ ५६ ॥ ज्वलत्ततूअभिमंत्रितंतृणंवायस
मभ्यद्रवत् ॥ ५७ ॥ सवायसोऽपिभीतःलोकानूऐंद्रब्रह्मांतानूभ्रमंस्तत्रतैरपियदारक्षितुंशक्योनाभवत्तदा ॥ ५८ ॥ रामपदाग्रेपतत् ॥ ५९ ॥

ततोरामःप्रबुध्याथदृष्ट्वापादंकृतव्रणं ॥ केनभद्रेकृतंचैतद्विप्रियंमेदुरात्मना॥५५॥ इत्युक्त्वापुरतोऽपश्यद्वायसंमां
पुनःपुनः॥ अभिद्रवंतंरक्तास्यनखतुंडंचुकोपह ॥ ५६ ॥ तृणमेकमुपादायदिव्यास्त्रेणाभियोज्यतत् ॥ चिक्षेप
लीलयारामोवायसोपरितज्ज्वलत्॥ ५७॥ अभ्यद्रवद्वायसश्चभीतोलोकान्भ्रमन्पुनः॥ इंद्रब्रह्मादिभिश्चापिन
शक्योरक्षितुंतदा ॥ ५८ ॥ रामस्यपादयोरग्रेऽपतद्भीत्यादयानिधेः ॥ शरणागतमालोक्यरामस्तमिदमब्रवीत् ॥
॥ ५९ ॥ अमोघमेतदस्त्रंमेदत्वैकाक्षमितोव्रज ॥ सव्यंदत्वाततःकाकएवंपौरुषवानपि ॥ ६० ॥ उपेक्षतेकिमर्थं
मामिदानींसोपिराघवः ॥ हनूमानपितामाहश्रुत्वासीतानुभाषितं ॥ ६१ ॥ देवित्वांयदिजानातिस्थितामत्ररघू
त्तमः॥ करिष्यतिक्षणाद्भस्मलंकांराक्षसमंडितां ॥ ६२॥ जानकीप्राहतंवत्सकथंत्वंयोत्स्यसेऽसुरैः॥ अतिसूक्ष्म
वपुःसर्वेवानराश्चभवादृशाः ॥ ६३॥ श्रुत्वातद्वचनंदेव्यैपूर्वरूपमदर्शयत् ॥ मेरुमंदरसंकाशंरक्षोगणविभीषणं
॥ ६४॥ दृष्ट्वासीताहनूमंतंमहापर्वतसन्निभं॥ हर्षेणमहताविष्टाप्राहतंकपिकुंजरं॥ ६५॥

ततःकाकोगतइतिशेषः एवंपौरुषवानपिसराघवःइदानीमपिएवमवस्थायामपियदुपेक्षतेतत्किमर्थं ॥ ६० ॥ ६१ ॥ जानाति वर्त्तमान
सामीप्येलट् ज्ञास्यतीत्यर्थः ॥ ६२ ॥ यथात्वंसूक्ष्मवपुस्तथासर्वेऽपिवानराभवादृशाःभवद्वदेवसूक्ष्मवपुषइतिमहावपुर्भीराक्षसैर्युद्धमसंभावि
तमित्यर्थः ॥ ६३ ॥ श्रुत्वातद्वचनंसीतायाइतिशेषः देव्यैसीतायै ॥ ६४ ॥ ६५ ॥

त्वांराक्षस्योद्रक्ष्यंति दृष्ट्वाचरावणंकथयिष्यंति एवंसतिकोवेदकिंभावीत्याशयः अतोरामांतिकंद्रुतंगच्छतेपंथाःशुभोस्त्वितिशेषः ॥ ६६ ॥ कपिर्जानकींप्राहाहंबुभुक्षितोऽस्मि अतस्त्वदर्शनान्ममपारणमुचितमितिशेषः नन्वहंरिक्ताकेनत्वांपारयामीतिशंकायामाह तवदृष्टौस्थितैःफलैर्मेपारणाभविष्यतीत्यर्थः ॥ ६७ ॥ ततस्तयाप्रस्थापितोजानकींप्रणिपत्यागच्छत् अनुचिंतयत्अन्वचिंतयत् अडभावआर्षः ॥ ६८ ॥







समर्थोऽसिमहासत्वद्रक्ष्यंतित्वांमहाबलं ॥ राक्षसस्यस्तेशुभःपंथागच्छरामांतिकंद्रुतं ॥ ६६ ॥ बुभुक्षितःकपिःप्राहदर्शनात्पारणंमम ॥ भविष्यतिफलैःसर्वैस्तवदृष्टौस्थितैर्हिमे ॥ ६७ ॥ तथेत्युक्तःसजानक्याभक्षयित्वाफलंकपिः ॥ ततःप्रस्थापितोऽगच्छज्जानकींप्रणिपत्यसः ॥ किंचिद्दूरमथोगत्वास्वात्मन्येवानुचिंतयत् ॥ ६८ ॥ कार्यार्थमागतोदूतःस्वामिकार्याविरोधतः ॥ अन्यत्किंचिदसंपाद्यगच्छत्यधमएवसः ॥ ६९ ॥ अतोऽहंकिंचिदन्यच्चकृत्वादृष्ट्वाथरावणं ॥ संभाष्यचततोरामदर्शनार्थंव्रजाम्यहं ॥ ७० ॥ इतिनिश्चित्यमनसावृक्षखंडान्महाबलः ॥ उत्पाट्याशोकवनिकांनिर्वृक्षामकरोत्क्षणात् ॥ ७१ ॥ सीताश्रयनगंत्यक्त्वावनंशून्यंचकारसः ॥ उत्पाटयंतंविपिनंदृष्ट्वाराक्षसयोषितः ॥ ७२ ॥ अपृच्छन्जानकींकोसौवानराकृतिरुद्भटः ॥ ७३ ॥ जानक्युवाच भवत्यएवजानंतिमायांराक्षसनिर्मितां ॥ नाहमेनंविजानामिदुःखशोकसमाकुला ॥ ७४ ॥ इत्युक्तास्त्वरितंगत्वाराक्षस्योभयपीडिताः ॥ हनूमताकृतंसर्वंरावणायन्यवेदयन् ॥ ७५ ॥

अन्यत्किंचित्स्वाम्याज्ञप्तादधिकमुत्कृष्टंकर्मेत्यर्थः ॥ ६९ ॥ अन्यत्किंचिद्वीरकर्म रावणंदृष्ट्वासंभाष्यचेत्यन्वयः ॥ ७० ॥ वृक्षखंडान्वृक्षसमूहान्उत्पाट्यनिर्वृक्षामकरोत् ॥ ७१ ॥ सीताश्रयनगंशिंशपारूपं शून्यंवृक्षैरितिशेषः विपिनंवनवृक्षान् ॥ ७२ ॥ ७३ ॥ दुःखशोकाभ्यांयुक्ताहमेनंनजानामि ॥ ७४ ७५ ॥

वानराकृतिदेहभृत्वानरदेहसदृशदेहइत्यर्थः वानरेएवंपराक्रमासंभवादेवमुक्तिः अशोकवनिकांक्षणादुत्पाट्यतैरेवचैत्यप्रासादंबभंज ॥७६॥ तस्थिवान्स्थितः महाप्रियंमहच्चतदप्रियंचेत्यर्थः ॥ ७७ ॥ नियुतंदशकोट्यः निर्भग्नोयश्चैत्यप्रासादस्तस्यप्रथमंयदंतरंप्रथमायाभूमिस्तत्रसं

देवकश्चिन्महासत्वोवानराकृतिदेहभृत् ॥ सीतयासहसंभाष्यत्वशोकवनिकांक्षणात् ॥ उत्पाट्यचैत्यप्रासादंबभं
जामितविक्रमः ॥ ७६ ॥ प्रासादरक्षिणःसर्वान्हत्वातत्रैवतस्थिवान् ॥ तच्छ्रुत्वातूर्णमुत्थायवनभंगंमहाप्रियं ॥
॥ ७७ ॥ किंकरान्प्रेषयामासनियुतंराक्षसाधिपः ॥ निर्भग्नचैत्यप्रासादप्रथमांतरसंस्थितः ॥ ७८ ॥ हनुमान्पर्व
ताकारोलोहस्तंभकृतायुधः ॥ किंचिल्लांगूलचलनोरक्तास्योभीषणाकृतिः ॥ ७९ ॥ आपतंतंमहासंघंराक्षसानांद
दर्शसः ॥ चकारसिंहनादंचश्रुत्वातेमुमुहुर्भृशं ॥ ८० ॥ हनूमंतमथोदृष्ट्वाराक्षसाभीषणाकृतिं ॥ निर्जघ्नुर्विविधा
स्त्रौघैःसर्वराक्षसघातिनं ॥ ८१ ॥ ततउत्थायहनुमान्मुद्गरेणसमंततः ॥ निष्पिपेषक्षणादेवमशकानिवयूथपः ॥
॥ ८२ ॥ निहतान्किंकरान्श्रुत्वारावणःक्रोधमूर्च्छितः ॥ पंचसेनापतींस्तत्रप्रेषयामासदुर्मदान् ॥ ८३ ॥ हनूमान
पितान्सर्वान्लोहस्तंभेनचाहनत् ॥ ततःक्रुद्धोमंत्रिसुतान्प्रेषयामाससप्तसः ॥ ८४ ॥ आगतानपितान्सर्वान्पूर्व
वद्वानरेश्वरः ॥ क्षणान्निःशेषतोहत्वालोहस्तंभेनमारुतिः ॥ ८५ ॥ पूर्वस्थानमुपाश्रित्यप्रतीक्षन्राक्षसान्स्थितः ॥
ततोजगामबलवान्कुमारोक्षःप्रतापवान् ॥ ८६ ॥

स्थितः ॥ ७८ ॥ लोहस्तंभएवकृतमायुधंयेनसः किंचिल्लांगूलचलनइतिस्वभावोक्तिः ॥ ७९ ॥ तेकिंकरानामराक्षसाः ॥ ८० ॥ भीषणाकृतिहनूमंतंदृष्ट्वेत्यन्वयः ॥ ८१ ॥ मुद्गरोत्रलोहस्तंभः ॥ ८२ ॥ ८३ ॥ सरावणः ॥ ८४ ॥ ८५ ॥ राक्षसान्रावणप्रेषणीयान् ॥ ८६ ॥

आकाशेप्रथममुत्पपाततत्तोगगनादवतरन्मूर्ध्निमुद्गरेणाताडयत् ॥ ८७ ॥ ८८ ॥ ८९ ॥ इंद्रजितंप्रतित्वंतंहंतुंगच्छेतिभंग्यंतरेणाह पुत्रेति हत्वे त्युक्त्वाहंतुमशक्यत्वंविचार्याह बध्वावेति ॥९०॥ दुःखितंवचःआज्ञाकर्तुरभावइवेतिभावः ॥९१॥ ब्रह्मपाशतःब्रह्मास्त्राभिमंत्रितैःपाशैरित्यर्थः

तमुत्पपातहनुमान्दृष्ट्वाकाशेसमुद्गरः ॥ गगनात्त्वरितोमूर्ध्निमुद्गरेणव्यताडयत् ॥ ८७ ॥ हत्वातमक्षंनिःशेषंबलं सर्वंचकारसः ॥ ८८ ॥ ततःश्रुत्वाकुमारस्यवधंराक्षसपुंगवः ॥ क्रोधेनमहताविष्टइंद्रजेतारमब्रवीत् ॥ ८९ ॥ पुत्र गच्छाम्यहंतत्रयत्रास्तेपुत्रहारिपुः ॥ हत्वातमथवाबध्वाआनयिष्यामितेंऽतिकं ॥ ९० ॥ इंद्रजित्पितरंप्राहत्यज शोकंमहामते ॥ मयिस्थितेकिमर्थंत्वंभाषसेदुःखितंवचः ॥ ९१ ॥ बध्वानेष्येद्रुतंतातवानरंब्रह्मपाशतः ॥ इत्यु क्त्वारथमारुह्यराक्षसैर्बहुभिर्वृतः ॥ ९२ ॥ जगामवायुपुत्रस्यसमीपंवीरविक्रमः ॥ ततोतिगर्जितंश्रुत्वास्तंभमु घम्यवीर्यवान् ॥ ९३ ॥ उत्पपातनभोदेशंगरुत्मानिवमारुतिः ॥ ततोभ्रमंतंनभसिहनूमंतंशिलीमुखैः ॥ ९४ ॥ विध्वातस्यशिरोभागमिषुभिश्चाष्टभिःपुनः ॥ हृदयंपादयुगलंषड्भिरेकेनवालधिं ॥ ९५ ॥ भेदयित्वाततोघोरंसिं हनादमथाकरोत् ॥ ततोऽतिहर्षाद्धनुमांस्तंभमुघम्यवीर्यवान् ॥ ९६ ॥ जघानसारथिंसाश्वंरथंचाचूर्णयत्क्षणा त् ॥ ततोऽन्यंरथमादायमेघनादोमहाबलः ॥ ९७ ॥ शीघ्रंब्रह्मास्त्रमादायबध्वावानरपुंगवं ॥ निनायनिकटंरा ज्ञोरावणस्यमहाबलः ॥ ९८ ॥ यस्यनामसततंजपंतियेऽज्ञानकर्मकृतबंधनंक्षणात् ॥ सद्यएवपरिमुच्यतत्पदं यांतिकोटिरविभासुरंशिवं ॥ ९९ ॥

॥ ९२ ॥ ९३ ॥ हनूमंतंशिलीमुखैर्विध्वा सिंहनादमकरोदित्यन्वयः ॥ ९४ ॥ विध्वेत्यस्यैवविवरणंशिरोभागमित्यादिभेदयित्वेत्यंतं ॥ ९५॥ सिंहनादमकरोत् इंद्रजिदितिशेषः ॥९६॥ ॥९७॥९८॥ यस्यरामस्यनामधेयंप्राणिनोजपंति तेऽज्ञानजन्यकर्मकृतबंधनंसंसारंपरिमुच्यसद्यएवशिवाख्यंतत्पदंसच्चिदानंदाख्यंयांति ॥९९॥

तस्यरामस्यपदांबुजध्याता मारुतिर्यतः सदैवनिर्मुक्तानिसमस्तानिबंधनानिकर्माणियस्यतादृशोभवति अतस्तस्यपाशैरितरैर्वाबंधनैः किं दुःखमितिशेषः ॥ १०० ॥ इतिश्रीमत्सकलराज० सेतौसुंदरकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥ धृतंस्वहस्तेनपाशबंधनंयेनतादृशं विशेषेणभीतवन्नगरंलंकांविलोकयंतं ईक्षितुंकपींद्रंद्रष्टुं तमेवानुपश्चाद्यांतइतिपौरविशेषणं ॥ १ ॥ क्षणमात्रसंगमंक्षणमात्रंसंगमःस्वसंबंधोयस्यतादृशमेनंहनूमंतं ब्रह्मास्त्रंकर्तृकृत्वा ब्रह्मवरेणत्वांमदस्त्रंनपीडयिष्यतीतिब्रह्मदत्तवरेणसत्वरंगतं हनूमान्तद्रम

तस्यैवरामस्यपदांबुजंसदाहृत्पद्ममध्येसुनिधायमारुतिः ॥ सदैवनिर्मुक्तसमस्तबंधनः किंतस्यपाशैरितरैश्चबंधनैः ॥ १०० ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ ७ ॥ ॥ ७ ॥ यांतंकपींद्रंधृतपाशबंधनंविलोकयंतंनगरंविभीतवत् ॥ अताडयन्मुष्टितलैःसुकोपनाःपौराःसमंतादनुयांतमीक्षितुं ॥ १ ॥ ब्रह्मास्त्रमेनंक्षणमात्रसंगमंकृत्वागतंब्रह्मवरेणसत्वरं ॥ ज्ञात्वाहनूमानपिफल्गुरज्जुभिर्धृतोययौकार्यविशेषगौरवात् ॥ २ ॥ सभांतरस्थस्यचरावणस्यतंपुरोनिधायाहबलारिजित्तदा ॥ बद्धोमयाब्रह्मवरेणवानरः समागतोऽनेनहतामहासुराः ॥ ३ ॥ यद्युक्तमत्रार्यविचार्यमंत्रिभिर्विधीयतामेषनलौकिकोहरिः ॥ ततोविलोक्याहसराक्षसेश्वरःप्रहस्तमग्रेस्थितमंजनाद्रिभं ॥ ४ ॥

नंज्ञात्वाऽपिफल्गुतार्णज्जुभिर्धृतोऽपिकार्यविशेषस्यकर्तव्यरावणदर्शनादिरूपस्यगौरवाद्बद्धइवययावित्यर्थः ॥ २ ॥ सभांतरस्थस्यसभामध्यस्थस्य तंहनूमंतं बलारिजित्इंद्रजिद्ब्रह्मवरेणब्रह्मवरलब्धब्रह्मास्त्रेणसमागतः बंधपीडामसहिष्णुःस्वयमेवागतइत्यर्थः तद्वृत्तांतमाह अनेनेत्यादि ॥ ३ ॥ एषहरिर्नलौकिकइतितत्पराक्रमकथनं अंजनाद्रिभंअंजनाचलवत्श्यामकांतिं ॥ ४ ॥

कुतःकस्माद्देशादागतइतिशेषः ॥ ५ ॥ विमोक्ष्यसेअस्माद्बंधनात्प्राणभयाच्चेतिशेषः अखिलराजसन्निधौअखिललोकराजस्यरावणस्यसंनिधावित्यर्थः ॥ ६ ॥ ७ ॥ देवगणादीनाममित्रशत्रो आदिनानागादिसंग्रहः अशेषहृत्स्थितेः अशेषहृदयेषुस्थितिर्यस्य सर्वांतर्यामिण इत्यर्थः अनेनतवततःकथमपिनमोक्षइतिसूचितं किंचत्वन्मृत्युंचिकीर्षोस्तस्यैवप्रेरणयासीताहृतेतिसूचितं ॥ ८ ॥ सराघवःसुग्रीवमैत्रींकृ



प्रहस्तपृच्छैनमसौकिमागतःकिमत्रकार्यंकुतएववानरः ॥ वनंकिमर्थंसकलंविनाशितंहताःकिमर्थंममराक्षसाबलात् ॥ ५ ॥ ततःप्रहस्तोहनुमंतमादरात्पप्रच्छकेनप्रहितोऽसिवानर ॥ भयंचतेमास्तुविमोक्ष्यसेमयासत्यंवदस्वाखिलराजसन्निधौ ॥ ६ ॥ ततोऽतिहर्षात्पवनात्मजोरिपुंनिरीक्ष्यलोकत्रयकंटकासुरं ॥ वक्तुंप्रचक्रेरघुनाथसत्कथांक्रमेणरामंमनसास्मरन्मुहुः ॥ ७ ॥ शृणुस्फुटंदेवगणाद्यमित्रहेरामस्यदूतोऽहमशेषहृत्स्थितेः ॥ यस्याखिलेशस्यहृताधुनात्वयाभार्यास्वनाशायशुनेवसद्धविः ॥ ८ ॥ सराघवोभ्येत्यमतंगपर्वतंसुग्रीवमैत्रीमनलस्यसन्निधौ ॥ कृत्वैकबाणेननिहत्यवालिनंसुग्रीवमेवाधिपतिंचकारतं ॥ ९ ॥ सवानराणामधिपोमहाबलीमहाबलैर्वानरयूथकोटिभिः ॥ रामेणसार्धंसहलक्ष्मणेनभोप्रवर्षणेऽमर्षयुतोऽवतिष्ठते ॥ १० ॥ संचोदितास्तेनमहाहरीश्वराधरासुतांमार्गयितुंदिशोदश ॥ तत्राहमेकःपवनात्मजःकपिःसीतांविचिन्वञ्छनकैःसमागतः ॥ ११ ॥



त्वावालिनंनिहत्यतंप्रसिद्धपराक्रमंसुग्रीवमेववानराणामधिपतिंचकार अनेनरामस्यकृतोपकारत्वात्तन्निमित्तंसुग्रीवःसर्ववानरैर्लंकांरोत्स्यत्येवेतिसूचितं मित्रभार्याहारिणंत्वत्तोऽप्यधिकबलंवालिनंयोहतवान् सत्वांसर्वथाहनिष्यत्येवेतिचसूचितं ॥ ९ ॥ भोइतिरावणसंबोधनं प्रवर्षणेतदाख्येपर्वतेऽमर्षयुतस्त्वद्विषयक्रोधयुतोऽवतिष्ठते ॥ १० ॥ धरासुतांजानकीं अनेनकिमागतइत्यस्यचोत्तरंदत्तं ॥ ११ ॥

वननाशकारणमाह कपित्वादिति चंचलस्वभावत्वादित्यर्थः राक्षसहननहेतुमाह दृष्ट्वेति ॥ १२ ॥ वपुःस्वशरीरंपरिरक्षितं तत्रहेतुःप्रियोहीति ॥ १३ ॥ त्यक्त्वाकागतंब्रह्मास्त्रमितिशेषः बद्धइवागतः तथागमनेहेतुर्हितंप्रवक्तुकामइति तवतत्प्रवचनेकिन्निमित्तमतआह करुणेति ॥ १४ ॥ विवेकतःविवेकेनसदसद्विवेकेन लोकस्यगतिधर्मात्स्वर्गोऽधर्मान्नरकइत्येवंरूपांविचार्य राक्षसींबुद्धित्यजेत्यर्थः संसृतेःसंसाराद्योमोक्षस्तस्य

दृष्टामयापद्मपलाशलोचनासीताकपित्वाद्विपिनंविनाशितं ॥ दृष्ट्वाततोऽहंरभसासमागतान्मांहंतुकामान्धृतचापसायकान् ॥ १२ ॥ मयाहतास्तेपरिरक्षितंवपुःप्रियोहिदेहोऽखिलदेहिनांप्रभो ॥ ब्रह्मास्त्रपाशेननिबध्यमांततःसमागमन्मेघनिनादनामकः ॥ १३ ॥ स्पृष्ट्वैवमांब्रह्मवरप्रभावतस्त्यक्त्वाकागतंसर्वमवैमिरावण ॥ तथाप्यहंबद्धइवागतोहितंप्रवक्तुकामःकरुणारसार्द्रधीः ॥ १४ ॥ विचार्यलोकस्यविवेकतोगतिंनराक्षसींबुद्धिमुपैहिरावण ॥ दैवींगतिंसंसृतिमोक्षहैतुकींसमाश्रयात्यंतहितायदेहिनः ॥ १५ ॥ त्वंब्राह्मणोत्युत्तमवंशसंभवःपौलस्त्यपुत्रोऽसिकुबेरबांधवः ॥ देहात्मबुद्ध्यापिचपश्यराक्षसोनास्यात्मबुद्ध्याकिमुराक्षसोनहि ॥ १६ ॥

हैतुकींहेतुभूतां विनयादित्वाट्ठक् ईदृशींदैवींदेवप्रोक्तांगतिमार्गंपरपीडातोनिवृत्तिरूपंमार्गंसमाश्रय देहिनःस्वस्यात्यंतहितायेत्यर्थः ॥ १५ ॥ ननुतस्मिन्मार्गेममनाधिकारइतिचेन्न ब्राह्मणत्वादिनातत्सत्वादित्याह त्वमिति उत्तमवंशसंभवत्वस्यविवरणंपौलस्त्यपुत्रोऽसीति यद्दितेदेहएवात्मेतिबुद्धिस्तथाऽपिपश्यविचारय त्वंराक्षसोनासि उत्तमवंशसंभवत्वेनब्राह्मणत्वादितिभावः आत्मबुध्यादेहातिरिक्तआत्मेतिबुध्याराक्षसोनहिभवसीतिकिमुवक्तव्यमितिशेषः ॥ १६ ॥

एवंसर्वथाराक्षसत्वाभावंप्रसाध्याह शरीरेति शरीरंस्थूलंबुद्धिःसूक्ष्मशरीरंइंद्रियाणिचक्षुरादीनितज्जन्यादुःखसंततिराधिव्याधिजा दुःखेत्यु
पलक्षणंकामादेरपि सातेतवनतेषांचित्तधर्मत्वात् त्वंचतदाश्रयश्चित्तंनेतिशेषपूरणेनव्याख्येयं तस्याचेतनत्वादितिभावः नन्वात्मनएवदुःखा
द्यस्तुइतिनचैवतदतआह तवनिर्विकारतःविकाराभावोनिर्विकारंततःतवविकाराभावात्दुःखादिमत्त्वेचविकारप्रसंगः एवंचात्मनोऽविक्रियत्व
प्रतिपादकश्रुतिविरोधस्ताश्चश्रुतयःपूर्वंबहुशोलिखिताः नन्वेवमहंदुःखीत्यादिप्रतीतेःकागतिस्तत्राह अज्ञानहेतोरिति स्वपतःपुरुषस्यप्रतिभा
समानस्यापिदृश्यस्ययथाऽसत्त्वंतथाआत्मस्वरूपाज्ञानरूपाद्धेतोर्भासमानायाअस्याःसंततेर्दुःखसंततेर्वस्तुतोऽसत्त्वमेवैवंचाहंदुःखीत्यादिप्रती
तिःस्वमकालिकतत्तत्प्रतीतिवद्भ्रमएवेतिभावः ॥ १७॥ नन्वेवंसत्यंवस्तुकिमपिनास्त्येवकिंअस्तीत्याह इदंतुसत्यमिति त्वत्स्वरूपंत्वित्यर्थः एतत्त

शरीरबुद्धींद्रियदुःखसंततिर्नतेनचत्वंतवनिर्विकारतः ॥ अज्ञानहेतोश्चतथैवसंततेरसत्त्वमस्याःस्वपतोहिदृश्य
वत्॥ १७॥इदंतुसत्यंतवनास्तिविक्रियाविकारहेतुर्नचतेऽद्वयत्वतः॥ यथानभःसर्वगतंनलिप्यतेतथाभवान्दे
हगतोऽपिसूक्ष्मकः॥देहेंद्रियप्राणशरीरसंगतस्त्वात्मेतिबुद्ध्याखिलबंधभाग्भवेत्॥ १८ ॥

वविक्रियानास्तिअविकारीचेतनएवैकःसत्यः ननुविकारहेत्वज्ञानमपिसत्यमेवनेत्याह तेविकारहेतुर्नचसत्यइतिशेषः तत्रहेतुमाह अद्वयत्व
तःएकमेवाद्वितीयंब्रह्मेत्यद्वैतप्रतिपादकश्रुतिविरोधात् तयाहिसतोद्वितीयस्यनिषेधइतिभावः ननुचित्तसंबंधान्ममदुःखमस्त्येवेतिचेन्नेत्याह य
थासर्वगतमपिनभःपृथिव्यादिरूपगंधादिभिर्नलिप्यतेसूक्ष्मत्वात्तथादेहगतोऽपिचित्तसमानाधिकरणोऽपियतःसूक्ष्मकोतिसूक्ष्मोतस्तद्गतदुःखा
दिभिर्वस्तुतोनलिप्यते एवंचनीलंनभइत्यादिप्रतीतिवदहंदुःखीत्यादिप्रतीतिर्भ्रमएवेतिभावः ननुतर्हिमुक्तसंसारिव्यवस्थाकिंनास्त्येवास्ती
त्याह देहेत्यादि देहोत्रसूक्ष्मःशरीरंस्थूलं तत्संगतस्तदविवेकाग्रहात् तेष्वेवयात्मबुद्धिस्तयाखिलबंधभाग्भवेत् अविवेकएवमुख्यंसंसारकारण
मितिभावः ॥ १८ ॥

ननुतर्हिमुक्तिर्दुर्लभेतिशंकायांतत्कारणमाह चिन्मात्रमिति विवेकोज्ञातएवमोक्षकारणमितितमाह तत्राद्यार्धेनात्मनिजडवैधर्म्यमुक्तं अजत्वे
नोत्पत्तिराहित्यं अक्षरत्वेनाविनाशित्वं आनंदभावस्तद्रूपः देहादौतद्वैधर्म्यमाह देहोपीति पृथिवीविकारैस्तत्परमाणुभिर्जनितइतिअनात्मा अने
नाचेतनत्वजन्यत्वादिवैधर्म्यमुक्तं प्राणोप्यात्मानयतएषोबहिर्दृश्यमानोजडोऽनिलएव सप्राणोयःप्राणःसवायुरितिश्रुतेः ॥ १९ ॥ मनोपिना
त्मेत्याह मनोपीति नोइत्यस्यात्मेतिशेषः नातस्तत्अहंकारस्यविकारः नचापिबुद्धिरिति बुद्धिरहंकारोऽपिनात्मायतःप्रकृतेर्विकारान्महतो

**चिन्मात्रमेवाहमजोहमक्षरोह्यानंदभावोहमितिप्रमुच्यते ॥ देहोऽप्यनात्मापृथिवीविकारजोनप्राणआत्मानि
लएषएवसः ॥ १९ ॥ मनोप्यहंकारविकारएवनोनचापिबुद्धिःप्रकृतेर्विकारजा ॥ आत्माचिदानंदमयोऽविका
रवान्देहादिसंघाद्व्यतिरिक्तईश्वरः ॥ २० ॥ निरंजनोमुक्तउपाधितःसदाज्ञात्वैवमात्मानमितोविमुच्यते ॥ अतोह
मात्यंतिकमोक्षसाधनंवक्ष्येशृणुष्वावहितोमहामते ॥ २१ ॥ विष्णोर्हिभक्तिःसुविशोधनंधियस्ततोभवेज्ज्ञान
मतीवनिर्मलं ॥ विशुद्धतत्त्वानुभवोभवेत्ततःसम्यग्विदित्वापरमंपदंव्रजेत् ॥ २२ ॥**

जायतइतिप्रकृतेर्विकारजा आत्मनिउक्तमेववैधर्म्यंदार्ढ्यायपुनराह आत्मेत्यादि सएवेश्वरः अनेनचेतनानेकत्वंनेतिदर्शितं ॥ २० ॥ निरंजनइ
त्यस्यैवव्याख्या सदाउपाधितोमुक्तःउपाधिभूतचित्तधर्मैर्दुःखादिभिरलिप्तइत्यर्थः एवमात्मानंज्ञात्वाइतःसंसाराद्विमुच्यते नन्वीदृशज्ञानमेव
कथंस्यात्तत्राहातोऽहमिति मोक्षस्यात्यंतिकंसाधनंनियतंसाधनमित्यर्थः ॥ २१ ॥ प्रतिज्ञातमाह विष्णोर्हीति धियश्चित्तस्य नित्यानित्यविवे
कद्वाराज्ञानंआत्माचिदानंदमयइत्यादिनोक्तं ततःतद्विषयनिदिध्यासनतः विशुद्धतत्त्वानुभवोभवेत्अपरोक्षसाक्षात्कारोभवेत् ततःपरमंपदं
ब्रह्मसायुज्यं ॥ २२ ॥

उपसंहरति अतइति यस्यभक्तिर्ज्ञानसाधनंसविष्णुरयमेव तद्बोधकेविशेषणेहरिंरमापतिमिति ननुदशरथपुत्रोयंनसइत्यत्राह प्रकृतेःपरमित्या दि दशरथपुत्रत्वादितुकल्पितमित्याशयः मौर्ख्यंअयंमनुष्यइतिबुद्धिरूपंतत्कृतांशत्रुत्वेनभावनांचविसृज्यभजस्व संप्रतियुक्तंभजनप्रकारमाह सीतामिति ॥ २३ ॥ अथव्यतिरेकमुखेनतत्त्वज्ञावनाप्रकारमाह राममिति हृदिस्थमित्यनेनांतर्यामितयाप्रेरकत्वमुक्तं सुखरूपोऽद्वितीयोम

अतोभजस्वाद्यहरिंरमापतिंरामंपुराणंप्रकृतेःपरंविभुं ॥ विसृज्यमौर्ख्यंहृदिशत्रुभावनांभजस्वरामंशरणागत प्रियं ॥ सीतांपुरस्कृत्यसपुत्रबांधवोराममंनमस्कृत्यविमुच्यसेभयात् ॥ २३ ॥ रामंपरात्मानमभावयन्जनोभ क्त्याहृदिस्थंसुखरूपमद्वयं ॥ कथंपरंतीरमवाप्नुयाज्जनोभवांबुधेर्दुःखतरंगमालिनः ॥ २४ ॥ नोचेत्त्वमज्ञानम येनवह्निनाज्वलंतमात्मानमरक्षितारिवत् ॥ नयस्यधोधःस्वकृतैश्चपातकैर्विमोक्षशंकानचतेभविष्यति ॥ २५ ॥ श्रुत्वामृतास्वादसमानभाषितंतद्वायुसूनोर्दशकंधरोऽसुरः ॥ अमृष्यमाणोऽतिरुषाकपीश्वरंजगादरक्तांतविलो चनोज्वलन् ॥ २६ ॥ कथंममाग्रेविलपस्यभीतवत्प्लवंगमानामधमोऽसिदुष्टधीः ॥ कएषरामःकतमोवनेचरो निहन्मिसुग्रीवयुतंनराधमं ॥ २७ ॥ त्वांचाद्यहत्वाजनकात्मजांततोनिहन्मिरामंसहलक्ष्मणंततः ॥ सुग्रीवमग्रे बलिनंकपीश्वरंसवानरंहन्म्यचिरेणवानर ॥ श्रुत्वादशग्रीववचःसमारुतिर्विवृद्धकोपेनदहन्निवासुरं ॥ २८ ॥

त्प्रेरकइत्येवमभावयन्नितियावत् दुःखरूपास्तरंगमालायस्यतस्य ॥ २४ ॥ नोचेत् महुल्काकरणेतेनज्वलंतमात्मानमरक्षिता लुटिरूपं किंच स्वकृतैःपातकैःसीताहरणादिभिरस्वित्आत्मानमधोधोनयसिनयिष्यसीत्यर्थेआर्षं विमोक्षशंकातत्संभावनापिनभविष्यतीत्यर्थः ॥ २५ ॥ अमृतास्वादेति तदास्वादेनसमानआस्वादोयस्यतादृशंभाषितमित्यर्थः ॥ २६ ॥ वनेचरःसुग्रीवः केषांमध्येतिशयितोनकेषामपीत्यर्थः ॥ २७ ॥ विवृद्धकोपेनकरणेनेत्यर्थः असुरंदहन्निवाहेतिशेषः ॥ २८ ॥

अधमेत्यत्रक्रोधातिशयेनदूरात्संबोधनेप्लुतः ॥ २९ ॥ पार्श्वेस्थितंराक्षसमित्यन्वयः खंडशःकुर्विति शेषः असुरस्यममभित्राणिबांधवाश्चपश्यंतु हेराजन् अयंपरराजस्योत्कृष्टराजस्यशत्रुराजस्यवावानरोवधयोग्योनभवेत् प्रतापयुक्तैराजभिर्वधयोग्यतासंभावनमप्यनुचितंदूतत्वात्किंपुनर्वधइतिभावः अयंप्रतापयुक्तैरिंद्रजिदादिभिरपिबंधयोग्योनेतितथाप्रयासइतिव्यंग्यं ॥ ३० ॥ बधेबाधकांतरमप्याह हतइति वार्तांसीतां

नमेसमारावणकोटयोऽधमश्रामस्यदासोऽहमपारविक्रमः ॥ श्रुत्वातिकोपेनहनूमतोवचोदशाननोराक्षसमेकमब्रवीत् ॥२९॥ पार्श्वेस्थितंमारयखंडशःकपिंपश्यंतुसर्वेऽसुरमित्रबांधवाः ॥ निवारयामासततोविभीषणोमहासुरंसायुधमुद्यतंवधे ॥ राजन्वधार्होनभवेत्कथंचनप्रतापयुक्तैःपरराजवानरः ॥ ३० ॥ हतेस्मिन्वानरेदूतेवार्तांकोवानिवेदयेत् ॥ रामायत्वंयमुद्दिश्यवधायसमुपस्थितः ॥ ३१ ॥ अतोवधसमंकिंचिदन्यच्चिंतयवानरे ॥ सचिन्होगच्छतुहरिर्यंदृष्ट्वायास्यतिद्रुतं ॥ ३२ ॥ रामःसुग्रीवसहितस्ततोयुद्धंभवेत्तव ॥ विभीषणवचःश्रुत्वारावणोप्येतदब्रवीत् ॥ ३३ ॥ वानराणांहिलांगूलेमहामानोभवेत्किल ॥ अतोवस्त्रादिभिःपुच्छंवेष्टयित्वाप्रयत्नतः ॥ ॥ ३४ ॥ वन्हिनायोजयित्वैनंभ्रामयित्वापुरेऽभितः ॥ विसर्जयतपश्यंतुसर्वेवानरयूथपाः ॥ ३५ ॥ तथेतिशणपट्टैश्चवस्त्रैरन्यैरनेकशः ॥ तैलाक्तैर्वेष्टयामासुर्लांगूलंमारुतेर्दृढं ॥ ३६ ॥ पुच्छाग्रेकिंचिदनलंदीपयित्वाथराक्षसाः ॥ रज्जुभिःसुदृढंबध्वाधृत्वातंबलिनोऽसुराः ॥ ३७ ॥

वार्तांनिवेदयेत् रामायेत्यन्वयः यंराममुद्दिश्यत्वंवधायसमुपस्थितः यंराममुद्दिश्यत्वमात्मवधायसमुपस्थितःआत्मवधार्थंतदागमनेच्छावान्सस्वच्छंदतःकथमत्रागच्छेदितिगूढोऽर्थः ॥३१॥ आयास्यतीतिच्छेदः ॥ ३२ ॥ ततोयुद्धंत्वदभिलषितंभवेत् ॥ ३३ ॥ महामानःप्रीतिपूर्वकोममेदमस्त्युपादेयमित्यभिमानः ॥ ३४ ॥ सर्वेवानरयूथपाःपश्यंतुदग्धपुच्छमेनमितिशेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ किंचित्नगरदाहं ॥ ३९ ॥ सूक्ष्मोभूत्वाबंधान्निःसृतः ततःपुनरपिपर्वताकारोबभूव ततोगोपुरंपुरद्वारमुत्प्लुत्य ॥४०॥ तत्रविद्यमानमे कंस्तंभं कार्यशेषंलंकादाहरूपं ॥ ४१ ॥ ४२ ॥ हाताततेत्यादिक्रंदमानाः प्रासादशिखरेआरूढाअपिव्याप्तावन्हिनेतिशेषः ॥ ४३ ॥ व

समंताद्भ्रामयामासुश्चोरोयमितिवादिनः ॥ तूर्यघोषैर्घोषयंतस्ताडयंतोमुहुर्मुहुः ॥ ३८ ॥ हनूमतापितत्सर्वंसोढं किंचिच्चिकीर्षुणा ॥ गत्वातुपश्चिमद्वारसमीपंतत्रमारुतिः ॥ ३९ ॥ सूक्ष्मोबभूवबंधेभ्योनिःसृतःपुनरप्यसौ ॥ बभूवपर्वताकारस्ततउत्प्लुत्यगोपुरं ॥४०॥ तत्रैकंस्तंभमादायहत्वातान्रक्षिणःक्षणात् ॥ विचार्यकार्यशेषंसप्रासादाग्राद्गृहाद्गृहं ॥ ४१ ॥ उत्प्लुत्योत्प्लुत्यसंदीप्तपुच्छेनमहताकपिः ॥ ददाहलंकामखिलांसाट्टप्रासादतोरणां ॥ ४२ ॥ हाताततपुत्रनाथेतिक्रंदमानाःसमंततः ॥ व्याप्ताःप्रासादशिखरेप्यारूढादैत्ययोषितः ॥ ४३ ॥ देवताइवदृश्यंतेपतंत्यः पावकेऽखिलाः ॥ विभीषणगृहंत्यक्त्वासर्वंभस्मीकृतंपुरं ॥ ४४ ॥ ततउत्प्लुत्यजलधौहनूमान्मारुतात्मजः ॥ लांगूलं मज्जयित्वांतःस्वस्थचित्तोबभूवसः ॥ ४५ ॥ वायोःप्रियसखित्वाच्चसीतयाप्रार्थितोऽनलः ॥ नददाहहरेःपुच्छंबभूवात्यंतशीतलः ॥ ४६ ॥ यन्नामसंस्मरणधूतसमस्तपापास्तापत्रयानलमपीहतरंतिसद्यः ॥ तस्यैवकिंरघुवरस्य विशिष्टदूतःसंतप्यतेकथमसौप्रकृतानलेन ॥ ४७ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडे चतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ ॥ ७ ॥

न्हौपतंत्योदेवताइवदृश्यंते ॥४४॥ जलधौतत्समीपेउत्प्लुत्यांतःसमुद्रमध्येलांगूलंमज्जयित्वास्वस्थचित्तोबभूव ॥ ४५ ॥ वायोःप्रियमित्रत्वात्सीताप्रार्थनेनचानलोग्निर्वायुपुत्रस्यहरेःपुच्छंनददाह तावन्मात्रमेवनकिंत्वत्यंतशीतलश्चबभूव ॥ ४६ ॥ यन्नामस्मरणेनधूतानिदूरीकृतानिसमस्तपापानियैस्ते तापत्रयमाध्यात्मिकाधिभौतिकाधिदैविकभेदात्तज्जन्यंवन्हिमपितरंतितेननपीड्यंतइत्यर्थः ॥ ४७ ॥ इतिश्रीम॰सुं॰चतुर्थःसर्गः ॥ ४ ॥

अथलंकादाहेऽशोकवनस्थानदाहेपिसीतायादाहसंदेहनिवृत्तयेपुनःसीतांदृष्ट्वातामापृच्छ्यगतइत्याह ततइति हेदेविरामसंनिधिंगच्छामि भवती मामाज्ञापयत्वित्यन्वयः ॥ १ ॥ सानुजोरामस्त्वांद्रष्टुमागमिष्यतीत्युक्त्वाजानकींत्रिःपरिक्रम्यप्रदक्षिणंकृत्वा ॥ २ ॥ पुनःप्रणम्यगंतुंप्रस्थितइदंवक्ष्यमाणंअब्रवीत् तेभद्रमितिविनयोक्तिः ॥ ३ ॥ ४ ॥ वार्ताश्रुतिवार्ताश्रवणं ॥ ५ ॥ यद्येवंरामवार्ताश्रवणंविनास्थातुमशक्यत्वं

ततःसीतांनमस्कृत्यहनूमानब्रवीद्वचः ॥ आज्ञापयतुमांदेविभवतीरामसन्निधिं ॥ १ ॥ गच्छामिरामस्त्वांद्रष्टुमागमिष्यतिसानुजः ॥ इत्युक्त्वात्रिःपरिक्रम्यजानकींमारुतात्मजः ॥ २ ॥ प्रणम्यप्रस्थितोगंतुमिदंवचनमब्रवीत् ॥ देविगच्छामिभद्रंतेतूर्णंद्रक्ष्यसिराघवं ॥ ३ ॥ लक्ष्मणंचससुग्रीवंवानरायुतकोटिभिः ॥ ततःप्राहहनूमंतंजानकीदुःखकर्शिता ॥ ४ ॥ त्वांदृष्ट्वाविस्मृतंदुःखमिदानींत्वंगमिष्यसि ॥ इतःपरंकथंवर्तेरामवार्ताश्रुतिंविना ॥ ५ ॥ मारुतिरुवाच यद्येवंदेविमेस्कंधमारोहक्षणमात्रतः ॥ रामेणयोजयिष्यामिमन्यसेयदिजानकि ॥ ६ ॥ सीतोवाच रामःसागरमाशोष्यबद्ध्वावाशरपंजरैः ॥ आगत्यवानरैःसार्धंहत्वारावणमाहवे ॥ ७ ॥ मांनयेद्यदिरामस्यकीर्तिर्भवतिशाश्वती ॥ अतोगच्छकथंचापिप्राणान्संधारयाम्यहं ॥ ८ ॥ इतिप्रस्थापितोवीरःसीतयाप्रणिपत्यतां ॥ जगामपर्वतस्याग्रेगंतुंपारंमहोदधेः ॥ ९ ॥ तत्रगत्वामहासत्त्वःपादाभ्यांपीडयन्गिरिं ॥ जगामवायुवेगेनपर्वतश्चमहीतलं ॥ १० ॥

यदिमन्यसेयद्येतत्तवचित्तेआयातितर्हिआचरेतिशेषः ॥ ६ ॥ आशोष्येतिमुख्यःपक्षः दययातदकरणेबध्वावेति शरपंजरैःशरसमूहैः ॥ ७ ॥ यदिरावणंहत्वामांनयेत्तर्हिरामस्यशाश्वतीकीर्तिर्भवेत् कथंचापिकथंचिदित्यर्थः ॥ ८ ॥ महोदधेःपारंगंतुंपर्वतस्याग्रेउपरिभागेजगाम ॥ ९ ॥ महासत्वोमहाबलस्तत्रोर्ध्वशिखरेगत्वा पर्वतश्चमहीतलंजगामेत्यनुकर्षः ॥ १० ॥

तद्गमनमप्यंशेननकिंतुसंपूर्णएवगतइत्याह त्रिंशद्योजनंमहीतउच्छ्रितोऽपिमहीसमानत्वंजगाम गगनांतस्थःगगनमध्यस्थः ॥ ११ ॥ तंमहांतंशब्दं महान्स्वनःप्रतिध्वनिर्यस्यतंशब्दंचक्रुः ॥ १२ ॥ हनूमानेवायंकृतकार्यःसमागतइतिशब्देनैवजानीमः केचिद्वानराद्रष्टावावानरर्षभंपश्यध्वमित्याहुः ॥ १३ ॥ १४ ॥ पूर्वंसीतापदोक्तौपदांतरोच्चारणपर्यंतंक्रियापदसंदेहःस्यादितिपूर्वंदृष्टेत्युक्तिः ॥ १५ ॥ १६ ॥ केचिच्चुचुंबुरि







ततोमहीसमानत्वंत्रिंशद्योजनमुच्छ्रितः ॥ मारुतिर्गगनांतस्थोमहाशब्दंचकारसः ॥ ११ ॥ तंश्रुत्वावानराःसर्वेज्ञात्वामारुतिमागतं ॥ हर्षेणमहताविष्टाःशब्दंचक्रुर्महास्वनं ॥ १२ ॥ शब्देनैवविजानीमःकृतकार्यःसमागतः ॥ हनुमानेवपश्यध्वंवानरावानरर्षभं ॥ १३ ॥ एवंब्रुवत्सुवीरेषुवानरेषुसमारुतिः ॥ अवतीर्यगिरेर्मूर्ध्निवानरानिदमब्रवीत् ॥ १४ ॥ दृष्टासीतामयालंकाधर्षिताचसकानना ॥ संभाषितोदशग्रीवस्ततोऽहंपुनरागतः ॥ १५ ॥ इदानीमेवगच्छामोरामसुग्रीवसन्निधिं ॥ इत्युक्त्वावानराःसर्वेहर्षेणालिंग्यमारुतिं ॥ १६ ॥ केचिच्चुचुंबुर्लांगूलंननृतुःकेचिदुत्सुकाः ॥ हनूमतासमेतास्तेजग्मुःप्रस्रवणंगिरिं ॥ १७ ॥ गच्छंतोददृशुर्वीरावनंसुग्रीवरक्षितं ॥ मधुसंज्ञंतदाप्राहुरंगदंवानरर्षभाः ॥ १८ ॥ क्षुधिताःस्मोवयंवीरदेह्यनुज्ञांमहामते ॥ भक्षयामःफलान्यद्यपिबामोऽमृतवन्मधु ॥ १९ ॥ संतुष्टाराघवंद्रष्टुंगच्छामोऽद्यैवसानुजं ॥ २० ॥ अंगदउवाच हनूमान्कृतकार्योयंपिबतैतत्प्रसादतः ॥ जक्षध्वंफलमूलानित्वरितंहरिसत्तमाः ॥ २१ ॥ ततःप्रविश्यहरयःपातुमारेभिरेमधु ॥ रक्षिणस्ताननाहत्यदधिवक्रेणनोदितान् ॥ २२ ॥

त्यादिहर्षाविष्टवानरजातिलक्षणं ॥ १७ ॥ १८ ॥ १९ ॥ संतुष्टाःफलभक्षणेनमधुपानेनच ॥ २० ॥ जक्षध्वंभक्षयंत्वित्यर्थः ॥ २१ ॥ दधिवक्त्रोनामतद्रक्षिणांमुख्यस्तद्रक्षणाधिकृतः ॥ २२ ॥

वानरर्षभाःदधिवक्त्रप्रेरिताःपिबतोवानरांस्ताडयामासुरित्यन्वयः ॥ २३ ॥ २४ ॥ कुमारेणांगदेनहनूमताघनष्टंनाशितमित्यर्थः ॥ २५ ॥ दृष्ट्वाआगतइतिच्छेदः ॥२६ ॥ नोचेन्ममधुवनंद्रष्टुंकःसमर्थोभवेत् ॥ २७ ॥ अतिहर्षाद्धनुमानेनसुग्रीवंप्रतिराजन्नितिवचः ॥ २८ ॥ अवनी

पिबतस्ताडयामासुर्वानरान्वानरर्षभाः ॥ ततस्तान्मुष्टिभिःपादैश्चूर्णयित्वापपुर्मधु ॥ २३॥ ततोदधिमुखःक्रुद्धःसु ग्रीवस्यसमातुलः ॥ जगामरक्षिभिःसार्धंयत्रराजाकपीश्वरः ॥ २४ ॥ गत्वातमब्रवीद्देवचिरकालाभिरक्षितं ॥ न ष्टंमधुवनंतेद्यकुमारेणहनूमता ॥ २५ ॥ श्रुत्वादधिमुखेनोक्तंसुग्रीवोहृष्टमानसः ॥ दृष्ट्वागतोनसंदेहःसीतांपवन नंदनः ॥ २६ ॥ नोचेन्मधुवनंद्रष्टुंसमर्थःकोभवेन्मम ॥ तत्रापिवायुपुत्रेणकृतंकार्यंनसंशयः ॥ २७॥ श्रुत्वासुग्री ववचनंहृष्टोरामस्तमब्रवीत् ॥ किमुच्यतेत्वयाराजन्वचःसीताकथान्वितं ॥ २८ ॥ सुग्रीवस्त्वब्रवीद्वाक्यंदेवदृष्टा वनीसुता ॥ हनूमत्प्रमुखाःसर्वेप्रविष्टामधुकाननं ॥ २९ ॥ भक्षयंतिस्मसकलंताडयंतिस्मरक्षिणः ॥ अकृत्वादेव कार्यंतेद्रष्टुंमधुवनंमम ॥ ३० ॥ नसमर्थास्ततोदेवीदृष्टासीतेतिनिश्चितं ॥ रक्षिणोवोभयंमास्तुगत्वाब्रूतममाज्ञ या ॥ ३१ ॥ वानरानंगदमुखानानयध्वंममांतिकं ॥ श्रुत्वासुग्रीववचनंगत्वातेवायुवेगतः ॥ ३२ ॥ हनूमत्प्रमु खानूचुर्गच्छतेश्वरशासनात् ॥ द्रष्टुमिच्छतिसुग्रीवःसरामोलक्ष्मणान्वितः ॥ ३३ ॥ युष्मानतीवहृष्टास्त्वरयं तिमहाबलाः ॥ तथेत्यंबरमासाद्યययुस्तेवानरोत्तमाः ॥ ३४ ॥

सुताजानकी ॥ २९ ॥ ममधुवनंद्रष्टुंनसमर्थाइत्यन्वयः ॥ ३० ॥ भोरक्षिणोवोयुष्माकंभयंवानरेभ्यस्ताडनजंमास्तु अतोममाज्ञयागत्वां गदमुखान्वानरान्ब्रूतयुष्मान्रामसुग्रीवावाकारयतइतिशेषः इत्युक्त्वाममांतिकंमत्समीपंतानानयध्वं ॥ ३१ ॥ ३२ ॥ ३३ ॥ अतीवहृष्टास्ते रामसुग्रीवलक्ष्मणाःयुष्मान्स्वसमीपागमनायत्वरयंति ॥ ३४ ॥

॥ ३५ ॥ भूसंबंधोत्तरंराघवाश्वासनायपूर्वंदृष्टासीतेत्याह ततःक्रमेणरामसुग्रीवौप्रणिपत्य ॥ ३६ ॥ जानकीकुशलंप्राहेत्याह शुचाशोकेन ॥ ३७ ॥ हाइतिशोकव्यंजकमात्रं ॥ ३८ ॥ जन्मारभ्यतवकथांब्रुवतामयासूक्ष्मरूपेणवृक्षशाखांतरेस्थित्वाशनैराश्वासितेत्यन्वयः ॥ ३९ ॥







हनूमंतंपुरस्कृत्ययुवराजंतथांगदं ॥ रामसुग्रीवयोरग्रेनिपेतुर्भुविसत्वरं ॥ ३५ ॥ हनूमान्राघवंप्राहदृष्टासीतानिरामया ॥ साष्टांगंप्रणिपत्याग्रेरामंपश्चाद्धरीश्वरं ॥ ३६ ॥ कुशलंप्राहराजेंद्रजानकीत्वांशुचाऽन्विता ॥ अशोकवनिकामध्येशिंशपामूलमाश्रिता ॥ ३७ ॥ राक्षसीभिःपरिवृतानिराहाराकृशाप्रभो ॥ हारामरामरामेतिशोचंतीमलिनांबरा ॥ ३८ ॥ एकवेणीमयादृष्टाशनैराश्वासिताशुभा ॥ वृक्षशाखांतरेस्थित्वासूक्ष्मरूपेणतेकथां ॥ ३९ ॥ जन्मारभ्यतवात्यर्थंदंडकागमनंतथा ॥ दशाननेनहरणंजानक्यारहितेत्वयि ॥ ४० ॥ सुग्रीवेणयथामैत्रीकृत्वावालिनिबर्हणं ॥ मार्गणार्थंचवैदेह्याःसुग्रीवेणविसर्जिताः ॥ ४१ ॥ महाबलामहासत्वाहरयोजितकाशिनः ॥ गताःसर्वत्रसर्वेवैतत्रैकोऽहमिहागतः ॥ ४२ ॥ अहंसुग्रीवसचिवोदासोऽहंराघवस्यहि ॥ दृष्टायज्जानकीभाग्यात्वयासःफलितोद्यमे ॥ ४३ ॥ इत्युदीरितमाकर्ण्यसीताविस्फारितेक्षणा ॥ केनवाकर्णपीयूषंश्रावितंमेशुभाक्षरं ॥ ४४ ॥ यदिसत्यंतदायातुमद्दर्शनपथंतुसः ॥ ततोऽहंवानराकारःसूक्ष्मरूपेणजानकीं ॥ ४५ ॥ प्रणम्यप्रांजलिर्भूत्वादूरादेवस्थितःप्रभो ॥ पृष्टोऽहंसीतयाकस्त्वमित्यादिबहुविस्तरं ॥ ४६ ॥

अत्यर्थंविस्तरेणदंडकागमनादिकथोक्तेतिशेषः त्वयिरहितेदेशांतरंगतेसतिजानक्यादशाननेनहरणमित्यन्वयः ॥ ४० ॥ वालिनिबर्हणंतद्वधं कृत्वायथासुग्रीवेणमैत्रीसफलाकृतेतिशेषः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ सःयेनोक्तंसइत्यर्थः ॥ ४५ ॥ ४६ ॥

॥१६॥

॥ ४७ ॥ तेनअंगुलीयकलाभेनराघवस्याप्तःसेवकइत्यतिविश्वस्ता राक्षसीनांतर्जनैःपीड्यमानायथादृष्टास्मि तत्सर्वंपीडनंराघवेकथय ॥ ॥ ४८ ॥ त्वच्चिंतापरिनिष्ठितःत्वच्चितायांस्थितः॥ ४९ ॥ त्वद्वार्तांनाधिगम्यअहोरात्रंपरिशोचतित्वामितिशेषः ॥ ५० ॥ ५१ ॥ विश्वसेत्सत्यं जानकींदृष्ट्वाआगतइतिविश्वसेदित्यर्थः ॥ ५२ ॥ शिरोरत्नंदत्वाचित्रकूटगिरिस्थंकाकवृत्तमप्याह ॥ ५३ ॥ ततःसंदेशमाहेतिशेषः

मयासर्वंक्रमेणैवविज्ञापितमरिंदम॥ पश्चान्मयार्पितंदेव्यैभवद्दत्तांगुलीयकं ॥ ४७ ॥ तेनमामतिविश्वस्तावच नंचेदमब्रवीत्॥ यथादृष्टास्मिहनुमन्पीड्यमानादिवानिशं ॥ ४८ ॥ राक्षसीनांतर्जनैस्तत्सर्वंकथयराघवे ॥ मयो क्तंदेविरामोपित्वच्चिंतापरिनिष्ठितः ॥ ४९ ॥ परिशोचत्यहोरात्रंत्वद्वार्तांनाधिगम्यसः ॥ इदानीमेवगत्वाहंस्थितिं रामायतेब्रुवे ॥ ५० ॥ रामःश्रवणमात्रेणसुग्रीवेणसलक्ष्मणः ॥ वानरानीकपैःसार्धमागमिष्यतितेंतिकं ॥ ५१ ॥ रावणंसकुलंहत्वानेष्यतित्वांस्वकंपुरं॥ अभिज्ञांदेहिमेदेवियथामांविश्वसेद्विभुः॥ ५२ ॥ इत्युक्तासाशिरोरत्नंचूडा पाशेस्थितंप्रियं॥ दत्वाकाकेनयद्वृत्तंचित्रकूटगिरौपुरा॥ ५३॥ तदप्याहाश्रुपूर्णाक्षीकुशलंब्रूहिराघवं॥ लक्ष्मणंब्रू हिमेकिंचिद्दुरुक्तंभाषितंपुरा ॥ ५४ ॥ तत्क्षमस्वाज्ञभावेनभाषितंकुलनंदन ॥ तारयेन्मांयथारामस्तथाकुरुकृपा न्वितः ॥ ५५ ॥ इत्युक्त्वारुदतीसीतादुःखेनमहतावृता ॥ मयाप्याश्वासितारामवदतासर्वमेवते ॥ ५६ ॥ ततःप्र स्थापितोरामत्वत्समीपमिहागतः ॥ तदागमनवेलायामशोकवनिकांप्रियां ॥ ५७॥

तमाहाश्रुपूर्णाक्षीति यन्मेकिंचिद्दुरुक्तंदुर्वचोभाषितंतत्क्षमस्व तदज्ञभावेनाज्ञतयामयाभाषितं अतोयथामांरामोस्माद्दुःखात्तारयेत्तथाकृपान्वि तःकुरुइतिलक्ष्मणंब्रूहीत्यन्वयः ॥ ५४ ॥ ५५ ॥ महतादुःखेनावृताआसीदितिशेषः सर्वमेववृत्तांतंवदतामयापिसाआश्वासिता ॥ ५६ ॥ मियांरावणस्येतिशेषः ॥ ५७ ॥

उत्पाट्यउत्पाटितवृक्षांकृत्वा ॥ ५८ ॥ पुनरप्यगमंत्वत्समीपमितिशेषः प्रहृष्टधीःप्रहृष्टचेताः ॥ ५९ ॥ प्रत्युपकारिणःमांप्रतिकृतोपकारस्य ॥ ६० ॥ सर्वस्वंआलिंगनं ॥ ६१ ॥ सःजगत्कर्तृत्वादिपरमैश्वर्यवान् ॥ ६२ ॥ आलिंगनस्यसर्वस्वत्वमुपपादयन्नाह परिरंभइति यतस्त्वं



उत्पाट्यराक्षसांस्तत्रबहून्हत्वाक्षणादहं ॥ रावणस्यसुतंहत्वारावणेनाभिभाष्यच ॥ ५८ ॥ लंकामशेषतोदग्ध्वा पुनरप्यगमंक्षणात् ॥ श्रुत्वाहनूमतोवाक्यंरामोत्यंतप्रहृष्टधीः ॥ ५९ ॥ हनूमंस्तेकृतंकार्यंदेवैरपिसुदुष्करं ॥ उपकारंनपश्यामितवप्रत्युपकारिणः ॥ ६० ॥ इदानींतेप्रयच्छामिसर्वस्वंममभारुते ॥ इत्यालिंग्यसमाकृष्यगाढंवानरपुंगवं ॥ ६१ ॥ सार्द्रनेत्रोरघुश्रेष्ठःपरांप्रीतिमवापसः ॥ हनूमंतमुवाचेदंराघवोभक्तवत्सलः ॥ ६२ ॥ परिरंभोहिमेलोकेदुर्लभःपरमात्मनः ॥ अतस्त्वंममभक्तोसिप्रियोसिहरिपुंगव ॥ ६३ ॥ यत्पादपद्मयुगलंतुलसीदलाद्यैः संपूज्यविष्णुपदवीमतुलांप्रयांति ॥ तेनैवकिंपुनरसौपरिरब्धमूर्तीरामेणवायुतनयःकृतपुण्यपुंजः ॥ ६४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेपंचमःसर्गः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ सुंदरकांडसर्गाःपंचैवाध्यात्मिकशब्दिते ॥ प्रोक्तास्त्रीणिशतानिश्लोकास्त्रिभुवनपापहराः ॥ ॥ छ ॥

ममभक्तोसिअतस्त्वयायंलब्धइतिशेषः ॥ ६३ ॥ कृतपुण्यपुंजोवायुतनयः तेनैवरामेणपरिरब्धमूर्तिः अतुलांपदवींप्रयांतीतिकिंपुनर्वक्तव्यमितिशेषः ॥ ६४ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतौ अध्यात्मरामायणसेतौसुंदरकांडेपंचमःसर्गः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशायनमः॥ यथावदिति ॥ १ ॥ यदन्येनमनसास्मर्तुमपिनशक्यमित्यन्वयः ॥ २ ॥ धर्षयितुंअशोकवनिकादिनाशेन ॥ ३ ॥ सुग्रीवस्येदृशइति भृत्यइतिशेषः ॥ ४ ॥ कपीश्वरःसुग्रीवः ॥ ५ ॥ जानक्याःपरिमार्गणरूपंकार्यमनेनसुकृतंसम्यक्कृतं एवंहनुमंतंस्तुत्वाप्रकृतमाह

श्रीमहादेवउवाच यथावद्भाषितंवाक्यंश्रुत्वारामोहनूमतः ॥ उवाचानंतरंवाक्यंहर्षेणमहतावृतः ॥ १ ॥ कार्यंकृतंहनुमतादेवैरपिसुदुष्करं ॥ मनसापियदन्येनस्मर्तुंशक्यंनभूतले ॥ २ ॥ शतयोजनविस्तीर्णंलंघयेत्कःपयोनिधिं ॥ लंकांचराक्षसैर्गुप्तांकोवाधर्षयितुंक्षमः ॥ ३ ॥ भृत्यकार्यंहनुमताकृतंसर्वमशेषतः ॥ सुग्रीवस्येदृशोलोकेनभूतोनभविष्यति ॥ ४ ॥ अहंचरघुवंशश्चलक्ष्मणश्चकपीश्वरः ॥ जानक्यादर्शनेनाद्यरक्षिताःस्मोहनूमता ॥ ॥ ५ ॥ सर्वथासुकृतंकार्यंजानक्याःपरिमार्गणं ॥ समुद्रंमनसास्मृत्वासीदतीवमनोमम ॥ ६ ॥ कथंनक्रझषाकीर्णंसमुद्रंशतयोजनं ॥ लंघयित्वारिपुंहत्वांकथंद्रक्ष्यामिजानकीं ॥ ७ ॥ श्रुत्वातुरामवचनंसुग्रीवःप्राहराघवं ॥ समुद्रंलंघयिष्यामोमहानक्रझषाकुलं ॥ ८ ॥ लंकांचविधमिष्यामोहनिष्यामोद्यरावणं ॥ चिंतांत्यजरघुश्रेष्ठचिंताकार्यविनाशिनी ॥ ९ ॥ एतान्पश्यमहासत्वान्शूरान्वानरपुंगवान् ॥ त्वत्प्रियार्थंसमुद्युक्तान्प्रवेष्टुमपिपावकं ॥ ॥ १० ॥ समुद्रतरणेबुद्धिंकुरुष्वप्रथमंततः ॥ दृष्ट्वालंकांदशग्रीवोहतइत्येवमन्महे ॥ ११ ॥ नहिपश्याम्यहंकंचित्त्रिषुलोकेषुराघव ॥ गृहीतधनुषोयस्तेतिष्ठेदभिमुखोरणे ॥ १२ ॥ सर्वथानोजयोरामभविष्यतिनसंशयः ॥ निमित्तानिचपश्यामितथाभूतानिसर्वशः ॥ १३ ॥

समुद्रमित्यादि यतःसीदतीव ॥६॥ अतःकथमित्यादि ॥ ७॥८॥यतश्चिंताकार्यविनाशिनीअतस्तांत्यज ॥९॥ त्वत्प्रियनिमित्तंपावकंप्रवेष्टुमपिसमुद्युक्तान् ॥ १० ॥ प्रथमंसमुद्रतरणविषयंनिश्चयमातिष्ठेत्यर्थः लंकादर्शनोत्तरकालमस्माभीरावणोहतइत्येवमन्महेएषएवास्माकंनिश्चयइत्यर्थः ॥ ११ ॥ कंचित्कमपि ॥ १२ ॥ निमित्तानिशकुनानि ॥ १३ ॥

॥ १४॥येनकेनप्रकारेणसमुद्रशोषणेनसेतुनावादेवदानवैर्दुःसाध्यंयोद्धुंप्रवेष्टुंचेतिशेषः॥ १५॥ प्रतीकारंतन्नाशोपायं॥ १६॥दिव्यत्वेनत्रिकूटशिखरस्थत्वेनचेतरासाध्यत्वं ॥ १७॥ प्राकारोनगरवेष्टनभित्तिः परिखाःप्राकारसल्लग्नाःप्राकाराद्बहिर्देशस्थाःखाताः ॥ १८॥ वाप्यःस्वल्पजलाशयाः अवतरणसोपानसहिताःकूपविशेषाः॥ १९॥सहस्रशस्तिष्ठंतीतिशेषः॥ २०॥ २१॥ २२॥संक्रमाःपरिबद्धाःसर्वप्रवेशायोग्यामार्गाः मेचेष्टितं मत्कृतोव्यवहारः॥ २३॥ २४॥संक्रमानाशिताःप्राकारपातनेनपूरयित्वासर्वप्रवेशयोग्याःकृताः ॥ २५॥लवणांबुधेस्तीरंगच्छामइत्यन्वयः॥ २६॥

सुग्रीववचनंश्रुत्वाभक्तिवीर्यसमन्वितं ॥ अंगीकृत्याब्रवीद्रामोहनूमंतंपुरःस्थितं ॥ १४ ॥ येनकेनप्रकारेणलंघयामोमहार्णवं ॥ लंकास्वरूपंमेब्रूहिदुःसाध्यंदेवदानवैः ॥ १५ ॥ ज्ञात्वातस्यप्रतीकारंकरिष्यामिकपीश्वर ॥ श्रुत्वारामस्यवचनंहनूमान्विनयान्वितः ॥ १६ ॥ उवाचप्रांजलिर्देवयथादृष्टंब्रवीमिते ॥ लंकादिव्यापुरीदेवत्रिकूटशिखरेस्थिता ॥ १७ ॥ स्वर्णप्राकारसहितास्वर्णाट्टालकसंयुता ॥ परिखाभिःपरिवृतापूर्णाभिर्निर्मलोदकैः ॥ १८ ॥ नानोपवनशोभाढ्यादिव्यवापीभिरावृता ॥ गृहैर्विचित्रशोभाढ्यैर्मणिस्तंभमयैःशुभैः ॥ १९ ॥ पश्चिमद्वारमासाद्यगजवाहाःसहस्रशः ॥ उत्तरेद्वारितिष्ठंतिसाश्ववाहाःसपत्तयः ॥ २० ॥ तिष्ठंत्यर्बुदसंख्याकाःप्राच्यामपितथैवच ॥ रक्षिणोराक्षसावीराद्वारंदक्षिणमाश्रिताः ॥ २१ ॥ मध्यकक्षेप्यसंख्यातागजाश्वरथपत्तयः ॥ रक्षयंतिसदालंकांनानास्त्रकुशलाःप्रभो ॥ २२ ॥ संक्रमैर्विविधैर्लंकाशतघ्नीभिश्चसंयुता ॥ एवंस्थितेपिदेवेशशृणुमेतत्रचेष्टितं ॥ २३ ॥ दशाननबलौघस्यचतुर्थांशोमयाहतः ॥ दग्ध्वालंकांपुरींस्वर्णप्रासादोधर्षितोमया ॥ ॥ २४ ॥ शतघ्न्यःसंक्रमाश्चैवनाशितामेरघूत्तम ॥ देवत्वद्दर्शनादेवलंकाभस्मीकृताभवेत् ॥ २५ ॥ प्रस्थानंकुरुदेवेशगच्छामोलवणांबुधेः ॥ तीरंसहमहावीरैर्वानरौघैःसमंततः ॥ २६ ॥

॥ २७ ॥ विजयोन्वर्थनामा ॥ २८ ॥ सुतरांदुर्धर्षामपिनाशयामि ॥ २९ ॥ यूथपाःजांबवदाद्याः ॥ ३० ॥ त्वंमयासहयाहीतिशेषः ॥ ३१ ॥
॥ ३२ ॥ सेनापाःसेनापालाः ॥ ३३ ॥ वारणेंद्राःगजेंद्राः ॥ ३४ ॥ क्ष्वेलंतः क्ष्वेलाःयुद्धार्थंगच्छतांशूराणांगतिविशेषाः ॥ ३५ ॥ हरिभ्यांह

श्रुत्वाहनूमतोवाक्यमुवाचरघुनंदनः ॥ सुग्रीवसैनिकान्सर्वान्प्रस्थानायाभिनोदय ॥ २७ ॥ इदानीमेवविजयो
मुहूर्तःपरिवर्त्तते ॥ अस्मिन्मुहूर्तेगत्वाहंलंकांराक्षससंकुलां ॥ २८ ॥ सप्राकारांसुदुर्धर्षांनाशयामिसरावणां ॥
आनेष्यामिचसीतांमेदक्षिणाक्षिस्फुरत्यधः ॥ २९ ॥ प्रयातुवाहिनीसर्वावानराणांतरस्विनां ॥ रक्षंतुयूथपाःसे
नामग्रेपृष्ठेचपार्श्वयोः ॥ ३० ॥ हनूमंतमथारुह्यगच्छाम्यग्रेंगदंततः ॥ आरुह्यलक्ष्मणोयातुसुग्रीवत्वंमयासह ॥
॥ ३१ ॥ गजोगवाक्षोगवयोमैंदोद्विविदएवच ॥ नलोनीलःसुषेणश्चजांबवांश्चतथापरे ॥ ३२ ॥ सर्वेगच्छंतुसर्व
त्रसेनापाःशत्रुघातिनः ॥ इत्याज्ञाप्यहरीन्रामःप्रतस्थेसहलक्ष्मणः ॥ ३३ ॥ सुग्रीवसहितोहर्षात्सेनामध्यगतोवि
भुः ॥ वारणेंद्रनिभाःसर्वेवानराःकामरूपिणः ॥ ३४ ॥ क्ष्वेलंतःपरिगर्जंतोजग्मुस्तेदक्षिणांदिशं ॥ भक्षयंतोययुः
सर्वेफलानिचमधूनिच ॥ ३५ ॥ ब्रुवंतोराघवस्याग्रेहनिष्यामोघरावणं ॥ एवंतेवानरश्रेष्ठागच्छंत्यतुलविक्रमाः
॥ ३६ ॥ हरिभ्यामुह्यमानौतौशुशुभातेरघूत्तमौ ॥ नक्षत्रैःसेवितौयद्वच्चंद्रसूर्याविवांबरे ॥ ३७ ॥ आवृत्यपृथि
वींकृत्स्नांजगाममहतीचमूः ॥ प्रस्फोटयंतःपुच्छाग्रानुद्वहंतश्चपादपान् ॥ ३८ ॥ शैलानारोहयंतश्चजग्मुर्मारुत
वेगतः ॥ असंख्याताश्चसर्वत्रवानराःपरिपूरिताः ॥ ३९ ॥

नुमदंगदाभ्यां नक्षत्रसदृशाअन्येहरयः हनूमदंगदयोरत्युच्चत्वादंबरस्थचंद्रसूर्योपमा ॥ ३७ ॥ आवृत्यआच्छाद्य प्रस्फोटयंतःशौर्याविशेकृ
तभूम्याघातेनपादपानुद्वहंतः हस्तैर्युद्धार्थमितिशेषः ॥ ३८ ॥ सर्वत्रयावद्दर्शनपथदेशे ॥ ३९ ॥

नअसज्जतआसक्तानाभूत्अविश्रमंजगामेतियावत् ॥ ४० ॥ तेवानराः ॥ ४१॥ आनुपूर्व्येणक्रमेणआययुःप्राप्ताः हनुमंतंहनूमतः पंचम्यर्थे आर्षीद्वितीया सुग्रीवयुतोरामः ॥ ४२ ॥ सलिलसमीपंप्राप्यसुग्रीवंप्रतिरामोवचनमब्रवीदित्यन्वयः आगताःप्राप्ताःस्मः ॥४३॥ निरुपायेनउ

हृष्टास्तेजग्मुरत्यर्थंरामेणपरिपालिताः ॥ गताचमूर्दिवारात्रंक्कचिन्नासज्जतक्षणं ॥ ४० ॥ काननानिविचित्राणिपश्यन्मलयसह्ययोः ॥ तेसह्यंसमतिक्रम्यमलयंचतथागिरिं ॥ ४१ ॥ आययुश्चानुपूर्व्येणसमुद्रंभीमनिःस्वनं ॥ अवतीर्यहनूमंतंरामःसुग्रीवसंयुतः ॥ ४२ ॥ सलिलाभ्याशमासाद्यरामोवचनमब्रवीत् ॥ आगताःस्मोवयंसर्वेसमुद्रंमकरालयं ॥ ४३ ॥ इतोगंतुमशक्यंनोनिरुपायेनवानराः ॥ अत्रसेनानिवेशोस्तुमंत्रयामोऽस्यतारणे ॥ ४४ ॥ श्रुत्वारामस्यवचनंसुग्रीवःसागरांतिके ॥ सेनांन्यवेशयत्क्षिप्रंरक्षितांकपिकुंजरैः ॥ ४५ ॥ तेपश्यंतोविषेदुस्तंसागरंभीमदर्शनं ॥ महोन्नततरंगाढ्यंभीमनक्रभयंकरं ॥ ४६ ॥ अगाधंगगनाकारंसागरंवीक्ष्यदुःखिताः ॥ तरिष्यामःकथंघोरंसागरंवरुणालयं ॥ ४७ ॥ हंतव्योस्माभिरद्यैवरावणोराक्षसाधमः ॥ इतिचिंताकुलाःसर्वेरामपार्श्वेव्यवस्थिताः ॥ ४८ ॥ रामःसीतामनुस्मृत्यदुःखेनमहतावृतः ॥ विलप्यजानकींसीतांबहुधाकार्यमानुषः ॥ ४९ ॥

पायंविना अस्यतारणेअस्यसमुद्रस्यतरणे स्वार्थेणिच् मंत्रयामःउपायानितिशेषः ॥४४॥४५॥ विषेदुःदुःखिताबभूवुः महोन्नतैस्तरंगैराढ्यंसंपन्नं॥४६॥ गगनाकारंविपुलत्वेनतत्सादृश्यं दुःखितावानराःकथंतरिष्यामइत्यादेःइतिचिंताकुलाइत्यनेनान्वयः॥४७॥ अद्यैवहंतव्योहंतुमर्हः ॥४८॥दुःखेनमहतावृतःआसीदितिशेषः तत्रहेतुः कार्यमानुषःकार्यार्थंमानुषःनाटितमानुष्यत्वः एवंचेदंदुःखादितस्यनटनमेवेतिभावः॥४९॥

वस्तुतोनतस्यदुःखादिइत्याहाद्वितीयइति द्वितीयाद्विभयंभवतीतिश्रुतेस्तस्यनदुःखादीतिभावः तदुपपादकंचिदात्मैकइति अनेकचेतनकल्प
नेगौरवात्सोऽद्वितीयएकइतिभावः किंच योरामस्यस्वरूपंतत्त्वतः तत्त्वमस्यादिवाक्यतोजानातिसोपिदुःखादिभयतोमुच्यते स्वयमानंदस्वरू
पस्यभगवतोनदुःखादिइतिकिंवक्तव्यमितिभावः दुःखादीत्यत्रादिशब्दमासमाह दुःखेति ॥ ५० ॥ ५१ ॥ तत्त्वज्ञमपितानिकुतोनस्पृशंतीत्य
त्रहेतुमाह अज्ञानलिंगानीति तस्यतत्त्वज्ञानेननाशादितिभावः चिदात्मनिसर्वथाऽज्ञानरहितेतानिकुतःसंतिकथंभवंतीत्यर्थः तदेववदाढ्यायपुन

अद्वितीयश्चिदात्मैकःपरमात्मासनातनः ॥ यस्तुजानातिरामस्यस्वरूपंतत्त्वतोजनः ॥ ५० ॥ तन्नःस्पृशतिदुः
खादिकिमुतानंदमव्ययं ॥ दुःखहर्षभयक्रोधलोभमोहमदादयः ॥ ५१ ॥ अज्ञानलिंगान्येतानिकुतःसंतिचिदा
त्मनि ॥ देहाभिमानिनोदुःखंनादेहस्यचिदात्मनः ॥ ५२ ॥ संप्रसादेद्वयाभावात्सुखमात्रंहिदृश्यते ॥ बुद्ध्याद्यभा
वात्संशुद्धेदुःखंतत्रनदृश्यते ॥ अतोदुःखादिकंसर्वंबुद्धेरेवनसंशयः ॥ ५३ ॥ रामःपरात्मापुरुषःपुराणोनित्योदि
तोनित्यसुखोनिरीहः ॥ तथापिमायागुणसंगतोऽसौसुखीवदुःखीवविभाव्यतेबुधैः ॥ ५४ ॥ इतिश्रीमदध्या
त्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ५ ॥ लंकायांरावणोदृष्ट्वाकृतंकर्महनूमता ॥
दुष्करंदैवतैर्वापिह्रियाकिंचिदवाङ्मुखः ॥ १ ॥

राह देहेति ॥५२ ॥ तस्यसुखरूपत्वेहेतुमाह संप्रसादेइति सुषुप्तावित्यर्थः द्वयाभावाद्वितीयाभावात् ननुशुद्धेऽपिदुःखंकुतोनतत्राह बुद्ध्या
द्यभावादिति यतोबुद्धिरहितेतत्रनदृश्यते अतोबुद्धेरेवतत्सर्वमित्यर्थः ॥ ५३ ॥ नित्योदितत्वेनमाशराहित्यं अबुधैर्मायागुणैःसंगतःतत्संगतत्वेन
कल्पितःसुखीवदुःखीवचविभाव्यते॥५४॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्य हिम्मतिवर्मणःपुत्रस्यश्री
रामवर्मणःकृताध्यात्मरामायणसेतौयुद्धकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ५ ॥ लंकायामिति दैवतैर्वापिदैवतैरपीत्यर्थः वापादपूरणे ॥१॥

॥ २ ॥ अक्षंहत्वेत्यनुकर्षः ॥ ३ ॥ स्वस्थइत्यनेनभवत्कृतांगवैकृतराहित्यंसूचितं ॥ ४ ॥ यत्कृतंसन्मेहितंभवेत्तन्मंत्रयध्वमित्यन्वयः ॥ ५ ॥ लोकजितःइंद्रादिलोकजयिनः ॥ ६ ॥ तदेवाहेंद्रस्त्विति पत्तनेपुरेकुबेरंजित्वापुष्पकमानीयभुज्यतइत्यन्वयः ॥ ७ ॥ यदायमोजितस्तदाकालदंडादपिभयंनाभूत्तत्कुतोमानुषाद्भयमितिभावः सर्वेपिराक्षसाइत्यस्यत्वदधीनाइतिशेषः ॥ ८ ॥ ९ ॥ नोस्माकंयातदवज्ञातस्मिन्नवज्ञा



**आहूयमंत्रिणःसर्वानिदंवचनमब्रवीत् ॥ हनूमताकृतंकर्मभवद्भिर्दृष्टमेवतत् ॥ २ ॥ प्रविश्यलंकांदुर्धर्षांदृष्ट्वासीतांदुरासदां ॥** हत्वाचराक्षसान्वीरानक्षंमंदोदरीसुतं ॥ ३ ॥ दग्ध्वालंकामशेषेणलंघयित्वाचसागरं ॥ युष्मान्सर्वानतिक्रम्यस्वस्थोगात्पुनरेवसः ॥ ४ ॥ किंकर्तव्यमितोऽस्माभिर्यूयंमंत्रविशारदाः ॥ मंत्रयध्वंप्रयत्नेनयत्कृतंमेहितंभवेत् ॥ ५ ॥ रावणस्यवचःश्रुत्वाराक्षसास्तमथाब्रुवन् ॥ देवशंकाकुतोरामात्तवलोकजितोरणे ॥ ६ ॥ इंद्रस्तुबध्वानिक्षिप्तःपुत्रेणतवपत्तने ॥ जित्वाकुबेरमानीयपुष्पकंभुज्यतेत्वया ॥ ७ ॥ यमोजितःकालदंडाद्भयंनाभूत्तवप्रभो ॥ वरुणोहुंकृतेनैवजितःसर्वेपिराक्षसाः ॥ ८ ॥ मयोमहासुरोभीत्याकन्यांदत्वास्वयंतव ॥ त्वद्वशेवर्त्ततेद्यापिकिमुतान्येमहासुराः ॥ ९ ॥ हनूमद्धर्षणंयत्तुतदवज्ञाकृतंचनः ॥ **वानरोयंकिमस्माकमस्मिन्पौरुषदर्शने ॥ १० ॥ इत्युपेक्षितमस्माभिर्धर्षणंतेनकिंभवेत् ॥ वयंप्रमत्ताःकिंतेनवंचिताःस्मोहनूमता ॥ ११ ॥ जानीमोयदितंसर्वेकथंजीवन्गमिष्यति ॥ आज्ञापयजगत्कृत्स्नमवानरममानुषं ॥ १२ ॥**



तत्कृतमित्यर्थः अवज्ञाकारणमाहुः अयंवानरः किमस्माकंकरिष्यतीतिशेषः अस्मिन्वानरेपौरुषस्यदर्शनेकिंफलं निष्फलंतत् ॥ १० ॥ इतीत्यादि धर्षणंतेनकिंभवेदिति तस्योपेक्षाभावेइत्यादि अयंकिं कःपदार्थः इतिवयंप्रमत्तास्तेनप्रमादेनहनूमतावंचिताः ॥ ११ ॥ यदितंजानीमः अयमेवंरूपइतियदिजानीमइत्यर्थः गमिष्यति गतःस्यादित्यर्थेआर्षं ॥ १२ ॥

सर्वानाज्ञापयएकैकंवेत्यर्थः ॥ १३ ॥ यत्कर्मत्वयारब्धंतत्केवलंस्वात्मनाशाय आरंभकालएवनाशःप्रसक्तःपरंतुभाग्याज्जीवितोसियत्तदारा मेणनदृष्टोसि ॥ १४ ॥ जीवन्नायासीत्यत्रहेतुभूतंरामस्वरूपमाह रामोनेति ॥ १५ ॥ त्वयाआनीतेतिच्छेदः ॥ १६ ॥ विषपिंडमिवतत्सदृ शं आगीर्यनिगीर्यमहामीनोयथापश्चात्तप्यतितथात्वयाजानकीआनीता अथकिंवाभविष्यतीतिपश्चात्तप्स्यसेइतिशेषः ॥१७॥ सर्वंसमंक

कृत्वायास्यामहेसर्वैंप्रत्येकंवानियोजय ॥ कुंभकर्णस्तदाप्राहरावणंराक्षसेश्वरं ॥ १३ ॥ आरब्धंयत्त्वयाकर्म स्वात्मनाशायकेवलं ॥नदृष्टोसितदाभाग्यात्त्वंरामेणमहात्मना ॥ १४ ॥ यदिपश्यतिरामस्त्वांजीवन्नायासिरा वण॥रामोनमानुषोदेवःसाक्षान्नारायणोव्ययः ॥ १५ ॥ सीताभगवतीलक्ष्मीरामपत्नीयशस्विनी ॥ राक्षसा नांविनाशायत्वयानीतासुमध्यमा ॥ १६ ॥ विषपिंडमिवागीर्यमहामीनोयथातथा ॥ आनीताजानकीपश्चा त्त्वयाकिंवाभविष्यति॥ १७॥ यद्यप्यनुचितंकर्मत्वयाकृतमजानता॥ सर्वंसमंकरिष्यामिस्वस्थचित्तोभवप्रभो ॥ १८ ॥ कुंभकर्णवचःश्रुत्वावाक्यमिंद्रजिदब्रवीत् ॥ देहिदेवममानुज्ञांहत्वारामंसलक्ष्मणं ॥ सुग्रीवंवानरांश्चैव पुनर्यास्यामितेंतिकं ॥ १९ ॥ तत्रागतोभागवतप्रधानोविभीषणोबुद्धिमतांवरिष्ठः ॥ श्रीरामपादद्वयएकतानः प्रणम्यदेवारिमुपोपविष्टः॥ २० ॥ विलोक्यकुंभश्रवणादिदैत्यान्मत्तप्रमत्तानतिविस्मयेन ॥ विलोक्यकामातु रमप्रमत्तोदशाननंप्राहविशुद्धबुद्धिः॥ २१ ॥

रिष्यामिपराक्रमेणेतिभावः ॥ १८ ॥ १९ ॥ एकतानःतन्मात्रविषयध्यानवान् देवारिंरावणंप्रणम्योपतत्समीपेभातृत्वादुपविष्टः ॥ २० ॥ कुंभश्रवणः कुंभकर्णःआदिनेंद्रजित् मत्तप्रमत्तान् अतिशयेनमत्तानित्यर्थः कामातुरंदशाननंविलोक्यप्राह ॥ २१॥

॥ ४ ॥ अंगदेबाहुभूषणे ॥ ५ ॥ ६ ॥ अवमुच्यभर्त्रांकंठेप्रतिमुक्तंपुनःकंठादवतार्येत्यर्थः ॥ ७ ॥ विलोकयन्वैदेहींपश्यन् ॥८ ॥ गौरवेणसीता कृतादरेण ॥ ९ ॥ १० ॥ यद्वस्तुदेवैरपिदुर्लभंतदपितववररूपंचदास्याम्येवेत्यर्थः ॥ ११ ॥ उक्तंचान्यत्र राज्योत्सवागतजनायरघुप्रवीरःप्री त्यात्वनेकमणिरत्नविभूषणानि दत्वानिलात्मजमपास्यविदेहजायैमालांददौरघुपतिःपरमादरेण १ तयाहनुमतेदत्तासैवमालाह्यमूलिका दश नैःशकलीकृत्यत्यक्तातेनजलाशये २ हाहेतिजल्पितंसर्वैस्तदासमुरवानरैः स्वजातीयमरेकर्मत्वयाकृतमरिंदम ३ रामस्ततोमारुतिमत्युदार

वस्त्राभरणरत्नानिब्राह्मणेभ्योमुदातथा ॥ सूर्यकांतिसमप्रख्यांसर्वरत्नमयींस्रजं ॥ ४ ॥ सुग्रीवायददौप्रीत्याराघवोभक्तवत्सलः ॥ अंगदायददौदिव्येत्व्यंगदेरघुनंदनः ॥ ५ ॥ चंद्रकोटिप्रतीकाशंमणिरत्नविभूषितं ॥ सीतायै प्रददौहारंप्रीत्यारघुकुलोत्तमः ॥ ६ ॥ अवमुच्यात्मनःकंठाद्धारंजनकनंदिनी ॥ अवैक्षतहरीन्सर्वान्भर्तारंच मुहुर्मुहुः ॥ ७ ॥ रामस्तामाहवैदेहीमिंगितज्ञोविलोकयन् ॥ वैदेहियस्यतुष्टासिदेहितस्मैवरानने ॥ ८ ॥ हनूमते ददौहारंपश्यतोराघवस्यच ॥ तेनहारेणशुशुभेमारुतिर्गौरवेणच ॥ ९ ॥ रामोपिमारुतिंदृष्ट्वाकृतांजलिमुपस्थितं ॥ भक्त्यापरमयातुष्टइदंवचनमब्रवीत् ॥ १० ॥ हनूमंस्तेप्रसन्नोस्मिवरंवरयकांक्षितं ॥ दास्यामिदेवैरपियद्दुर्लभंभुवनत्रये ॥ ११ ॥

माहूयचारादभिवर्तमानं पप्रच्छकस्मान्महतीसुमालात्यक्तात्वयाब्रूहिविदेहजार्पिता ४ ब्रह्मेतियद्ब्रह्मविदोवदंतिह्यात्मेश्वरश्चेतिवदंतिसंतः सीतापतेत्वंतदसीतिबुध्यात्यक्तामयेयंसकलार्तिरूपा ॥ ५ ॥ हनूमन्यदिमत्तस्त्वंवरंकिमपि नेच्छसि तवेच्छांतर्हिनिर्मुक्तांकरिष्यामिचनिष्फलां ६ श्रीरामश्रवणेदास्येममास्तुसफलास्पृहा तस्याविरोधिनीयातुनिर्मूलांकुरुतांप्रभो ७ ममस्वांतेसदैवत्वंसीतयासहतिष्ठसि अद्यैवसर्वेपश्यंतुस्थितंत्वांजानकीपते ८ विदीर्यवक्षस्थलमंजनीसुतःप्रदर्शयामासचराममद्वयं हृदंबुजे संस्थितमब्जलोचनंमहीसुताराधितपादपंकजं ९ मारुतेर्वैभवंदृष्ट्वासर्वेसंतोषमागताः रामेणालिंगितःश्रीमान्हनूमानंजनीसुतः १० जयश ब्दोमहानासीत्तदाराघवमंडपे सीताप्रमुदितातस्मैवरानभयदान्ददौ ॥ ११ ॥

रामलीलामृतंचैतत्परमानंददायकं श्रोतॄणांचाथगृणतांपापसंघविदाहकं १२ तंतथोदारचरितं ॥ १२ ॥ १३ ॥ मुक्तःसततंममनामस्मर णाज्जीवन्मुक्तःसन्तिष्ठ ॥ १४ ॥ १५ ॥ ईश्वराभ्यांसीतारामाभ्यां ॥ १६ ॥ कृच्छ्रादिति रामदर्शनवियोगतःकृच्छ्रं ॥ १७ ॥ १८ ॥ मामेव







हनूमानपितंप्राहनत्वारामंप्रहृष्टधीः ॥ त्वन्नामस्मरतोरामनतृप्यतिमनोमम ॥ १२ ॥ अतस्त्वन्नामसततंस्मर न्स्थास्यामिभूतले ॥ यावत्स्थास्यतितेनामलोकेतावत्कलेवरं ॥ १३ ॥ ममतिष्ठतुराजेंद्रवरोयंमेभिकांक्षितः ॥ रामस्तथेतितंप्राहमुक्तस्तिष्ठयथासुखं ॥ १४ ॥ कल्पांतेममसायुज्यंप्राप्स्यसेनात्रसंशयः ॥ तमाहजानकीप्रीता यत्रकुत्रापिमारुते ॥ १५ ॥ स्थितंत्वामनुयास्यंतिभोगाःसर्वेममाज्ञया ॥ इत्युक्तोमारुतिस्ताभ्यामीश्वराभ्यांप्रहृ ष्टधीः ॥ १६ ॥ आनंदाश्रुपरीताक्षोभूयोभूयःप्रणम्यतौ ॥ कृच्छ्राद्ययौतपस्तप्तुंहिमवंतंमहामतिः ॥ १७ ॥ ततोगु हंसमासाद्यरामःप्रांजलिमब्रवीत् ॥ सखेगच्छपुरंरम्यंशृंगवेरमनुत्तमं ॥ १८ ॥ मामेवचिंतयन्नित्यंभुंक्ष्वभो गान्निजार्जितान् ॥ अंतेममैवसारूप्यंप्राप्स्यसेत्वंनसंशयः ॥ १९ ॥ इत्युक्त्वाप्रददौतस्मैदिव्यान्याभरणानिच ॥ राज्यंचविपुलंदत्त्वाविज्ञानंचददौविभुः ॥ २० ॥ रामेणालिंगितोहृष्टोययौस्वभवनंगुहः ॥ येचान्येवानराःश्रेष्ठा अयोध्यांसमुपागताः ॥ २१ ॥ अमूल्याभरणैर्वस्त्रैःपूजयामासराघवः ॥ सुग्रीवप्रमुखाःसर्वेवानराःसविभीष णाः ॥ २२ ॥ यथार्हंपूजितास्तेनरामेणपरमात्मना ॥ प्रहृष्टमनसःसर्वेजग्मुरेवयथागतं ॥ २३ ॥ सुग्रीवप्रमुखाः सर्वेकिष्किंधांप्रययुर्मुदा ॥ विभीषणस्तुसंप्राप्यराज्यंनिहतकंटकं ॥ २४ ॥

चिंतयन्नित्यनेनभोगेष्वनासक्तोभवेतिसूच्यते ॥ १९ ॥ विद्यमानराज्यादधिकदेशराज्यं विज्ञानमात्मतत्त्वज्ञानं ॥ २० ॥ आलिंगितःबहिः शरीरेण सर्वदास्वानुसंधानदानेनांतश्चालिंगितः ॥ २१ ॥ पूजयामासतानितिशेषः ॥ २२ ॥ २३ ॥ २४ ॥

॥ २५ ॥ अनिच्छन्नित्यस्ययौवराज्यमितिकर्म ॥ २६ ॥ कर्माध्यक्षःसर्वकर्मसाक्षी कर्तृत्वादिविहीनोनिरभिमानित्वादतएवनिर्विकारः ॥ २७ ॥ स्वानंदेनतुष्टइत्यनेनलौकिकानंदसामग्रीनिरपेक्षत्वमुक्तं लोकानामुपदेशकृत् अनेनलोकोपदेशएवयज्ञाद्यनुष्ठानप्रयोजनमुक्तं ॥ ॥ २८ ॥ रामेराज्यमितिसौराज्यमाह नपर्यदेवन्निति व्यालाःसर्पाव्याघ्राश्च ॥ २९ ॥ दस्यवश्चोराः ॥३०॥ अनर्थाभावमेवप्रपंचयति वृद्धे

रामेणपूजितःप्रीत्याययौलंकामनिंदितः ॥ राघवोराज्यमखिलंशशासाखिलवत्सलः ॥ २५ ॥ अनिच्छन्नपिरामेणयौवराज्येभिषेचितः ॥ लक्ष्मणःपरयाभक्त्यारामसेवापरोभवत् ॥ २६ ॥ रामस्तुपरमात्मापिकर्माध्यक्षोऽपिनिर्मलः ॥ कर्तृत्वादिविहीनोपिनिर्विकारोपिसर्वदा ॥ २७ ॥ स्वानंदेनापितुष्टःसन्लोकानामुपदेशकृत् ॥ अश्वमेधादियज्ञैश्चसर्वैर्विपुलदक्षिणैः ॥ २८ ॥ अयजत्परमानंदोमानुषंवपुराश्रितः ॥ नपर्यदेवन्विधवानचव्यालकृतंभयं ॥ २९ ॥ नव्याधिजंभयंचासीद्रामेराज्यंप्रशासति ॥ लोकेदस्युभयंनासीदनर्थोनास्तिकश्चन ॥ ३० ॥ वृद्धेषुसत्सुबालानांनासीन्मृत्युभयंतथा ॥ रामपूजापराःसर्वेसर्वेराघवचिंतकाः ॥ ३१ ॥ ववर्षुर्जलदास्तोयंयथाकालंयथारुचि ॥ प्रजाःस्वधर्मनिरतावर्णाश्रमगुणान्विताः ॥ ३२ ॥ औरसानिवरामोऽपिजुगोपपितृवत्प्रजाः ॥ सर्वलक्षणसंयुक्तःसर्वधर्मपरायणः ॥ ३३ ॥ दशवर्षसहस्राणिरामोराज्यमुपास्तसः ॥ ३४ ॥ इदंरहस्यंधनधान्यऋद्धिमद्दीर्घायुरारोग्यकरंसुपुण्यदं ॥ पवित्रमाध्यात्मिकसंज्ञितंपुरारामायणंभाषितमादिशंभुना ॥ ३५ ॥

ष्विति ॥ ३१ ॥ वर्णाश्रमाणांयेगुणाःधर्माःपुराणेषूक्तास्तैरन्विताः ॥ ३२ ॥ औरसानिवत्वस्मिन्प्रीतिमतीःप्रजारामःपितृवज्जुगोप पितरिपुत्राणामिवप्रजानांरामेस्नेहःपितुःपुत्रेष्विवप्रजासुरामस्येतिबोधितं ॥ ३३ ॥ उपास्तअकरोदितियावत् ॥ ३४ ॥ धनधान्यऋद्धिमत्तद्युक्तंयद्दीर्घमायुरारोग्यंचतयोःकारकमात्मानमधिकृत्यभवमाध्यात्मिकं ॥ ३५ ॥

समाहितस्तदेकचित्तः परितुष्टमानसः भगवत्कथापठनजानंदेनेतिभावः मनोगताशिषःमनसाआशास्यमानानर्थान् ॥ ३६ ॥ रामाभिषेकं रावणजयपूर्वकंप्राप्तं आर्यसंमतंशिष्टसंमतंतेनस्वयंशिष्टमितियावत् ॥ ३७ ॥ यआध्यात्मिकेत्यत्रसंधिरार्षः ॥ ३८ ॥ अधिरामसंहितांराम

श्टणोतिभक्त्यामनुजःसमाहितोभक्त्यापठेद्वापरितुष्टमानसः ॥ सर्वाःसमाप्नोतिमनोगताशिषोविमुच्यतेपातककोटिभिःक्षणात् ॥ ३६ ॥ रामाभिषेकंप्रयतःश्टणोतियोधनाभिलाषीलभतेमहद्धनं ॥ पुत्राभिलाषीसुतमार्यसंमतंप्राप्नोतिरामायणमादितःपठन् ॥ ३७ ॥ श्टणोतियोध्यात्मिकरामसंहितांप्राप्नोतिराजाभुवमृद्धसंपदं ॥ शत्रून्विजित्यारिभिरप्रधर्षितोव्यपेतदुःखोविजयीभवेन्नृपः ॥ ३८ ॥ स्त्रियोऽपिश्टण्वंत्यधिरामसंहितांभवंतिताजीवसुताश्वपूजिताः ॥ वंध्याऽपिपुत्रंलभतेसुरूपिणंकथामिमांभक्तियुतांश्टणोतिया ॥ ३९ ॥ श्रद्धान्वितोयःश्टणुयात्पठेन्नरोविजित्यकोपंचतथाविमत्सरः ॥ दुर्गाणिसर्वाणिविजित्यनिर्भयोभवेत्सुखीराघवभक्तिसंयुतः ॥ ४० ॥ सुराःसमस्ताअपियांतितुष्टतांविघ्नाःसमस्ताअपयांतिश्टण्वतां ॥ अध्यात्मरामायणमादितोनृणांभवंतिसर्वाअपिसंपदःपराः ॥ ४१ ॥ रजस्वलावायदिरामतत्पराश्टणोतिरामायणमेतदादितः ॥ पुत्रंप्रसूतेऋषभंचिरायुषंपतिव्रतालोकसुपूजिताभवेत् ॥ ४२ ॥ पूजयित्वातुयेभक्त्यानमस्कुर्वंतिनित्यशः ॥ सर्वैःपापैर्विनिर्मुक्ताविष्णोर्यांतिपरंपदं ॥ ४३ ॥ अध्यात्मरामचरितंकृत्स्नंश्टण्वंतिभक्तितः ॥ पठंतिवास्वयंवक्रात्तेषांरामःप्रसीदति ॥ ४४ ॥

मधिकृत्यप्रवृत्तामध्यात्मरामायणाख्यां ॥ ३९ ॥ कोपमित्युपलक्षणंकामादीनां विमत्सरःअनीर्ष्यः सर्वाणिदुर्गाणिदुःखस्थानानि ॥ ४० ॥ श्टण्वतांपुंसांसुरास्तुष्यंति विघ्नानश्यंति संपदश्वभवंति ॥ ४१ ॥ रामतत्परारामैकचित्ता रजस्वलायाःश्रवणंचतुर्थेह्न्यारभ्यद्वादशरात्रांतं ॥ ॥ ४२ ॥ पूजयित्वेत्यादेःपुस्तकमितिशेषः ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ आयुष्यंआयुर्जनकं कल्पकोटिपर्यंतंकृतमघं ॥ ४६ ॥ ४७ ॥ वैराग्यविज्ञानयुतंश्रोतॄणांतदुभयदातृत्वादितिभावः अस्मिन्भवे संसारेइत्यर्थः ॥ ४८ ॥ योभूतेश्वरोभवःशिवोसकृदखिलवेदराशिमालोड्ययत्तारकंब्रह्मतदेवरामः विष्णुरहस्यमूर्त्तिषुअत्यंतरहस्यमूर्तिःमुख्यामूर्तिरितिविज्ञायाखिलवेदानांसारभूताउपनिषदस्तदर्थसंग्रहमुद्धृत्यसंक्षेपतइदंरामस्यनिगूढतत्त्वंप्रियायैप्राह तस्मैनमइतिशेषः अ

रामएवपरंब्रह्मतस्मिंस्तुष्टेखिलात्मनि ॥ धर्मार्थकाममोक्षाणांयद्यदिच्छतितद्भवेत् ॥ ४५ ॥ श्रोतव्यंनियमेनैतद्रामायणमखंडितं ॥ आयुष्यमारोग्यकरंकल्पकोट्यघनाशनं ॥ ४६ ॥ देवाश्चसर्वेतुष्यंतुग्रहाःसर्वेमहर्षयः ॥ रामायणस्यश्रवणेतुष्यंतिपितरस्तथा ॥ ४७ ॥ अध्यात्मरामायणमेतदद्भुतंवैराग्यविज्ञानयुतंपुरातनं ॥ पठंतिशृण्वंतिलिखंतियेनरास्तेषांभवेऽस्मिन्नपुनर्भवोभवेत् ॥ ४८ ॥ आलोड्याखिलवेदराशिमसकृद्यत्तारकंब्रह्मतद्रामोविष्णुरहस्यमूर्तिरितियोविज्ञायभूतेश्वरः ॥ उद्धृत्याखिलसारसंग्रहमिदंसंक्षेपतःप्रस्फुटंश्रीरामस्यनिगूढतत्त्वमखिलंप्राहप्रियायैभवः ॥ ४९ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेषोडशःसर्गः ॥ ॥ १६ ॥ इतियुद्धकांडंसमाप्तं ॥ छ ॥ ॥ छ ॥ कांडेयुद्धात्मकेसर्गानवसप्तनीलकंठोक्ताः ॥ सार्धैकादशशतश्लोकामनुसंख्यायुताः ॥ ॥ छ ॥

यंश्लोकस्तत्रत्यश्रोतुःशिवशिष्यस्येतिबोध्यं ॥ ४९ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणेसेतौयुद्धकांडेषोडशःसर्गः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ युद्धेयुद्धादिभिःश्रांतान्वानरान्प्रतिपूज्यच ॥ स्वानंदेनस्थितोयोध्यांसरामःपातुसर्वदा ॥ १ ॥ ॥ छ ॥

## ॥ अथ श्रीमदध्यात्मरामायणेउत्तरकांडप्रारंभः ॥

श्रीगणेशायनमः ॥ १ ॥ मृधेयुद्धे ॥ १ ॥ २ ॥ कथंकेनप्रकारेण ॥ ३ ॥ श्रद्दधत्याःएतच्छ्रवणेश्रद्धावत्याः कथामृतमास्वाद्यमेममतदास्वादनविषयातृष्णाऽत्यंतंवर्धते ॥४॥ रामेराज्यमुपस्थिते राज्यंप्राप्तवतीत्यर्थः अभिवंदितुंनंतुंस्तोतुंच ॥ ५ ॥ तानेवऋषीनाह विश्वामित्रइति ॥

जयतिरघुवंशतिलकःकौसल्याहृदयनंदनोरामः ॥ दशवदननिधनकारीदाशरथिःपुंडरीकाक्षः ॥ १ ॥ पार्वत्युवाच अथरामःकिमकरोत्कौसल्यानंदवर्धनः ॥ हत्वामृधेरावणादीन्राक्षसान्भीमविक्रमः ॥ १ ॥ अभिषिक्तस्त्वयोध्यायांसीतयासहराघवः ॥ मायामानुषतांप्राप्यकतिवर्षाणिभूतले ॥ २ ॥ स्थितवान्लीलयादेवःपरमात्मासनातनः ॥ अत्यजन्मानुषंलोकंकथमंतेरघूद्वहः ॥ ३ ॥ एतदाख्याहिभगवन्श्रद्दधत्याममप्रभो ॥ कथापीयूषमास्वाद्यतृष्णामेतीववर्धते ॥ रामचंद्रस्यभगवन्ब्रूहिविस्तरशःकथां ॥ ४ ॥ श्रीमहादेवउवाच राक्षसानांवधंकृत्वाराज्यंरामउपस्थिते ॥ आययुर्मुनयःसर्वेश्रीराममभिवंदितुं ॥ ५ ॥ विश्वामित्रोसितःकण्वोदुर्वासाभृगुरंगिराः ॥ कश्यपोवामदेवोत्रिस्तथासप्तर्षयोमलाः ॥ ६ ॥ अगस्त्यःसहशिष्यैश्चमुनिभिःसहितोभ्यगात् ॥ द्वारमासाद्यरामस्यद्वारपालमथाब्रवीत् ॥ ७ ॥ ब्रूहिरामायमुनयःसमागत्यबहिःस्थिताः ॥ अगस्त्यप्रमुखाःसर्वेआशीर्भिरभिनंदितुं ॥ ८ ॥ प्रतीहारस्ततोराममगस्त्यवचनाद्द्रुतं ॥ नमस्कृत्वाब्रवीद्वाक्यंविनयावनतःप्रभुं ॥ ॥ ९ ॥ कृतांजलिरुवाचेदमगस्त्योमुनिभिःसह ॥ देवत्वद्दर्शनार्थायप्राप्तोबहिरुपस्थितः ॥ १० ॥ तमुवाचद्वारपालंप्रवेशययथासुखं ॥ पूजिताविविशुर्वेश्मनानारत्नविभूषितं ॥ ११ ॥

॥ ६ ॥ मुनिभिःशिष्यैःसहितइत्यर्थः ॥ ७ ॥ अगस्त्यप्रमुखामुनयआशीर्भिरभिनंदितुंसमागत्यबहिःस्थिताःसंतीतिरामायब्रूहीत्यन्वयः ॥ ८ ॥ ९ ॥ कृतांजलिःप्रतीहारइतिशेषः प्राप्तःस्वाश्रमादागतःबहिर्द्वारिउपस्थितोस्तीतिशेषः ॥ १० ॥ पूजिताःप्रतीहारेणमार्गप्रदर्शनादिनापूजिताःकृतादराइतियावत् ॥ ११ ॥

गांमधुपर्कार्थंवृषभंच महोक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदितिस्मृतेः ॥ १२ ॥ यथार्हतःअर्होयोग्यतातदनतिक्रमादित्यर्थः भगवतःस काशात्पूजालाभेनप्रहर्षः ॥ १३ ॥ अब्रुवन्अपृच्छन् तमेवाभिनयति कुशलमित्यादि ॥१४॥ सरावणस्तेनभारःक्लेशवध्योनंकितुसुकरवधइ



दृष्ट्वारामोमुनीन्शीघ्रंप्रत्युत्थायकृतांजलिः ॥ पाद्यार्घ्यादिभिरापूज्यगांनिवेद्ययथाविधि ॥ १२ ॥ नत्वातेभ्योद दौदिव्यान्यासनानियथार्हतः ॥ उपविष्टाःप्रहृष्टाश्चमुनयोरामपूजिताः ॥ १३ ॥ संपृष्टकुशलाःसर्वेरामंकुशलमब्रु वन् ॥ कुशलंतेमहाबाहोसर्वत्ररघुनंदन ॥ १४ ॥ दिष्ट्येदानींप्रपश्यामोहतशत्रुमरिंदम ॥ नहिभारःसतेरामरावणो राक्षसेश्वरः ॥ १५ ॥ सधनुस्त्वंहिलोकांस्त्रीन्विजेतुंशक्तएवहि ॥ दिष्ट्यात्वयाहताःसर्वेराक्षसारावणादयः ॥ १६ ॥ सत्यमेतन्महाबाहोरावणस्यनिबर्हणं ॥ असत्यमेतत्संप्राप्तंरावणेर्यन्निषूदनं ॥ १७ ॥ अंतकप्रतिमाःसर्वेकुंभक र्णादयोमृधे ॥ अंतकप्रतिमैर्बाणैर्हतास्तेरघुसत्तम ॥ १८ ॥ दत्ताचेयंत्वयाऽस्माकंपुरात्वभयदक्षिणा ॥ हत्वारक्षो गणान्संख्येकृतकृत्योद्यजीवसि ॥ १९ ॥ श्रुत्वातुभाषितंतेषांमुनीनांभावितात्मनां ॥ विस्मयंपरमंगत्वारामःप्रां जलिरब्रवीत् ॥ २० ॥ रावणादीनतिक्रम्यकुंभकर्णादिराक्षसान् ॥ त्रिलोकजयिनोहित्वाकिंप्रशंसथरावणिं ॥ २१ ॥ ततस्तद्वचनंश्रुत्वाराघवस्यमहात्मनः ॥ कुंभयोनिर्महातेजारामंप्रीत्यावचोब्रवीत् ॥ २२ ॥ शृणुरामयथावृत्तंराव णेरावणस्यच ॥ जन्मकर्मवरादानंसंक्षेपाद्वदतोमम ॥ २३ ॥

त्यर्थः ॥ १५ ॥ सुकरत्वमेवदर्शयंति सधनुरिति इंद्रजितंस्मृत्वाहुर्दिष्ट्येति ॥ १६ ॥ तदेवस्पष्टयतिसत्यमिति रावणेर्मेघनादस्य ॥ १७ ॥ १८ ॥ यादक्षिणापुरादत्तादातुंप्रतिज्ञातासारक्षोगणान्हत्वापूर्णाकृताअतःकृतकृत्यःसन्जीवसित्वमेवजीवतवजीवनमेवश्लाघ्यंजीवनमित्यर्थः ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ यथावृत्तंजातंतथाशृणु ॥ २३ ॥

॥ २४ ॥ मुनिपुंगवःमुनिश्रेष्ठःसन् अवसत् तपस्तेपेच ॥ २५ ॥ २६ ॥ विघ्नंचक्रुःगायननृत्यादिभिरितिशेषः ॥ २७ ॥ २८ ॥ प्रपश्यतीत्यत्रनुमभावआर्षः ॥ २९ ॥ व्यंजितःप्रकटीकृतोंतःमध्येशरीरजोगर्भोयस्याःसा ॥ ३० ॥ अवैत्अजानात् ॥ ३१ ॥ ३२ ॥ उभयोःमातापित्रोः

पुराकृतयुगेरामपुलस्त्योब्रह्मणःसुतः॥ तपस्तप्तुंगतोविद्वान्मेरोःपार्श्वंमहामतिः ॥ २४॥ तृणबिंदोराश्रमेसौम्यवसन्मुनिपुंगवः॥ तपस्तेपेमहातेजाःस्वाध्यायनिरतःसदा॥ २५॥ तत्राश्रमेमहारम्येदेवगंधर्वकन्यकाः॥ गायंत्योननृतुस्तत्रहसंत्योवादयंतिच॥ २६॥ पुलस्त्यस्यतपोविघ्नंचक्रुःसर्वाअनिंदिताः॥ ततःक्रुद्धोमहातेजाव्याजहारवचोमहत्॥ २७॥ यामेदृष्टिपथंगच्छेत्सागर्भंधारयिष्यति॥ ताःसर्वाःशापसंविग्नानतंदेशंप्रचक्रमुः॥२८॥ तृणबिंदोस्तुराजर्षेःकन्यातन्नाशृणोद्वचः॥ विचचारमुनेरग्रेनिर्भयातंप्रपश्यती॥ २९॥ बभूवपांडुरतनुर्व्यंजितांतःशरीरजा ॥ दृष्ट्वासादेहवैवर्ण्यंभीतापितरमन्वगात्॥ ३० ॥ तृणबिंदुश्चतांदृष्ट्वाराजर्षिरमितद्युतिः॥ ध्यात्वामुनिकृतंसर्वमवैद्विज्ञानचक्षुषा॥ ३१॥ तांकन्यांमुनिवर्यायपुलस्त्यायददौपिता॥ तांप्रगृह्याब्रवीत्कन्यांबाढमित्येवसद्विजः॥ ३२॥ शुश्रूषणपरांदृष्ट्वामुनिःप्रीतोब्रवीद्वचः॥दास्यामिपुत्रमेकंतेउभयोर्वंशवर्धनं॥ ३३॥ ततःप्रासूतसापुत्रंपुलस्त्याल्लोकविश्रुतं॥ विश्रवाइतिविख्यातःपौलस्त्योब्रह्मविन्मुनिः ॥ ३४॥ तस्यशीलादिकंदृष्ट्वाभरद्वाजोमहामुनिः॥ भार्यार्थंस्वांदुहितरंददौविश्रवसेमुदा ॥ ३५ ॥ तस्यांतुपुत्रःसंजज्ञेपौलस्त्याल्लोकसंमतः॥ पितृतुल्योवैश्रवणोब्रह्मणाचानुमोदितः॥ ३६॥

॥ ३३ ॥ यंप्रासूतसविश्रवाइतिविख्यातइत्यर्थः ॥ ३४ ॥ शीलमुत्तमस्वभावः ॥ ३५ ॥ वैश्रवणःकुबेरः ॥ ३६ ॥

तत्तपसातस्यतपसामनोभिलषितंधनेशत्वरूपंददौ ॥ ३७ ॥ ३८ ॥ प्राहपितरमितिकर्म वरंदत्वेत्यस्यस्थानंनदत्तवानित्यनेनान्वयः ॥ ३९ ॥ हिंसापीडायत्रकस्यापिस्वाम्यंनास्तितादृशंवदेत्यर्थः ॥४०॥४१॥ अन्यैःरिपुभिर्दुष्प्रधर्षा ॥ ४२ ॥ पुरादैत्यानांरसातलप्रवेशोत्तरमितःप्रागि

ददौतत्तपसातुष्टोब्रह्मातस्मैवरंशुभं ॥ मनोभिलषितंतस्यधनेशत्वमखंडितं ॥ ३७॥ततोलब्धवरःसोपिपितरंद्रष्टुमागतः ॥ पुष्पकेणधनाध्यक्षोब्रह्मदत्तेनभास्वता ॥ ३८ ॥ नमस्कृत्वाथपितरंनिवेद्यतपसःफलं ॥ प्राहमेभगवान्ब्रह्मादत्वावरमनिंदितं ॥ ३९ ॥ निवासायनमेस्थानंदत्तवान्परमेश्वरः ॥ ब्रूहिमेनियतंस्थानंहिंसायत्रनकस्यचित् ॥ ४० ॥ विश्रवाअपितंप्राहलंकानामपुरीशुभा ॥ राक्षसानांनिवासायनिर्मिताविश्वकर्मणा ॥ ४१ ॥ त्यक्काविष्णुभयाद्दैत्याविविशुस्तेरसातलं ॥ सापुरीदुष्प्रधर्षान्यैर्मध्येसागरमास्थिता ॥ ४२ ॥ तत्रवासायगच्छत्वंनान्यैःसाधिष्ठितापुरा ॥ पित्रादिष्टस्त्वसौगत्वातांपुरींधनदोविशत् ॥ ४३॥सतत्रसुचिरंकालमुवासपितृसंमतः॥ कस्यचित्त्वथकालस्यसुमालीनामराक्षसः ॥ ४४ ॥ रसातलान्मर्त्यलोकंचचारपिशिताशनः ॥ गृहीत्वातनयांकन्यांसाक्षाद्देवीमिवश्रियं ॥ ४५ ॥ अपश्यद्धनदंदेवंचरंतंपुष्पकेणसः ॥ हितायचिंतयामासराक्षसानांमहामनाः ॥ ४६ ॥ उवाचतनयांतत्रकैकसींनामनामतः ॥ वत्सेविवाहकालस्तेयौवनंचातिवर्त्तते ॥ ४७॥ प्रत्याख्यानाच्चभीतैस्त्वंनवरैर्गृह्यसेशुभे ॥ सात्वंवरयभद्रंतेमुनिंब्रह्मकुलोद्भवं ॥ ४८ ॥ स्वयमेवततःपुत्राभविष्यंतिमहाबलाः ॥ ईदृशाःसर्वशोभाढ्याधनदेनसमाःशुभे ॥ ४९ ॥ तथेतिसाश्रमंगत्वामुनेरग्रेव्यवस्थिता ॥ लिखंतीभुवमग्रेणपादेनाधोमुखीस्थिता ॥ ५० ॥

त्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ गृह्यसेप्रार्थ्यसे क्वचित्तथैवपाठः॥४८॥ ईदृशाइत्यस्यैवविवरणंधनदेनसमाइति॥४९॥ साआश्रममितिच्छेदः लज्जावशात्भूलेखनादि ॥५०॥

काकिंजातीया कन्यासिउतविवाहितासीतिप्रश्नः ॥ ५१ ॥ ५२ ॥ ५३ ॥ त्वत्तोप्येवंविधौसुतावित्यत्रकाकुः यस्तेपुत्रोभविष्यतिसमहामति
र्भविष्यतीत्यर्थः ॥ ५४ ॥ तदेवाह महाभागवतइति रामभक्त्येत्यस्ययुक्तइतिशेषः एकस्मिंस्तस्मिन्नेवतत्परःसर्वदादत्तचित्तः ॥ ५५ ॥ तद्र

तामपृच्छन्मुनिःकात्वंकन्यासिवरवर्णिनि॥ साब्रवीत्प्रांजलिर्ब्रह्मन्ध्यानेनज्ञातुमर्हसि॥५१॥ ततोध्यात्वामुनिः
सर्वंज्ञात्वातांप्रत्यभाषत॥ ज्ञातंतत्त्वाभिलषितंमत्तःपुत्रानभीप्स्यसि॥ ५२ ॥ दारुणायांतुवेलायामागतासिसु
मध्यमे॥ अतस्तेदारुणौपुत्रौराक्षसौसंभविष्यतः ॥ ५३॥ साब्रवीन्मुनिशार्दूलत्वत्तोप्येवंविधौसुतौ॥ तामाहप
श्चिमोयस्तेभविष्यतिमहामतिः॥ ५४ ॥ महाभागवतःश्रीमान्रामभक्त्यैकतत्परः॥ इत्युक्तासातथाकालेसुषु
वेदशकंधरम्॥ ५५॥ रावणंविंशतिभुजंदशशीर्षंसुदारुणं॥ तद्रक्षोजातमात्रेणचचालचवसुंधरा ॥ ५६ ॥ ब
भूवुर्नाशहेतूनिनिमित्तान्यखिलान्यपि॥ कुंभकर्णस्ततोजातोमहापर्वतसन्निभः॥५७॥ ततःशूर्पणखानामजा
तारावणसोदरी ॥ ततोविभीषणोजातःशांतात्मासौम्यदर्शनः ॥ ५८ ॥ स्वाध्यायीनियताहारोनित्यकर्मपराय
णः॥ कुंभकर्णस्तुदुष्टात्माद्विजान्संतुष्टचेतसः ॥ ५९ ॥ भक्षयन्नृषिसंघांश्चविचचारातिदारुणः ॥ रावणोपिम
हासत्वोलोकानांभयदायकः॥ ववृधेलोकनाशायत्यामयोदेहिनामिव॥ ६०॥

क्षोजातमात्रेणतस्यरक्षसोजन्ममात्रेण ॥ ५६ ॥ नाशहेतूनिरक्षोवंशस्यलोकानांचेतिशेषः ॥ ५७ ॥ ५८ ॥ स्वाध्यायीवेदाध्ययनवान्
नित्यकर्माग्निहोत्रादितुष्टचेतसः अतिशांतानित्यर्थः भक्षयन्नित्यनेनान्वयः ॥ ५९ ॥ आमयोरोगः ॥ ६० ॥

सकलांतरस्थंजानासि सर्वांतर्यामित्वात् तदेवस्फुटयति सर्वहृदिस्थितोहीत्यंतेन हिर्यतइत्यर्थे विज्ञानदृक्विज्ञानेनस्वरूपेणदृक्सर्वद्रष्टा अनेनचित्तादिकरणांतरनैरपेक्ष्यमुक्तं अतएवसाक्षीसाक्षाद्द्रष्टा नन्वहंमनुष्यःकुतोममेदृशत्वंतत्राह त्वंलीलेति वस्तुतोनमनुष्यस्त्वमितिभावः स्वमहिमन्स्वमात्रज्ञेयमहिमन् अन्यैस्त्वन्महिमादुर्ज्ञेयइत्यर्थः मायागुणैःरजआदिभिर्नाज्यसेनस्पृश्यसे एवंसर्वज्ञस्यतवात्रैकथनंयद्यप्यनुचितंतथापिभवतालीलार्थंप्रतिचोदितःपृष्टोरक्षोद्भवंवक्ष्यामि रक्षोद्भवमित्यत्रसंधिरार्षः ॥ ६१ ॥ ननुत्वंमामेवंकथंज्ञातवानसीत्यत्राह जानामीति मूढोप्यहंभवदनुग्रहतएवंविशेषणंत्वांजानामि अनंतंदेशकालापरिच्छेद्यं अक्षराजत्वाभ्यांनाशोत्पत्तिराहित्यमुक्तं सांसारिकान्प्रतिगूढंगु

रामत्वंसकलांतरस्थमभितोजानासिविज्ञानदृक्साक्षीसर्वहृदिस्थितोहिपरमोनित्योदितोनिर्मलः ॥ त्वंलीलामनुजाकृतिःस्वमहिमामायागुणैर्नाज्यसेलीलार्थंप्रतिचोदितोद्यभवतोवक्ष्यामिरक्षोद्भवं ॥ ६१ ॥ जानामिकेवलमनंतमचिंत्यशक्तिंचिन्मात्रमक्षरमजंविदितात्मतत्त्वं ॥ त्वांरामगूढनिजरूपमनुप्रवृत्तोमूढोप्यहंभवदनुग्रहतश्चरामि ॥ ६२ ॥ एवंवदंतंमिनवंशपवित्रकीर्तिःकुंभोद्भवंरघुपतिःप्रहसन्बभाषे ॥ मायाश्रितंसकलमेतदनन्यकत्वान्मत्कीर्तनंजगतिपापहरंनिबोध ॥ ६३ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडे प्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥

तंकृतंनिजरूपंयेनतं अथापित्वामनुप्रवृत्तःत्वत्प्रवृत्तिमार्गमनुप्रवृत्तोंगीकृतप्रवृत्तिमार्गइहलोकेचरामि ॥ ६२ ॥ इनवंशेसूर्यवंशेपवित्राकीर्तिर्यस्यसः एतत्सकलमप्युदाहृतमंतर्यामित्वादिदृश्यमानंजगच्चमायाश्रितमेव तत्रहेतुःअनन्यकत्वात्नविद्यतेऽन्यत्यस्यसोनन्यकस्तस्यभावस्तत्त्वंममतादृशत्वात्धर्मरहितत्वात्इतराधारत्वादेरप्यसंभवात्सर्वंधर्मजालमपिगृह्यमाणंमायाश्रितमेवजानीहीतिशेषः स्वावतारस्यमुख्यप्रयोजनमाह मत्कीर्तनमिति स्वकीर्तनद्वारापापहरणार्थमेवावतारइतिभावः ॥ ६३ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थैत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणसेतौउत्तरकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥

॥१॥ अथेति तत्रविश्रवसआश्रमे पितरंविश्रवसं ॥२॥ सामीप्यंगत्वासामीप्यंप्राप्य ॥३॥४॥ अचिरेणेतिच्छेदः ॥ ५॥ मांपश्यशिवेनचक्षुषेति शेषः दुष्करंतपःकर्तुमित्यन्वयः ॥ ६ ॥ फलस्यवांछितस्यसिध्यर्थं सहानुजःकुंभकर्णविभीषणसहितः स्वंस्वंनियमंस्वस्ववासनोद्भूतंराजसता

श्रीरामवचनंश्रुत्वापरमानंदनिर्भरः॥मुनिःप्रोवाचसदसिसर्वेषांतत्रशृण्वतां॥१॥अथवित्तेश्वरोदेवस्तत्रकालेन केनचित्॥ ॥आययौपुष्पकारूढःपितरंद्रष्टुमंजसा॥२॥ दृष्ट्वातंकैकसीतत्रभ्राजमानंमहौजसं॥ राक्षसीपुत्रसामी प्यंगत्वारावणमब्रवीत्॥३॥ पुत्रपश्यधनाध्यक्षंज्वलंतंस्वेनतेजसा॥ त्वमप्येवंयथाभूयास्तथायत्नंकुरुप्रभो॥४॥ तच्छुत्वारावणोरोषात्प्रतिज्ञामकरोद्द्रुतं॥ धनदेनसमोवापित्यधिकोवाचिरेणतु॥५॥ भविष्याम्यंबमांपश्यसंता पंत्यजसुव्रते॥ इत्युक्तादुष्करंकर्तुंतपःसदशकंधरः॥ ६॥ आगमत्फलसिद्ध्यर्थंगोकर्णंतुसहानुजः॥ स्वंस्वंनियम मास्थायभ्रातरस्तेतपोमहत्॥ ७॥आस्थितादुष्करंघोरंसर्वलोकैकतापनं॥दशवर्षसहस्राणिकुंभकर्णोकरोत्तपः॥ ॥८॥ विभीषणोऽपिधर्मात्मासत्यधर्मपरायणः॥ पंचवर्षसहस्राणिपादेनैकेनतस्थिवान्॥९॥दिव्यवर्षसहस्रंतुनि राहारोदशाननः॥पूर्णेवर्षसहस्रेतुशीर्षमग्नौजुहावसः॥एवंवर्षसहस्राणिनवतस्यातिचक्रमुः॥१०॥अथवर्षसहस्रे तुदशमेदशमंशिरः॥छेत्तुकामस्यधर्मात्माप्राप्तश्चाथप्रजापतिः॥वत्सवत्सदशग्रीवप्रीतोस्मीत्यभ्यभाषत॥११॥ वरंवरयदास्यामियत्तेमनसिकांक्षितं ॥ दशग्रीवोपितच्छुत्वाप्रहृष्टेनांतरात्मना॥१२॥अमरत्वंवृणोमीशवरदो यदिमेभवान्॥ सुपर्णनागयक्षाणांदेवतानांतथासुरैः ॥ अवध्यत्वंतुमेदेहित्तृणभूताहिमानुषाः॥ १३॥

मससात्विकरूपं ॥ ७॥ दुष्करंअन्यैरितिशेषः ॥ ८ ॥ ९ ॥ १० ॥ दशमंशिरश्छेत्तुकामस्यप्रजापतिःप्राप्तःसमीपमितिशेषः ॥ ११ ॥ १२ ॥ वृतममरत्वमेवभगवदिच्छावशात्स्वयमेववृणोति सुपर्णेत्यादि ॥ १३ ॥

तथास्त्वित्यस्यावददितिशेषः ॥ १४ ॥ अक्षयाणिसुपर्णादिकृतक्षयरहितानि ॥ १५ ॥ १६ ॥ विभीषणस्यधर्मविषयबुद्धिप्राप्तिकामनयात
पःकर्तृत्वादरेणवत्सेतिद्विःसंबोधनं ॥ १७ ॥ तदेवाह देवमेइत्यादिना ॥ १८ ॥ तथैवचभविष्यसि धर्मबुत्धिरेवभविष्यसि ॥ १९ ॥ २० ॥

तथास्त्वितिप्रजाध्यक्षःपुनराहदशाननं॥ अग्नौहुतानिशीर्षाणियानितेऽसुरपुंगव ॥१४॥ भविष्यंतियथापूर्वम
क्षयाणिचसत्तम ॥ १५॥ एवमुक्त्वाततोरामदशग्रीवंप्रजापतिः॥ विभीषणमुवाचेदंप्रणतंभक्तवत्सलः॥१६॥
विभीषणत्वयावत्सकृतंधर्मार्थमुत्तमं॥ तपस्ततोवरंवत्सवृणीष्वाभिमतंहितं॥१७॥विभीषणोपितंनत्वाप्रांजलि
र्वाक्यमब्रवीत्॥देवमेसर्वदाबुद्धिर्धर्मेतिष्ठतुशाश्वती ॥ मारोचयत्वधर्मेमेबुद्धिःसर्वत्रसर्वदा॥१८॥ ततःप्रजा
पतिःप्रीतोविभीषणमथाब्रवीत्॥ वत्सत्वंधर्मशीलोसितथैवचभविष्यसि ॥१९॥ अयाचितोपितेदास्येत्यमर
त्वंविभीषण॥कुंभकर्णमथोवाचवरंवरयसुव्रत ॥२०॥ वाण्याव्याप्तोथतंप्राहकुंभकर्णःपितामहं॥ स्वप्स्यामिदे
वषण्मासान्दिनमेकंतुभोजनं ॥२१॥ एवमस्त्वितितंप्राहब्रह्माद्दृष्ट्वादिवौकसः॥ सरस्वतीचतद्वक्त्रान्निर्गताप्रय
यौदिवं ॥ २२ ॥ कुंभकर्णस्तुदुष्टात्माचिंतयामासदुःखितः॥अनभिप्रेतमेवास्याल्किंनिर्गतमहोविधिः॥२३॥
सुमालीवरलब्धांस्तान्ज्ञात्वापौत्रान्निशाचरान् ॥ पातालान्निर्भयःप्रायात्प्रहस्तादिभिरन्वितः ॥ २४॥दश
ग्रीवंपरिष्वज्यवचनंचेदमब्रवीत्॥ दिष्ट्यातेपुत्रसंवृत्तोवांछितोमेमनोरथः॥ २५॥ यद्भयाच्चवयंलंकांत्यक्त्वाया
तारसातलं ॥ तद्गतंनोमहाबाहोमहद्विष्णुकृतंभयं॥ २६॥

वाण्या देवप्रार्थितया ॥ २१ ॥ २२ ॥ आस्यादितिच्छेदः अहोविधिर्दुर्लंघ्यइतिशेषः ॥ २३ ॥ वरलब्धान्प्राप्तवरान्पौत्रान्पुत्रीपुत्रान् विदा
दित्वादज् प्रायात्रावणादिसमीपमितिशेषः ॥२४ ॥ मेवांछितोमनोरथस्तेदिष्ट्यासंवृत्तः ॥ २५ ॥ अतोयद्भयादिति तद्विष्णुकृतंभयंनोस्माकं
गतं सर्वावध्यत्वस्यत्वयाप्राप्तत्वात् ॥ २६ ॥

इयंलंकापूर्वमस्माभिरुषिता अनेनास्मत्संबंधादियंतवधनभूतेतिध्वनितं इदानींतेभ्रात्राधनदेनाक्रांतांत्वंप्रत्यानेतुंस्वाधीनांकर्तुमर्हसि ॥ २७॥ ननुज्येष्ठेभ्रातरिकथंबलंयोग्यंतत्राह राज्ञांबंधुःकुतःसुहृत्कुतः सर्वथैतानुपमर्द्यैवराज्यप्रवृत्तेरितिभावः ॥ २८॥ एवंश्रुत्वारावणवाक्यंश्रुत्वेत्यर्थः ॥ २९ ॥ ३० ॥ सौभ्रात्रंभ्रात्रादिभिःप्रीतिः ॥ ३१ ॥ देवैरनुष्ठितंलंकाहरणरूपंवैरमिदानींतनमेवनकिंतुप्राचीनमेव एवंचतैरस्मद्वेषकरण

अस्माभिःपूर्वमुषितालंकेयंधनदेनते ॥ भ्रात्राऽक्रांतामिदानींत्वंप्रत्यानेतुमिहार्हसि ॥ २७॥ साम्नावाथबलेनापिराज्ञांबंधुःकुतःसुहृत् ॥ इत्युक्तोरावणःप्राहनार्हस्येवंप्रभाषितुं ॥ २८॥ वित्तेशोगुरुरस्माकमेवंश्रुत्वातमब्रवीत् ॥ प्रहस्तःप्रश्रितंवाक्यंरावणंदशकंधरं ॥ २९॥ शृणुरावणयत्नेननैवंत्वंवक्तुमर्हसि ॥ नाधीताराजधर्मास्तेनीतिशास्त्रंतथैवच ॥ ३० ॥ शूराणांनहिसौभ्रात्रंशृणुमेवदतःप्रभो ॥ कश्यपस्यसुतादेवाराक्षसाश्चमहाबलाः ॥ ३१॥ परस्परमयुध्यंतत्यक्त्वासौहृदमायुधैः ॥ नैवेदानींतनंराजन्वैरंदेवैरनुष्ठितं ॥ ३२॥ प्रहस्तस्यवचःश्रुत्वादशग्रीवोदुरात्मनः ॥ तथेतिक्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ॥ ३३ ॥ दूतंप्रहस्तंसंप्रेष्यनिष्कास्यधनदेश्वरं ॥ लंकामाक्रम्यसचिवैराक्षसैःसुखमास्थितः ॥ ३४॥ धनदःपितृवाक्येनत्यक्त्वालंकांमहायशाः ॥ गत्वाकैलासशिखरंतपसातोषयच्छिवं ॥ ३५॥ तेनसख्यमनुप्राप्यतेनैवपरिपालितः ॥ अलकांनगरींतत्रनिर्ममेविश्वकर्मणा ॥ ३६॥ दिक्पालत्वंचकारात्रशिवेनपरिपालितः ॥ रावणोराक्षसैःसार्धमभिषिक्तःसहानुजैः ॥ ३७ ॥

वदस्माकमपितद्वेषकरणंनदोषायेतिभावः ॥ ३२ ॥ दुरात्मनःप्रहस्तस्येत्यन्वयः ॥ ३३ ॥ धनदनामकमीश्वरंनिष्कास्य ॥ ३४ ॥ धनदःतद्दूतगमनोत्तरंपितृसमीपंगत्वारावणएवमाहात्रकिमुचितमितिपृष्टवांस्तेनचत्यागएवोचितोस्यावध्यत्वादित्युक्तेतांत्यक्तवानितिगाथापौराणिकी ॥ ॥ ३५ ॥ निर्ममेकारितवान् ॥ ३६ ॥ रावणोऽनुजैःसार्धंराक्षसैरभिषिक्तः लंकाराज्यइतिशेषः ॥ ३७ ॥

असुराणांतदवताररूपरक्षसां यद्वाक्रूरकर्मत्वाद्रक्षःस्वप्यसुरपदप्रयोगः एवमसुरेष्वपिराक्षसपदप्रयोगइतिबोध्यं कालखंजायतद्वंश्याय नाम्ना विद्युज्जिव्हाय भगिनींशूर्पणखां ॥ ३८ ॥ राक्षसानांविश्वकर्मादितेःसुतोमयःमंदोदरींकन्यांरावणायददौ पुनःशक्तिंचामोघांस्वनिर्मितांददा

राज्यंचकारासुराणांत्रिलोकींबाधयन्खलः ॥ भगिनींकालखंजायददौविकटरूपिणीं ॥ ३८ ॥ विद्युज्जिव्हायनाम्नासौमहामायीनिशाचरः ॥ ततोमयोविश्वकर्माराक्षसानांदितेःसुतः ॥ ३९ ॥ सुतांमंदोदरींनाम्नाददौलोकैकसुंदरीं ॥ रावणायपुनःशक्तिममोघांप्रीतमानसः ॥ ४० ॥ वैरोचनस्यदौहित्रींवृत्रज्वालेतिविश्रुतां ॥ स्वयंदत्तामुदवहत्कुंभकर्णायरावणः ॥ ४१ ॥ गंधर्वराजस्यसुतांशैलूषस्यमहात्मनः ॥ विभीषणस्यभार्यार्थेधर्मज्ञांसमुदावहत् ॥ ४२ ॥ सरमांनामसुभगांसर्वलक्षणसंयुतां ॥ ततोमंदोदरीपुत्रंमेघनादमजीजनत् ॥ ४३ ॥ जातमात्रस्तुयोनादंमेघवत्समुमोचह ॥ ततःसर्वेब्रुवन्मेघनादोयमितिचासकृत् ॥ ४४ ॥ कुंभकर्णस्ततःप्राहनिद्रामांबाधतेप्रभो ॥ ततश्चकारयामासगुहांदीर्घांसुविस्तरां ॥ ४५ ॥ तत्रसुष्वापमूढात्माकुंभकर्णोविघूर्णितः ॥ निद्रितेकुंभकर्णेतुरावणोलोकरावणः ॥ ४६ ॥ ब्राह्मणानृषिमुख्यांश्चदेवदानवकिन्नरान् ॥ देवश्रियोमनुष्यांश्चनिजघ्नेसमहोरगान् ॥ ॥ ४७ ॥ धनदोपिततःश्रुत्वारावणस्याक्रमंप्रभुः ॥ अधर्मंमाकुरुष्वेतिदूतवाक्यैर्न्यवारयत् ॥ ४८ ॥ ततःक्रुद्धोदशग्रीवोजगामधनदालयं ॥ विनिर्जित्यधनाध्यक्षंजहारोत्तमपुष्पकं ॥ ४९ ॥

॥ ३९ ॥ ४० ॥ स्वयंदत्तामितितत्पित्रेतिशेषः ॥ ४१ ॥ ४२ ॥ ४३ ॥ मेघनादेतिनाम्नोन्वर्थत्वमाह जातमात्रइति ॥ ४४ ॥ ४५ ॥ ४६ ॥ देवादीन्समहोरगान्निजघ्ने देवश्रियश्चनिजघ्नेहृतवानित्यर्थः देवस्त्रियइतिपाठांतरं ॥ ४७ ॥ अक्रमंदेवादिष्वन्यायाचरणं ॥ ४८ ॥ उत्तमपुष्पकंवाहनेषूत्तमंपुष्पकाख्यंवाहनमित्यर्थः ॥ ४९ ॥

स्वर्गलोकंमेरूर्ध्वस्थितंशक्रलोकं अनेनयमादिलोकास्तदधःस्थिताइतिध्वनयति ॥ ५० ॥ दैवतैःसहितेनेंद्रेणास्ययुद्धमभवदित्यर्थः ॥ ५१ ॥
॥ ५२ ॥ प्रथमतइंद्रग्रहणंततस्तस्यबंधनं ततोबद्धस्यस्वपुरेआनयनं ॥ ५३ ॥ इंद्रमोचनप्रतिदानत्वेनतदभीष्टानेकवरदानं ॥ ५४ ॥ ५५ ॥

ततोयमंचवरुणंनिर्जित्यसमरेसुरः ॥ स्वर्गलोकमगात्तूर्णंदेवराजजिघांसया ॥ ५० ॥ ततोऽभवन्महद्युद्धमिं
द्रेणसहदैवतैः ॥ ततोरावणमभ्येत्यबबंधत्रिदशेश्वरः ॥ ५१ ॥ तच्छ्रुत्वासहसागत्यमेघनादःप्रतापवान् ॥ कृत्वा
घोरंमहद्युद्धंजित्वात्रिदशपुंगवान् ॥ ५२ ॥ इंद्रंगृहीत्वाबध्वासौमेघनादोमहाबलः ॥ मोचयित्वातुपितरंगृहीत्वेंद्रं
ययौपुरं ॥ ५३ ॥ ब्रह्मातुमोचयामासदेवेंद्रंमेघनादतः ॥ दत्वावरान्बहूंस्तस्मैब्रह्मास्वभवनंययौ ॥ ५४ ॥ रावणो
विजयीलोकान्सर्वान्जित्वाक्रमेणतु ॥ कैलासंतोलयामासबाहुभिःपरिघोपमैः ॥ ५५ ॥ तत्रनंदीश्वरेणैवंशप्तोयं
राक्षसेश्वरः ॥ वानरैर्मानुषैश्चैवनाशंगच्छेतिकोपिना ॥ ५६ ॥ शप्तोप्यगणयन्वाक्यंययौहैहयपत्तनं ॥ तेनबद्धो
दशग्रीवःपुलस्त्येनविमोचितः ॥ ५७ ॥ ततोपिबलमासाद्यजिघांसुर्हरिपुंगवं ॥ धृतस्तेनैवकक्षेणवालिनादश
कंधरः ॥ ५८ ॥ भ्रामयित्वातुचतुरःसमुद्रान्रावणंहरिः ॥ विसर्जयामासततस्तेनसख्यंचकारसः ॥ ५९ ॥ राव
णःपरमप्रीतएवंलोकान्महाबलः ॥ चकारस्ववशेरामबुभुजेस्वयमेवतान् ॥ ६० ॥ एवंप्रभावोराजेंद्रदशग्रीवः
सहेंद्रजित् ॥ त्वयाविनिहतःसंख्येरावणोलोकरावणः ॥ ६१ ॥

शापमाह वानरैरिति कोपिनाकोपवता कैलासचालनादयंकोपः वानरमुखंनंदीश्वरंदृष्ट्वारावणेनहसितमित्यतोवाशापः ॥ ५६ ॥
अगणयन्किमस्यशापेनभवितेतितच्छापगणनामकुर्वन् हैहयपत्तनंसहस्रार्जुननगरं ॥ ५७ ॥ बलंहैहयप्रतिरूपंबलं हरिपुंगवंवालिनं तद्धन
नोद्यमेनगतस्यविपरीतंततएवानिष्टलाभइत्याह तेनैवकक्षेणधृतइति विषममत्रालंकारः ॥ ५८ ॥ सरावणः ॥ ५९ ॥ ६० ॥ ६१ ॥

अत्ररावणबंधकेंद्रबंधकतयारामपृष्टइंद्रजितउत्कर्षउक्तः ॥ ६२ ॥ एतत्तवानाश्चर्यायेत्याह भवानिति आदिकृत्उत्पत्तिकर्ता जगतोभगवत्स्वरूपत्वमेवाह त्वन्नाभीति अग्निस्तेइतिमुखादग्निरजायतेतिश्रुतेर्वागग्निमप्येतीतिश्रुतेश्च ॥ ६३ ॥ ६४ ॥ बाहुभ्यामित्याद्यपिश्रुतिसिद्धमितितद्विदांस्पष्टमेव ॥ ६५ ॥ प्राणःप्राणवायुः जंघाजानूरुजघनादितिसमाहारद्वंद्वः ॥ ६६ ॥ वालखिल्याऋषिविशेषाः ॥६७॥६८॥ विश्वरू

मेघनादश्चनिहतोलक्ष्मणेनमहात्मना ॥ कुंभकर्णश्चनिहतस्त्वयापर्वतसन्निभः ॥६२॥ भवान्नारायणःसाक्षाज्जगतामादिकृद्विभुः ॥ त्वत्स्वरूपमिदंसर्वंजगत्स्थावरजंगमं ॥ ६३॥ त्वन्नाभिकमलोत्पन्नोब्रह्मालोकपितामहः॥ अग्निस्तेमुखतोजातोवाचासहरघूत्तम ॥६४॥ बाहुभ्यांलोकपालौघाश्चक्षुर्भ्यांचंद्रभास्करौ॥ दिशश्चविदिशश्चैवकर्णाभ्यांतेसमुत्थिताः ॥६५॥ घ्राणात्प्राणःसमुत्पन्नश्चाश्विनौदेवसत्तमौ ॥ जंघाजानूरुजघनाद्भुवर्लोकादयोऽभवन् ॥ ६६ ॥ कुक्षिदेशात्समुत्पन्नाश्चत्वारःसागराहरे ॥ स्तनाभ्यामिंद्रवरुणौवालखिल्याश्चरेतसः॥६७॥ मेढ्राद्यमोगुदान्मृत्युर्मन्योरुद्रस्त्रिलोचनः॥ अस्थिभ्यःपर्वताजाताःकेशेभ्योमेघसंहतिः॥६८॥ ओषध्यस्तवरोमभ्योनखेभ्यश्चखरादयः॥ त्वंविश्वरूपःपुरुषोमायाशक्तिसमन्वितः॥ ६९ ॥ नानारूपइवाभासिगुणव्यतिकरेसति॥ त्वामाश्रित्यैवविबुधाःपिबंत्यमृतमध्वरे॥ ७० ॥ त्वयासृष्टमिदंसर्वंविश्वंस्थावरजंगमं॥ त्वामाश्रित्यैवजीवंतिसर्वेस्थावरजंगमाः॥ ७१ ॥

पःविराडित्यर्थः मायागुणानांसत्वादीनांव्यतिकरेसतिआधिक्यन्यूनताभ्यांपरस्परसंश्लेषेसतिनानारूपोब्रह्मविष्णुरुद्रादिरूपोभासि ॥ ६९ ॥ अग्निरूपंत्वामाश्रित्यैवअमृतंहविरध्वरेदेवाःपिबंति ॥ ७० ॥ त्वमेवसृष्टिस्थितिकर्तेत्याह त्वयेति ॥ ७१ ॥

व्यवहारेतत्कालेपि अखिलंवस्तुत्वद्युक्तमेव सत्त्वेनभातत्वेनचसर्वव्यवहारःसत्ताभातत्वेचसर्वत्रत्वदीयेएवेतिभावःतदेवदृष्टांतेनोपपादयति सर्पि
र्यथाखिलंपयोव्याप्यतिष्ठतितथात्वमखिलंव्याप्यतिष्ठसीति सर्वत्रसदितिभासतेइतिचव्यवहारः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंवि
भातीतिश्रुतेः ॥७२॥ तदेवाह त्वद्भासेति ईदृशस्त्वंनसर्ववेद्यइत्याह सर्वगमिति ॥७३॥ ज्ञानचक्षुषोप्यात्मन्येवत्वांपश्यंतीत्याह योगिनइति नतु
स्वस्माद्भेदेनेत्यर्थः एतेनसर्वत्रचैतन्यभूतस्त्वमेवेतिसूचितं विचिन्वंतिपश्यंति ॥७४॥ तथादर्शनेकारणमाह अतदिति अतत्दृश्यंजडंतन्निरसनमु

त्वद्युक्तमखिलंवस्तुव्यवहारेपिराघव॥ क्षीरमध्यगतंसर्पिर्यथाव्याप्याखिलंपयः॥ ७२॥ त्वद्भासाभासतेर्कादि
नत्वंतेनावभाससे॥सर्वगंनित्यमेकंत्वांज्ञानचक्षुर्विलोकयेत्॥ ७३॥नाज्ञानचक्षुस्त्वांपश्येदंधदृक्भास्करंयथा॥
योगिनस्त्वांविचिन्वंतिस्वदेहेपरमेश्वरं॥ ७४॥ अतन्निरसनमुखैर्वेदशीर्षैरहर्निशं॥ त्वत्पादभक्तिलेशेनगृहीताय
द्योगिनः॥ ७५॥ विचिन्वंतोहिपश्यंतिचिन्मात्रंत्वांनचान्यथा॥ मयाप्रलपितंकिंचित्सर्वज्ञस्यतवाग्रतः॥ क्षंतु
मर्हसिदेवेशतवानुग्रहभागहं॥ ७६॥ दिग्देशकालपरिहीनमनन्यमेकंचिन्मात्रमक्षरमजंचलनादिहीनं॥ सर्वज्ञ
मीश्वरमनंतगुणंव्युदस्तमायंभजेरघुपतिंभजतामभिन्नं॥७७॥ इतिश्रीम०रा०उत्तरकांडेद्वितीयःसर्गः॥२॥

खैर्नस्त्रीनपुमानित्यादिरूपर्वेदशीर्षैरुपनिषद्भागैःपश्यंति वस्तुतोनिर्धर्मकत्वात्केनापिरूपेणवक्तुमशक्यतयानिषेधमुखेनैवश्रुतयोब्रह्मप्रतिपाद
यंतीतिभावः तदपितेषांज्ञानंत्वद्भक्तिंविनोपनिषन्मात्रेणनेत्याह त्वत्पादेति अन्यथानेतिभावः ॥ ७५ ॥ विचिन्वंतःउपनिषत्सुविचारयंतः
अन्यथाकेनचित्धर्मेणधर्मवंतंनपश्यंतीत्यर्थः ॥ ७६ ॥ भजतांभक्तानांअभिन्नंस्वाभिन्नत्वेनबुद्धिविषयं ॥ ७७ ॥ इतिश्रीमत्सकल०श्री
रामवर्मणःकृतौउत्तरकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

सकलांतरस्थंजानासि सर्वांतर्यामित्वात् तदेवस्फुटयति सर्वहृदिस्थितोहीत्यंतेन हिर्यतइत्यर्थे विज्ञानदृक्विज्ञानेनस्वरूपेणदृक्सर्वद्रष्टा अनेनचित्तादिकरणांतरनैरपेक्ष्यमुक्तं अतएवसाक्षीसाक्षाद्द्रष्टा नन्वहंमनुष्यःकुतोममेदृशत्वंतत्राह त्वंलीलेति वस्तुतोनमनुष्यस्त्वमितिभावः स्वमहिमन्स्वमात्रज्ञेयमहिमन् अन्यैस्त्वन्महिमादुर्ज्ञेयइत्यर्थः मायागुणैःरजआदिभिर्नाज्यसेनस्पृश्यसे एवंसर्वज्ञस्यतवाग्रेकथनंयद्यप्यनुचितंतथापिभवतालीलार्थंप्रतिचोदितःपृष्टोरक्षोद्भवंवक्ष्यामि रक्षोद्भवमित्यत्रसंधिरार्षः ॥६१॥ ननुत्वंमामेवंकथंज्ञातवानसीत्यत्राह जानामीति मूढोप्यहंभवदनुग्रहतएवंविशेषणंत्वांजानामि अनंतंदेशकालापरिच्छेद्यं अक्षराजत्वाभ्यांनाशोत्पत्तिराहित्यमुक्तं सांसारिकान्प्रतिगूढंगु

रामत्वंसकलांतरस्थमभितोजानासिविज्ञानदृक्साक्षीसर्वहृदिस्थितोहिपरमोनित्योदितोनिर्मलः॥ त्वंलीलामनुजाकृतिःस्वमहिमामायागुणैर्नाज्यसेलीलार्थंप्रतिचोदितोद्यभवतोवक्ष्यामिरक्षोद्भवं ॥ ६१ ॥ जानामिकेवलमनंतमचिंत्यशक्तिंचिन्मात्रमक्षरमजंविदितात्मतत्त्वं॥ त्वांरामगूढनिजरूपमनुप्रवृत्तोमूढोप्यहंभवदनुग्रहतश्चरामि ॥ ६२ ॥ एवंवदंतमिनवंशपवित्रकीर्तिःकुंभोद्भवंरघुपतिःप्रहसन्बभाषे॥ मायाश्रितंसकलमेतदनन्यकत्वान्मत्कीर्तनंजगतिपापहरंनिबोध ॥ ६३ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेप्रथमःसर्गः॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥

प्तंकृतंनिजरूपंयेनतं अथापित्वामनुप्रवृत्तःत्वत्प्रवृत्तिमार्गमनुप्रवृत्तोंगीकृतप्रवृत्तिमार्गइहलोकेचरामि ॥ ६२ ॥ इनवंशेसूर्यवंशेपवित्राकीर्तिर्यस्यसः एतत्सकलमप्युदाहृतमंतर्यामित्वादिदृश्यमानंजगच्चमायाश्रितमेव तत्रहेतुःअनन्यकत्वात्नविद्यतेऽन्यत्यस्यसोनन्यकस्तस्यभावस्तत्त्वंममतादृशत्वात्धर्मरहितत्वात्इतराधारत्वादेरप्यसंभवात्सर्वधर्मजालमपिगृह्यमाणंमायाश्रितमेवजानीहीतिशेषः स्वावतारस्यमुख्यप्रयोजनमाह मत्कीर्तनमिति स्वकीर्तनद्वारापापहरणार्थमेवावतारइतिभावः ॥ ६३ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणसेतौउत्तरकांडेप्रथमःसर्गः ॥ १ ॥ ॥७॥ ॥७॥

॥१॥ अथेति तत्रविश्रवसआश्रमे पितरंविश्रवसं ॥२॥ सामीप्यंगत्वासामीप्यंप्राप्य ॥३॥४॥ अचिरेणेतिच्छेदः ॥ ५॥ मांपश्यशिवेनचक्षुषेति शेषः दुष्करंतपःकर्तुमित्यन्वयः ॥ ६ ॥ फलस्यवांछितस्यसिध्यर्थं सहानुजःकुंभकर्णविभीषणसहितः स्वंस्वंनियमंस्वस्ववासनोद्भूतंराजसता

श्रीरामवचनंश्रुत्वापरमानंदनिर्भरः॥मुनिःप्रोवाचसदसिसर्वेषांतत्रशृण्वतां॥१॥अथवित्तेश्वरोदेवस्तत्रकालेन केनचित्॥ ॥आययौपुष्पकारूढःपितरंद्रष्टुमंजसा॥ २॥ दृष्ट्वातंकैकसीतत्रभ्राजमानंमहौजसं॥ राक्षसीपुत्रसामी प्यंगत्वारावणमब्रवीत्॥३॥ पुत्रपश्यधनाध्यक्षंज्वलंतंस्वेनतेजसा॥ त्वमप्येवंयथाभूयास्तथायत्नंकुरुप्रभो॥४॥ तच्छ्रुत्वारावणोरोषात्प्रतिज्ञामकरोद्द्रुतं॥ धनदेनसमोवापित्यधिकोवाचिरेणतु॥५॥ भविष्याम्यंबमांपश्यसंता पंत्यजसुव्रते॥ इत्युक्त्वादुष्करंकर्तुंतपःसदशकंधरः॥ ६॥ आगमत्फलसिद्ध्यर्थंगोकर्णंतुसहानुजः॥ स्वंस्वंनियम मास्थायभ्रातरस्तेतपोमहत्॥ ७॥आस्थितादुष्करंघोरंसर्वलोकैकतापनं॥दशवर्षसहस्राणिकुंभकर्णोकरोत्तपः॥ ॥८॥ विभीषणोऽपिधर्मात्मासत्यधर्मपरायणः॥ पंचवर्षसहस्राणिपादेनैकेनतस्थिवान्॥९॥दिव्यवर्षसहस्रंतुनि राहारोदशाननः॥पूर्णेवर्षसहस्रेतुशीर्षमग्नौजुहावसः॥एवंवर्षसहस्राणिनवतस्यातिचक्रमुः॥१०॥अथवर्षसहस्रे तुदशमेदशमंशिरः॥छेत्तुकामस्यधर्मात्माप्राप्तश्चाथप्रजापतिः॥वत्सवत्सदशग्रीवप्रीतोस्मीत्यभ्यभाषत॥११॥ वरंवरयदास्यामियत्तेमनसिकांक्षितं ॥ दशग्रीवोपितच्छ्रुत्वाप्रहृष्टेनांतरात्मना॥१२॥अमरत्वंवृणोमीशवरदो यदिमेभवान्॥ सुपर्णनागयक्षाणांदेवतानांतथासुरैः॥ अवध्यत्वंतुमेदेहित्वणभूताहिमानुषाः॥ १३॥

मससात्विकरूपं ॥ ७॥ दुष्करंअन्यैरितिशेषः ॥ ८ ॥ ९ ॥ १० ॥ दशमंशिरश्छेत्तुकामस्यप्रजापतिःप्राप्तःसमीपमितिशेषः ॥ ११ ॥ १२ ॥ वृतममरत्वमेवभगवदिच्छावशात्स्वयमेवविवृणोति सुपर्णेत्यादि ॥ १३ ॥

तथास्त्वित्यस्यावददितिशेषः ॥ १४ ॥ अक्षयाणिसुपर्णादिकृतक्षयरहितानि ॥ १५ ॥ १६ ॥ विभीषणस्यधर्मविषयबुद्धिप्राप्तिकामनयात पःकर्तृत्वादरेणवत्सेतिद्विःसंबोधनं ॥ १७ ॥ तदेवाह देवमेइत्यादिना ॥ १८ ॥ तथैवचभविष्यसि धर्मबुध्दिरेवभविष्यसि ॥ १९ ॥ २० ॥

तथास्त्वितिप्रजाध्यक्षःपुनराहदशाननं ॥ अग्नौहुतानिशीर्षाणियानितेऽसुरपुंगव ॥ १४ ॥ भविष्यंतियथापूर्वमक्षयाणिचसत्तम ॥ १५ ॥ एवमुक्त्वाततोरामदशग्रीवंप्रजापतिः ॥ विभीषणमुवाचेदंप्रणतंभक्तवत्सलः ॥ १६ ॥ विभीषणत्वयावत्सकृतंधर्मार्थमुत्तमं ॥ तपस्ततोवरंवत्सवृणीष्वाभिमतंहितं ॥ १७ ॥ विभीषणोपितंनत्वाप्रांजलिर्वाक्यमब्रवीत् ॥ देवमेसर्वदाबुद्धिर्धर्मेतिष्ठतुशाश्वती ॥ मारोचयत्वधर्मेमेबुद्धिःसर्वत्रसर्वदा ॥ १८ ॥ ततःप्रजापतिःप्रीतोविभीषणमथाब्रवीत् ॥ वत्सत्वंधर्मशीलोसितथैवचभविष्यसि ॥ १९ ॥ अयाचितोपितेदास्येत्यमरत्वंविभीषण ॥ कुंभकर्णमथोवाचवरंवरयसुव्रत ॥ २० ॥ वाण्याव्याप्तोथतंप्राहकुंभकर्णःपितामहं ॥ स्वप्स्यामिदेवषण्मासान्दिनमेकंतुभोजनं ॥ २१ ॥ एवमस्त्वितितंप्राहब्रह्माद्दष्ट्वादिवौकसः ॥ सरस्वतीचतद्वक्त्रान्निर्गताप्रययौदिवं ॥ २२ ॥ कुंभकर्णस्तुदुष्टात्माचिंतयामासदुःखितः ॥ अनभिप्रेतमेवास्याल्किंनिर्गतमहोविधिः ॥ २३ ॥ सुमालीवरलब्धांस्तान्ज्ञात्वापौत्रान्निशाचरान् ॥ पातालान्निर्भयःप्रायात्प्रहस्तादिभिरन्वितः ॥ २४ ॥ दशग्रीवंपरिष्वज्यवचनंचेदमब्रवीत् ॥ दिष्ट्यातेपुत्रसंवृत्तोवांछितोमेमनोरथः ॥ २५ ॥ यद्भयाच्चवयंलंकांत्यक्त्वायातारसातलं ॥ तद्गतंनोमहाबाहोमहद्विष्णुकृतंभयं ॥ २६ ॥

वाण्या देवप्रार्थितया ॥ २१ ॥ २२ ॥ आस्यादितिच्छेदः अहोविधिर्दुर्लंघ्यइतिशेषः ॥ २३ ॥ वरलब्धान्प्राप्तवरान्पौत्रान्पुत्रीपुत्रान् बिदादित्वादञ् प्रायात्रावणादिसमीपमितिशेषः ॥ २४ ॥ मेवांछितोमनोरथस्ते दिष्ट्यासंवृत्तः ॥ २५ ॥ अतोयद्भयादिति तद्विष्णुकृतंभयंनोस्माकंगतं सर्वावध्यत्वस्यत्वयाप्राप्तत्वात् ॥ २६ ॥

इयंलंकापूर्वमस्माभिरुषिता अनेनास्मत्संबंधादियंतवधनभूतेतिध्वनितं इदानींतेभ्रात्राधनदेनाक्रांतांत्वंप्रत्यानेतुंस्वाधीनांकर्तुमर्हसि ॥ २७॥ ननुज्येष्ठेभ्रातरिकथंबलंयोग्यंतत्राह राज्ञांबंधुःकुतःसुहृत्कुतः सर्वथैतानुपमर्द्यैवराज्यप्रवृत्तेरितिभावः ॥ २८॥ एवंश्रुत्वारावणवाक्यंश्रुत्वेत्यर्थः ॥ २९ ॥ ३० ॥ सौभ्रात्रंभ्रात्रादिभिःप्रीतिः ॥ ३१ ॥ देवैरनुष्ठितंलंकाहरणरूपंवैरमिदानींतनमेवनकिंतुप्राचीनमेव एवंचतैरस्मद्द्वेषकरण

अस्माभिःपूर्वमुषितालंकेयंधनदेनते ॥ भ्रात्राऽक्रांतामिदानींत्वंप्रत्यानेतुमिहार्हसि ॥ २७॥ साम्नावाथबलेनापिराज्ञांबंधुःकुतःसुहृत् ॥ इत्युक्तोरावणःप्राहनार्हस्येवंप्रभाषितुं ॥ २८॥ वित्तेशोगुरुरस्माकमेवंश्रुत्वातमब्रवीत् ॥ प्रहस्तःप्रश्रितंवाक्यंरावणंदशकंधरं ॥ २९॥ शृणुरावणयत्नेननैवंत्वंवक्तुमर्हसि ॥ नाधीताराजधर्मास्तेनीतिशास्त्रंतथैवच ॥ ३० ॥ शूराणांनहिसौभ्रात्रंशृणुमेवदतःप्रभो ॥ कश्यपस्यसुतादेवाराक्षसाश्चमहाबलाः ॥ ३१॥ परस्परमयुध्यंतत्यक्त्वासौहृदमायुधैः ॥ नैवेदानींतनंराजन्वैरंदेवैरनुष्ठितं ॥ ३२॥ प्रहस्तस्यवचःश्रुत्वादशग्रीवोदुरात्मनः ॥ तथेतिक्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ॥ ३३ ॥ दूतंप्रहस्तंसंप्रेष्यनिष्कास्यधनदेश्वरं ॥ लंकामाक्रम्यसचिवैराक्षसैःसुखमास्थितः ॥ ३४॥ धनदःपितृवाक्येनत्यक्त्वालंकांमहायशाः ॥ गत्वाकैलासशिखरंतपसातोषयच्छिवं ॥ ३५॥ तेनसख्यमनुप्राप्यतेनैवपरिपालितः ॥ अलकांनगरींतत्रनिर्ममेविश्वकर्मणा ॥ ३६॥ दिक्पालत्वंचकारात्रशिवेनपरिपालितः ॥ रावणोराक्षसैःसार्धमभिषिक्तःसहानुजैः ॥ ३७ ॥

वदस्माकमपितद्द्वेषकरणंनदोषायेतिभावः ॥ ३२ ॥ दुरात्मनःप्रहस्तस्येत्यन्वयः ॥ ३३ ॥ धनदनामकमीश्वरंनिष्कास्य ॥ ३४ ॥ धनदःतद्दूतगमनोत्तरंपितृसमीपंगत्वारावणएवमाहात्रकिमुचितमितिपृष्टवांस्तेनचत्यागएवोचितोस्यावध्यत्वादित्युक्तेतांत्यक्तवानितिगाथापौराणिकी ॥ ॥ ३५ ॥ निर्ममेकारितवान् ॥ ३६ ॥ रावणोऽनुजैःसार्धराक्षसैरभिषिक्तः लंकाराज्यइतिशेषः ॥ ३७ ॥

असुराणांतदवतारहूपरक्षसां यद्वाक्रूरकर्मत्वाद्रक्षःस्वप्यसुरपदप्रयोगः एवमसुरेष्वपिराक्षसपदप्रयोगइतिबोध्यं कालखंजायतद्वंश्याय नाम्ना विद्युज्जिव्हाय भगिनींशूर्पणखां ॥ ३८ ॥ राक्षसानांविश्वकर्मा दितेःसुतोमयःमंदोदरींकन्यांरावणायददौ पुनःशक्तिंचामोघांस्वनिर्मितांददा





राज्यंचकारासुराणांत्रिलोकींबाधयन्खलः ॥ भगिनींकालखंजायददौविकटरूपिणीं ॥ ३८ ॥ विद्युज्जिव्हायनाम्नासौमहामायीनिशाचरः ॥ ततोमयोविश्वकर्माराक्षसानांदितेःसुतः ॥ ३९ ॥ सुतांमंदोदरींनाम्नाददौलोकैकसुंदरीं ॥ रावणायपुनःशक्तिममोघांप्रीतमानसः ॥ ४० ॥ वैरोचनस्यदौहित्रींवृत्रज्वालेतिविश्रुतां ॥ स्वयंदत्तामुदवहत्कुंभकर्णायरावणः ॥ ४१ ॥ गंधर्वराजस्यसुतांशैलूषस्यमहात्मनः ॥ विभीषणस्यभार्यार्थेधर्मज्ञांसमुदावहत् ॥ ४२ ॥ सरमांनामसुभगांसर्वलक्षणसंयुतां ॥ ततोमंदोदरीपुत्रंमेघनादमजीजनत् ॥ ४३ ॥ जातमात्रस्तुयोनादंमेघवत्प्रमुमोचह ॥ ततःसर्वेब्रुवन्मेघनादोयमितिचासकृत् ॥ ४४ ॥ कुंभकर्णस्ततःप्राहनिद्रामांबाधतेप्रभो ॥ ततश्चकारयामासगुहांदीर्घांसुविस्तरां ॥ ४५ ॥ तत्रसुष्वापमूढात्माकुंभकर्णोविघूर्णितः ॥ निद्रितेकुंभकर्णेतुरावणोलोकरावणः ॥ ४६ ॥ ब्राह्मणानृषिमुख्यांश्चदेवदानवकिन्नरान् ॥ देवस्त्रियोमनुष्यांश्चनिजघ्नेसमहोरगान् ॥ ॥ ४७ ॥ धनदोपिततःश्रुत्वारावणस्याक्रमंप्रभुः ॥ अधर्ममाकुरुष्वेतिदूतवाक्यैर्न्यवारयत् ॥ ४८ ॥ ततःक्रुद्धोदशग्रीवोजगामधनदालयं ॥ विनिर्जित्यधनाध्यक्षंजहारोत्तमपुष्पकं ॥ ४९ ॥

॥ ३९ ॥ ४० ॥ स्वयंदत्तामितितत्पित्रेतिशेषः ॥ ४१ ॥ ४२ ॥ ४३ ॥ मेघनादेतिनाम्नोन्वर्थत्वमाह जातमात्रइति ॥ ४४ ॥ ४५ ॥ ४६ ॥ देवादीन्समहोरगान्निजघ्ने देवस्त्रियश्चनिजघ्नेहृतवानित्यर्थः देवस्त्रियइतिपाठांतरं ॥ ४७ ॥ अक्रमंदेवादिष्वन्यायाचरणं ॥ ४८ ॥ उत्तमपुष्पकंवाहनेषूत्तमंपुष्पकाख्यंवाहनमित्यर्थः ॥ ४९ ॥

स्वर्गलोकंमेरूर्ध्वस्थितंशक्रलोकं अनेनयमादिलोकास्तदधःस्थिताइतिध्वनयति ॥ ५० ॥ दैवतैःसहितेनेंद्रेणास्य युद्धमभवदित्यर्थः ॥ ५१ ॥ ॥ ५२ ॥ प्रथमतइंद्रग्रहणंततस्तस्यबंधनं ततोबद्धस्यस्वपुरेआनयनं ॥ ५३ ॥ इंद्रमोचनप्रतिदानत्वेनतदभीष्टानेकवरदानं ॥ ५४ ॥ ५५ ॥

ततोयमंचवरुणंनिर्जित्यसमरेसुरः ॥ स्वर्गलोकमगात्तूर्णंदेवराजजिघांसया ॥ ५० ॥ ततोऽभवन्महद्युद्धमिंद्रेणसहदैवतैः ॥ ततोरावणमभ्येत्यबबंधत्रिदशेश्वरः ॥ ५१ ॥ तच्छ्रुत्वासहसागत्यमेघनादःप्रतापवान् ॥ कृत्वाघोरंमहद्युद्धंजित्वात्रिदशपुंगवान् ॥५२॥ इंद्रंगृहीत्वाबध्वासौमेघनादोमहाबलः ॥ मोचयित्वातुपितरंगृहीत्वेंद्रंययौपुरं ॥ ५३ ॥ ब्रह्मातुमोचयामासदेवेंद्रंमेघनादतः ॥ दत्वावरान्बहूंस्तस्मैब्रह्मास्वभवनंययौ ॥ ५४ ॥ रावणोविजयीलोकान्सर्वान्जित्वाक्रमेणतु ॥ कैलासंतोलयामासबाहुभिःपरिघोपमैः ॥५५॥ तत्रनंदीश्वरेणैवंशप्तोयंराक्षसेश्वरः ॥ वानरैर्मानुषैश्चैवनाशंगच्छेतिकोपिना ॥ ५६ ॥ शप्तोप्यगणयन्वाक्यंययौहैहयपत्तनं ॥ तेनबद्धोदशग्रीवःपुलस्त्येनविमोचितः ॥ ५७ ॥ ततोपिबलमासाद्यजिघांसुर्हरिपुंगवं ॥ धृतस्तेनैवकक्षेणवालिनादशकंधरः ॥ ५८ ॥ भ्रामयित्वातुचतुरःसमुद्रान्रावणंहरिः ॥ विसर्जयामासततस्तेनसख्यंचकारसः ॥ ५९ ॥ रावणःपरमप्रीतएवंलोकान्महाबलः ॥ चकारस्ववशेरामबुभुजेस्वयमेवतान् ॥ ६० ॥ एवंप्रभावोराजेंद्रदशग्रीवःसहेंद्रजित् ॥ त्वयाविनिहतःसंख्येरावणोलोकरावणः ॥६१॥

शापमाह वानरैरिति कोपिनाकोपवता कैलासचालनादयंकोपः वानरमुखंनंदीश्वरंदृष्ट्वारावणेनहसितमित्यतोवाशापः ॥ ५६ ॥ अगणयन्किमस्यशापेनभवितेतितच्छापगणनामकुर्वन् हैहयपत्तनंसहस्रार्जुननगरं ॥ ५७ ॥ बलंहैहयप्रतिरूपंबलं हरिपुंगवंवालिनं तद्धननोद्यमेनगतस्यविपरीतंततएवानिष्टलाभइत्याह तेनैवकक्षेणधृतइति विषममत्रालंकारः ॥ ५८ ॥ सरावणः ॥ ५९ ॥ ६० ॥ ६१ ॥

अत्ररावणबंधकेंद्रबंधकतयारामपृष्टइंद्रजितउत्कर्षउक्तः ॥ ६२ ॥ एतत्तवानाश्चर्यायेत्याह भवानिति आदिकृत् उत्पत्तिकर्ता जगतोभगव
त्स्वरूपत्वमेवाह त्वन्नाभीति अग्निस्तेइतिमुखादग्निरजायतेतिश्रुतेर्वागग्निमप्येतीतिश्रुतेश्च ॥ ६३ ॥ ६४ ॥ बाहुभ्यामित्याद्यपिश्रुतिसिद्धमि
तितद्विदांस्पष्टमेव ॥ ६५ ॥ प्राणःप्राणवायुः जंघाजानूरुजघनादितिसमाहारद्वंद्वः ॥ ६६ ॥ वालखिल्याऋषिविशेषाः ॥६७॥६८॥ विश्वरू



मेघनादश्चनिहतोलक्ष्मणेनमहात्मना ॥ कुंभकर्णश्चनिहतस्त्वयापर्वतसन्निभः ॥ ६२ ॥ भवान्नारायणःसाक्षा
ज्जगतामादिकृद्विभुः ॥ त्वत्स्वरूपमिदंसर्वंजगत्स्थावरजंगमं ॥ ६३ ॥ त्वन्नाभिकमलोत्पन्नोब्रह्मालोकपिताम
हः ॥ अग्निस्तेमुखतोजातोवाचासहरघूत्तम ॥ ६४ ॥ बाहुभ्यांलोकपालौघाश्चक्षुर्भ्यांचंद्रभास्करौ ॥ दिशश्चवि
दिशश्चैवकर्णाभ्यांतेसमुत्थिताः ॥ ६५ ॥ घ्राणात्प्राणःसमुत्पन्नश्चाश्विनौदेवसत्तमौ ॥ जंघाजानूरुजघनाद्भुव
र्लोकादयोऽभवन् ॥ ६६ ॥ कुक्षिदेशात्समुत्पन्नाश्चत्वारःसागराहरे ॥ स्तनाभ्यामिंद्रवरुणौवालखिल्याश्चरेत
सः ॥ ६७ ॥ मेढ्राद्यमोगुदान्मृत्युर्मन्योरुद्रस्त्रिलोचनः ॥ अस्थिभ्यःपर्वताजाताःकेशेभ्योमेघसंहतिः ॥ ६८ ॥ ओ
षध्यस्तवरोमभ्योनखेभ्यश्चखरादयः ॥ त्वंविश्वरूपःपुरुषोमायाशक्तिसमन्वितः ॥ ६९ ॥ नानारूपइवाभासिगु
णव्यतिकरेसति ॥ त्वामाश्रित्यैवविबुधाःपिबंत्यमृतमध्वरे ॥ ७० ॥ त्वयासृष्टमिदंसर्वंविश्वंस्थावरजंगमं ॥ त्वा
माश्रित्यैवजीवंतिसर्वेस्थावरजंगमाः ॥ ७१ ॥

पःविराडित्यर्थः मायागुणानांसत्वादीनांव्यतिकरेसतिआधिक्यन्यूनताभ्यांपरस्परसंश्लेषेसतिनानारूपोब्रह्मविष्णुरुद्रादिरूपोभासि ॥ ६९ ॥
अग्निरूपंत्वामाश्रित्यैवअमृतंहविरध्वरेदेवाःपिबंति ॥ ७० ॥ त्वमेवसृष्टिस्थितिकर्तेत्याह त्वयेति ॥ ७१ ॥

व्यवहारेतत्कालेपि अखिलंवस्तुत्वद्युक्तमेव सत्त्वेनभातत्वेनचसर्वव्यवहारःसत्ताभातत्वेचसर्वत्रत्वदीयेएवेतिभावःतदेवदृष्टांतेनोपपादयति सर्पि
र्यथाखिलंपयोव्याप्यतिष्ठतितथात्वमखिलंव्याप्यतिष्ठसीति सर्वत्रसदितिभासतेइतिचव्यवहारः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंवि
भातीतिश्रुतेः ॥७२॥ तदेवाह त्वद्भासेति ईदृशस्त्वंनसर्ववेद्यइत्याह सर्वगमिति ॥७३॥ ज्ञानचक्षुषोप्यात्मन्येवत्वांपश्यंतीत्याह योगिनइति नतु
स्वस्माद्भेदेनेत्यर्थः एतेनसर्वत्रचैतन्यभूतस्त्वमेवेतिसूचितं विचिन्वंतिपश्यंति ॥७४॥ तथादर्शनेकारणमाह अतदिति अतत्दृश्यंजडंतन्निरसनमु

त्वद्युक्तमखिलंवस्तुव्यवहारेपिराघव॥ क्षीरमध्यगतंसर्पिर्यथाव्याप्याखिलंपयः॥ ७२॥ त्वद्भासाभासतेर्कादि
नत्वंतेनावभाससे॥सर्वगंनित्यमेकंत्वांज्ञानचक्षुर्विलोकयेत्॥ ७३॥नाज्ञानचक्षुस्त्वांपश्येदंधदृक्भास्करंयथा॥
योगिनस्त्वांविचिन्वंतिस्वदेहेपरमेश्वरं॥ ७४॥ अतन्निरसनमुखैर्वेदशीर्षैरहर्निशं॥ त्वत्पादभक्तिलेशेनगृहीताय
द्योगिनः॥ ७५॥ विचिन्वंतोहिपश्यंतिचिन्मात्रंत्वांनचान्यथा॥ मयाप्रलपितंकिंचित्सर्वज्ञस्यतवाग्रतः॥ क्षंतु
मर्हसिदेवेशतवानुग्रहभागहं॥ ७६॥ दिग्देशकालपरिहीनमनन्यमेकंचिन्मात्रमक्षरमजंचलनादिहीनं॥ सर्वज्ञ
मीश्वरमनंतगुणंव्युदस्तमायंभजेरघुपतिंभजतामभिन्नं॥७७॥ इतिश्रीम०रा०उत्तरकांडेद्वितीयःसर्गः॥२॥

खैर्नस्त्रीनपुमानित्यादिरूपर्वेदशीर्षैरुपनिषद्भागैःपश्यंति वस्तुतोनिर्धर्मकत्वात्केनापिरूपेणवक्तुमशक्यतयानिषेधमुखेनैवश्रुतयोब्रह्मप्रतिपाद
यंतीतिभावः तदपितेषांज्ञानंत्वद्भक्तिंविनोपनिषन्मात्रेणनेत्याह त्वत्पादेति अन्यथानेतिभावः ॥ ७५ ॥ विचिन्वंतःउपनिषत्सुविचारयंतः
अन्यथाकेनचित्धर्मेणधर्मवंतंनपश्यंतीत्यर्थः ॥ ७६ ॥ भजतांभक्तानांअभिन्नंस्वाभिन्नत्वेनबुद्धिविषयं ॥ ७७ ॥ इतिश्रीमत्सकल०श्री
रामवर्मणःकृतौउत्तरकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

वालीति रवींद्राविति आत्मावैपुत्रनामासीतिश्रुतेस्तयोरेववानराकारत्वमुक्तं ॥ १ ॥ सभाआस्तइतिच्छेदः ॥ २ ॥ योगंध्यानं ॥ ३ ॥ किंचित्ध्यात्वातदत्यजत् भूमावितिशेषः भूमौपतितमात्रेणतेनसलिलेनदार्ढ्यंप्राप्तमितिशेषः तस्मात्कपिर्जातः ॥ ४ ॥ द्रुहिणोब्रह्मा मेसमीपेवसेत्यन्वयः ब्रह्मणेति एवमुक्तइत्यन्वयः ऋक्षाधिपःसएवकपिः ॥६॥ उद्यतउद्यमवान् फलमूलार्थंतल्लाभार्थमद्रौपर्यटन्वापीमपश्यत् ॥ ७ ॥ छाया

श्रीरामउवाच वालिसुग्रीवयोर्जन्मश्रोतुमिच्छामितत्त्वतः ॥ रवींद्रौवानराकारौजज्ञातइतिनःश्रुतं ॥ १ ॥ अगस्त्यउवाच मेरोःस्वर्णमयस्याद्रेर्मध्यशृंगेमणिप्रभे॥ तस्मिन्सभास्तेविस्तीर्णाब्रह्मणःशतयोजना ॥२॥ तस्यांचतुर्मुखःसाक्षात्कदाचिद्योगमास्थितः ॥ नेत्राभ्यांपतितंदिव्यमानंदसलिलंबहु ॥ ३ ॥ तद्गृहीत्वाकरेब्रह्माध्यात्वाकिंचित्तदत्यजत् ॥ भूमौपतितमात्रेणतस्माज्जातोमहाकपिः ॥ ४ ॥ तमाहद्रुहिणोवत्सकिंचित्कालंवसात्रमे ॥ समीपेसर्वशोभाढ्यंततःश्रेयोभविष्यति ॥ ५ ॥ इत्युक्तोन्यवसत्तत्रब्रह्मणावानरोत्तमः ॥ एवंबहुतिथेकालेगतेऋक्षाधिपःसुधीः ॥ ६ ॥ कदाचित्पर्यटन्नद्रौफलमूलार्थमुद्यतः ॥ अपश्यद्दिव्यसलिलांवापींमणिशिलान्वितां ॥७॥ पानीयंपातुमागच्छत्तत्रच्छायामयंकपिं ॥ दृष्ट्वाप्रतिकपिंमत्वानिपपातजलांतरे ॥८॥ तत्राद्दृष्ट्वाहरिंशीघ्रंपुनरुत्प्लुत्यवानरः ॥ अपश्यत्सुंदरींरामामात्मानंविस्मयंगतः ॥९॥ ततःसुरेशोदेवेशंपूजयित्वाचतुर्मुखं ॥ गच्छन्मध्याह्नसमयेदृष्ट्वानारींमनोरमां ॥ १० ॥ कंदर्पशरविद्धांगस्त्यक्तवान्वीर्यमुत्तमं ॥ तामप्राप्यैवतद्बीजंवालदेशेपतद्भुवि ॥ ११ ॥ वालीसमभवत्तत्रशक्रतुल्यपराक्रमः ॥ तस्यदत्वासुरेशानःस्वर्णमालांदिवंगतः ॥ १२ ॥

मयंस्वच्छायारूपं प्रतिकपिंस्वविरोधिकपिं ॥ ८ ॥ आत्मानंसुंदरींरामांतद्रूपंस्त्रीरूपमपश्यत् ॥ ९ ॥ सुरेशइंद्रश्चतुर्मुखंपूजयित्वापुरंगच्छन्मनोरमांतांनारींदृष्ट्वा तामप्राप्यैवतयासहमीलनंविनैववीर्यंत्यक्तवान् ॥ १० ॥ ११ ॥ १२ ॥

तस्यग्रीवादेशेमहद्बीजमसृजत् त्यक्तवान् ॥ १३ ॥ १४ ॥ पूर्ववत्पुंरूपमित्यर्थः ॥ १५ ॥ १६ ॥ समाश्वास्यभाविनोदुर्वारत्वान्ममस्त्रीरू
पताकथमित्यादिखेदोमास्त्वित्याश्वास्येत्यर्थः देवतादूतंदेवदूतमित्यर्थः ॥ १७ ॥ १८ ॥ सौभाग्यवलितांतद्युक्तां ॥ १९ ॥ वशेभविष्यंतिअ

भानुरप्यागतस्तत्रतदानीमेवभामिनीं ॥ दृष्ट्वाकामवशोभूत्वाग्रीवादेशेसृजन्महत् ॥ १३ ॥ बीजंतस्यास्ततःस
द्योमहाकायोऽभवद्धरिः॥तस्यदत्वाहनूमंतंसहायार्थंगतोरविः॥१४॥पुत्रद्वयंसमादायगत्वासानिद्रिताक्वचित्॥
प्रभातेऽपश्यदात्मानंपूर्ववद्वानराकृतिं ॥ १५ ॥ फलमूलादिभिःसार्धंपुत्राभ्यांसहितःकपिः ॥ नत्वाचतुर्मुख
स्याग्रेऋक्षराजःस्थितःसुधीः॥१६॥ ततोऽब्रवीत्समाश्वास्यबहुशःकपिकुंजरं॥ तत्रैकंदेवतादूतमाहूयामरसन्नि
भं ॥ १७॥ गच्छदूतमयादिष्टोगृहीत्वावानरोत्तमं ॥ किष्किंधांदिव्यनगरींनिर्मितांविश्वकर्मणा ॥१८॥ सर्वसौ
भाग्यवलितांदेवैरपिदुरासदां ॥ तस्यांसिंहासनेवीरंराजानमभिषेचय ॥ १९ ॥ सप्तद्वीपगतायेयेवानराःसंति
दुर्जयाः ॥ सर्वेतेऋक्षराजस्यभविष्यंतिवशेऽनुगाः ॥ २० ॥ यदानारायणःसाक्षाद्रामोभूत्वासनातनः ॥ भूभा
रासुरनाशायसंभविष्यतिभूतले ॥ २१ ॥ तदासर्वेसहायार्थंतस्यगच्छंतुवानराः ॥इत्युक्तोब्रह्मणादूतोदेवानांस
महामतिः ॥ २२ ॥ यथाज्ञप्तस्तथाचक्रेब्रह्मणातंहरीश्वरं ॥ देवदूतस्ततोगत्वाब्रह्मणेतन्निवेदयत् ॥ २३ ॥ तदादि
वानराणांसाकिष्किंधाऽभून्नृपाश्रयः ॥ सर्वेश्वरस्त्वमेवासीरिदानींब्रह्मणाऽर्थितः ॥ २४ ॥

नुगाश्चभविष्यंति ॥ २० ॥ २१ ॥ २२ ॥ तत्तस्यकिष्किंधाराज्यादिदानं ॥ २३ ॥ तदादितत्प्रभृति हेनृप वानराणांसाकिष्किंधाआश्रयोऽभू
त् त्वमेवेदानींब्रह्मणाऽर्थितःसन्सर्वेश्वरःसर्ववानरेश्वरः ॥ २४ ॥

लीलानृदेहिनालीलागृहीतमनुष्यदेहेन अयंपराक्रमस्तवनाश्चर्यायेत्याह सर्वभूतेति यस्त्वामेवंवेत्तिसोऽपिस्वेच्छयासृष्टिसंहारसमर्थोभवति चेत्साक्षात्तवकिंवाच्यमितिभावः ॥ २५ ॥ नन्वीदृशस्यानाश्चर्यस्यकिंवर्णनेनतत्राह तथाऽपीति सर्वलोकपापनाशायात्मनस्तेषां सुखायचानाश्चर्यमपिआश्चर्यवत्कृत्वावर्ण्यतेइत्यर्थः ॥ २६ ॥ २७ ॥ तज्जन्मनस्त्वदाश्रयत्वात्त्वदुपकारार्थत्वात्‌यस्तयोर्जन्मकथयेत्सपातकै

भूमेर्भारोद्धृतःकृत्स्नस्त्वयालीलानृदेहिना ॥ सर्वभूतांतरस्थस्यनित्यमुक्तचिदात्मनः ॥ २५ ॥ अखंडानंदरूपस्य क्रियानेषपराक्रमः ॥ तथाऽपिवर्ण्यतेसद्भिर्लीलामानुषरूपिणः ॥ २६ ॥ यशस्तेसर्वलोकानांपापहत्यैसुखाय च ॥ यइदंकीर्तयेन्मर्त्योवालिसुग्रीवयोर्महत्‌ ॥ २७ ॥ जन्मत्वदाश्रयत्वात्समुच्यतेसर्वपातकैः ॥ अथान्यांसंप्र वक्ष्यामिकथांरामत्वदाश्रयां ॥ २८ ॥ सीताहृतायदर्थंसारावणेनदुरात्मना ॥ पुराकृतयुगेरामप्रजापतिसुतंवि भुं ॥ २९ ॥ सनत्कुमारमेकांतेसमासीनंदशाननः ॥ विनयावनतोभूत्वात्यभिवाद्येदमब्रवीत्‌ ॥ ३० ॥ कोन्वस्मि न्प्रवरोलोकेदेवानांबलवत्तरः ॥ देवाश्रयंसमाश्रित्ययुद्धेशत्रुंजयंतिहि ॥ ३१ ॥ कंयजंतिद्विजानित्यंकंध्यायंति चयोगिनः ॥ एतन्मेशंसभगवन्प्रश्नंप्रश्नविदांवर ॥ ३२ ॥ ज्ञात्वातस्यहृदिस्थंयत्तदशेषेणयोगदृक्‌ ॥ दशाननमु वाचेदंशृणुवक्ष्यामिपुत्रक ॥ ३३ ॥ भर्तायोजगतांनित्यंयस्यजन्मादिकंनहि ॥ सुरासुरैर्नुतोनित्यंहरिर्नारायणो ऽव्ययः ॥ ३४ ॥ यन्नाभिपंकजाज्जातोब्रह्माविश्वसृजांपतिः ॥ सृष्टंयेनैवसकलंजगत्स्थावरजंगमं ॥ ३५ ॥

र्मुच्यते ॥२८॥ यदर्थंसीताहृतातांत्वदाश्रयांत्वद्विषयांकथांवक्ष्यामि प्रजापतेःसुतंमानसंसुतं ॥२९॥३०॥ अस्मिन्लोकेप्रवरःश्रेष्ठः विवक्षितं श्रेष्ठ्यमेवाह देवानामित्यादि बलवत्तरत्वमेवप्रकटयति देवाश्चेति ॥३१॥३२॥ तस्यरावणस्यहृत्स्थंतादृशान्मेमरणंभवत्वितीच्छारूपं ॥३३॥ यःसुरासुरैर्नुतःसहरिर्नारायणादिपदवाच्यइत्यर्थः ॥३४॥ अथतल्लक्षणमाह यन्नाभीति अनेनब्रह्मसहितजगत्स्रष्टृत्वरूपंतल्लक्षणमुक्तं ॥३५॥

अनुजपंतिध्यायंति ॥ ३६ ॥ ३७ ॥ कांवेति वाशब्दोवाक्यालंकारे ॥ ३८ ॥ ३९ ॥ हरेर्गतिंमुक्तिं साचक्रमेणहिरण्यगर्भेणसहेतिबोध्यं ॥ ॥४०॥ एवंमुक्तीच्छुरपिरावणोभगवन्मायावशात्तमोगुणप्रधानत्वाच्चभगवद्द्वेषेणैवमुक्तिंप्रार्थयते योत्स्येऽहमिति कथंयोत्स्यइत्यर्थः ॥४१॥ ॥४२॥ सुखीभवेत्यस्यततइत्यादिः ततोमरणलाभेनसुखित्वं ॥४३॥ स्थावरेषुनदेषुनदीषुचव्याप्तइतिशेषः ॥ ४४ ॥ इदमुपलक्षणंतदाह ओं

तंसमाश्रित्यविबुधाजयंतिसमरेरिपून् ॥ योगिनोध्यानयोगेनतमेवानुजपंतिहि ॥ ३६ ॥ महर्षेर्वचनंश्रुत्वाप्रत्युवाचदशाननः ॥ दैत्यदानवरक्षांसिविष्णुनानिहतानिच ॥ ३७ ॥ कांवागतिंप्रपद्यंतेप्रेत्यतेमुनिपुंगव ॥ तमुवाचमुनिःश्रेष्ठोरावणंराक्षसाधिपं ॥ ३८ ॥ दैवतैर्निहतानित्यंगत्वास्वर्गमनुत्तमं ॥ भोगक्षयेपुनस्तस्माद्भ्रष्टाभूमौभवंतिते ॥ ३९ ॥ पूर्वार्जितैःपुण्यपापैर्म्रियंतेचोद्भवंतिच ॥ विष्णुनायेहतास्तेतुप्राप्नुवंतिहरेर्गतिं ॥४०॥ श्रुत्वामुनिमुखात्सर्वंरावणोत्हृष्टमानसः ॥ योत्स्येऽहंहरिणासार्धमितिचिंतापरोऽभवत् ॥ ४१ ॥ मनःस्थितंपरिज्ञात्वारावणस्यमहामुनिः ॥ उवाचवत्सतेऽभीष्टंभविष्यतिनसंशयः ॥ ४२ ॥ कंचित्कालंप्रतीक्षस्वसुखीभवदशानन ॥ एवमुक्त्वामहाबाहोमुनिःपुनरुवाचतं ॥ ४३ ॥ तस्यस्वरूपंवक्ष्यामित्यरूपस्यापिमायिनः ॥ स्थावरेषुचसर्वेषुनदेषुचनदीषुच ॥ ४४ ॥ ओंकारश्चैवसत्यंचसावित्रीपृथिवीचसः ॥ समस्तजगदाधारःशेषरूपधरोहिसः ॥ ४५ ॥ सर्वेदेवाःसमुद्राश्चकालःसूर्यश्चचंद्रमाः ॥ सूर्योदयोदिवारात्रीयमश्चैवतथाऽनिलः ॥ ४६ ॥ अग्निरिंद्रस्तथामृत्युःपर्जन्योवसवस्तथा ॥ ब्रह्मारुद्रादयश्चैवयेचान्येदेवदानवाः ॥ ४७ ॥

कारइति प्रणवरूपत्वेनसर्ववाङ्मयव्याप्तिरुक्ता ओंकारोवैसर्वावागितिश्रुतेः तदेवाह सत्यंवाक्यंसावित्रीगायत्रीच सइत्यनेनार्थोऽपिसर्वस्तद्रूपएवेत्याह पृथिवीचेति इदमुपलक्षणंतदाह समस्तेति ॥ ४५ ॥ ४६ ॥ शेषादयोदानवांताःसर्वेतद्रूपाएवेतिविराट्रूपमुक्तं ॥ ४७ ॥

सूर्यादौप्रकाशोऽग्नेर्ज्वलनंरक्षासंहारौचतदधीनाएवेत्याह विद्योततीति तत्सर्वमयतेनैवेत्याह क्रीडांकरोतीति क्रीडामिवकरोतीत्यर्थः नतुक श्चिच्छ्रमस्तस्येतिभावः ॥ ४८ ॥ उक्तमेवार्थंसामान्येनोपसंहरति तेनेति अथैतत्ध्यानाशक्तंप्रतिअन्यत्ध्येयंरूपमाह नीलोत्पलेति विद्युद्वर्णां बरंपीतांबरं जांबूनदप्रख्यांतत्सदृशकांतिं देवींपश्यन् स्वदर्शनेनसृष्टिव्यापारादौप्रवर्तयन्नालिंग्यतिष्ठतीति अनेनतस्याःस्वतोनात्यंतंभेदइति दर्शितं शक्तिशक्तिमतोस्तादात्म्यस्यैवशास्त्रसिद्धांतत्वात् ॥४९ ॥ ५० ॥ तादृशोऽपितत्प्रसादंविनाद्रष्टुमशक्यइत्याह द्रष्टुमिति ॥ ५१ ॥ तद्द

विद्योततिज्वलत्येषपातिचात्तीतिविश्वकृत् ॥ क्रीडांकरोत्यव्ययात्मासोऽयंविष्णुःसनातनः ॥ ४८ ॥ तेनसर्वमिदंव्याप्तंत्रैलोक्यंसचराचरं ॥ नीलोत्पलदलश्यामोविद्युद्वर्णांबरावृतः ॥ ४९ ॥ शुद्धजांबूनदप्रख्यांश्रियंवामांकसंस्थितां ॥ सदानपायिनींदेवींपश्यन्नालिंग्यतिष्ठति ॥ ५० ॥ द्रष्टुंनशक्यतेकैश्चिद्देवदानवपन्नगैः ॥ यस्यप्रसादंकुरुतेसचैनंद्रष्टुमर्हति ॥ ५१ ॥ नचयज्ञतपोभिर्वानदानाध्ययनादिभिः ॥ शक्यतेभगवान्द्रष्टुमुपायैरितरैरपि ॥ ५२ ॥ तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः ॥ शक्यतेभगवान्विष्णुर्वेदांतामलदृष्टिभिः ॥ ५३ ॥ अथवाद्रष्टुमिच्छातेशृणुत्वंपरमेश्वरं ॥ त्रेतायुगेसदेवेशोभवितानृपविग्रहः ॥ ५४ ॥ हितार्थंदेवमर्त्यानामिक्ष्वाकूणांकुलेहरिः ॥ रामोदाशरथिर्भूत्वामहासत्त्वपराक्रमः ॥ ५५ ॥ पितुर्नियोगात्सभ्रात्राभार्ययादंडकेवने ॥ विचरिष्यतिधर्मात्माजगन्मात्रास्वमायया ॥ ५६ ॥

र्शनेतद्भक्तिरेवासाधारणउपायइत्याह नचेति ॥ ५२ ॥ तद्भक्तैरितिचशक्यतेद्रष्टुमितिशेषः ॥ ५३ ॥ अथवाद्रष्टुमिच्छाएतैरुपायैर्विनापीति शेषः नृपविग्रहः गृहीतराजशरीरः ॥ ५४ ॥ हितार्थमित्यस्यत्वद्वधार्थमितिहृत्स्थःशेषः महासत्त्वपराक्रमः महांतौबलपराक्रमौयस्यसः ॥ ॥ ५५ ॥ जगन्मातृत्वंजगत्कारणत्वपालकत्वाभ्यां ॥ ५६ ॥

तस्यचिदात्मनोस्मिन्देहेहंकारएवमंत्रीसचाहंकारस्तेनैवकल्पितःतत्सान्निध्येनमायायास्तद्रूपःपरिणामइत्यतस्तेनकल्पितइत्युक्तं सोहंकारःस्वं स्वीयंदेहरूपगेहविषयमहंकारंममेत्याकाराभिमानंचिदात्मनिआरोप्य ॥ ४२ ॥ तेनचिदात्मनातादात्म्यमभेदमापन्नोयतोतःस्वचेष्टितंचिदानंदेविदधाति ननुजडस्याहंकारस्यकथंचेष्टितत्वमतआह तद्वासितवपुस्तत्संपर्कादेवतादृशसामर्थ्यवानयंजातइत्यर्थः ॥ ४२ ॥ तेनाहंकारेणसंकल्पितोयमेवससंकल्पान्करोत्वितिसंकल्पविषयीकृतः यद्वा स्वीयसंकल्पेनैवतद्वान्कृतोत्यंतसन्निकर्षेणतादात्म्यापन्नत्वात् यथाभार्या

तस्याहंकारएवास्मिन्मंत्रीतेनैवकल्पितः॥ देहगेहाभिमानंस्वंसमारोप्यचिदात्मनि ॥ ४२ ॥ तेनतादात्म्यमापन्नःस्वचेष्टितमशेषतः॥ विदधातिचिदानंदेतद्वासितवपुःस्वयं॥ ४३॥ तेनसंकल्पितोदेहीसंकल्पनिगडावृतः॥ पुत्रदारगृहादीनिसंकल्पयतिचानिशं॥ ४४॥ संकल्पयन्स्वयंदेहीपरिशोचतिसर्वदा ॥ त्रयस्तस्याहमोदेहाअधमोत्तममध्यमाः॥ ४५॥ तमःसत्वरजःसंज्ञाजगतःकारणंस्थितेः ॥ तमोरूपाद्धिसंकल्पान्नित्यंतामसचेष्टया ॥ ॥ ४६॥ अत्यंततामसोभूत्वाकृमिकीटत्वमाप्नुयात्॥ सत्त्वरूपोहिसंकल्पोधर्मज्ञानपरायणः ॥ ४७॥ अदूरमोक्षसाम्राज्यःसुखरूपोहितिष्ठति ॥ रजोरूपोहिसंकल्पोलोकेसव्यवहारवान्॥ ४८॥

विशिष्टएवगृहस्थोगृहस्थस्यभार्येतिचव्यवहारस्तद्वदयंव्यवहारोबोध्यः तदीयसंकल्परूपनिगडेनावृतोबद्धःसंकल्पयतिकामयते ॥ ४४ ॥ तानिकामयन्तदलाभेलब्धनाशेचशोचति त्रयःतमःसत्त्वरजोरूपाः ॥४५॥ तदेवाह तमइत्यादि अतएवजगतःस्थितेःकारणं तेषांकार्यविशेषानाह तमोरूपादिति तमोरूपात्तमोगुणप्राधान्येनकृतात्संकल्पादित्यर्थः वृत्तिवृत्तिमतोरभेदात् तमोरूपादित्युक्तकारणानुरूपत्वात्कार्यस्यतत्कृतचेष्टायास्तामसत्वं ॥ ४६ ॥ ४७ ॥ मोक्षोप्यनयैववृत्त्याप्राप्यइत्याहादूरेति अतएवसपुरुषःसुखरूपस्तिष्ठति हिप्रसिद्धं यस्यरजोरूपःसंकल्पःसलोकेव्यवहारवान् ॥ ४८ ॥

ततःव्यवहारयुतःपुत्रदारानुरंजितः संसारेराजससंकल्पकृततत्तत्कर्मवशात्तिष्ठति यस्यसंकल्पएतत्पूर्वोक्तंत्रिविधमपिरूपंपरित्यज्यशाम्यती तिशेषः॥४९॥सपरंपदमाप्नोति सत्वरूपसंकल्पस्यहिक्रमेणसर्वसंकल्पनाशद्वारादूरमोक्षत्वंप्रागुक्तंबोध्यं आत्मपरिक्षयेअत्रात्मासंकल्पः अतस्त्वं दृष्टीःसर्वेंद्रियज्ञानानिपरित्यज्यमनसैवमनोविनियम्यविषयेभ्योनिवर्त्य ॥ ५० ॥ बाह्येंद्रियविषयसहितोयआभ्यंतरेंद्रियविषयोर्थस्तस्यतद्वि षयस्यसंकल्पस्यक्षयंकुरुसंकल्पंत्यजेत्यर्थः अन्योपायेननसर्वथासुखप्राप्तिरित्याह यदीति ॥ ५१ ॥ तादृशतपःपूर्वकंपातालाद्यन्यतमलोक

परितिष्ठतिसंसारेपुत्रदारानुरंजितः॥ त्रिविधंतुपरित्यज्यरूपमेतन्महामते ॥ ४९ ॥ संकल्पःपरमाप्नोतिपदमात्म परिक्षये ॥ दृष्टीःसर्वाःपरित्यज्यनियम्यमनसामनः॥५०॥ सबाह्याभ्यंतरार्थस्यसंकल्पस्यक्षयंकुरु॥ यदिवर्षस हस्राणितपश्चरसिदारुणं॥५१॥पातालस्थस्यभूस्थस्यस्वर्गस्थस्यापितेनघ॥नान्यःकश्चिदुपायोस्तिसंकल्पोपश माहते॥ ५२ ॥ अनाबाधेविकारेस्वेसुखेपरमपावने॥ संकल्पोपशमेयत्नंपौरुषेणपरंकुरु॥ ५३ ॥ संकल्पतंतौनि खिलाभावाःप्रोक्ताःकिलानघ॥ छिन्नेतंतौनजानीमःक्वयांतिविभवाःपराः॥ ५४॥ निःसंकल्पोयथाप्राप्तव्यव हारपरोभव॥ क्षयेसंकल्पजालस्यजीवोब्रह्मत्वमाप्नुयात्॥ ५५॥

स्थस्यापितवसंकल्पोपशमादृतेतंविना ॥ ५२ ॥ अनाबाधेदुःखासंमिश्रे अविकारेविषयसंबंधंविनैवप्राप्ये परमपावनेस्वात्मरूपेसुखेतत्प्राप्ति निमित्तंनकश्चिदुपायोस्तीत्यर्थस्तस्मात्तद्रूपोपशमेयत्नंकुरु ॥५३॥ संकल्पस्यैवाधारत्वात्तन्नाशेएवसर्वविषयनिवृत्तिरित्याह संकल्पतंताविति विभवाः विशिष्टोभवःसंसारोयेभ्यस्तादृशास्तेपराभवास्तेक्वयांतीतिनजानीमः सर्वथानश्यंत्येवेतिभावः ॥ ५४ ॥ तस्मान्निःसंकल्पस्त्यक्ते च्छोयथाप्राप्तंव्यवहारंकुर्वित्यर्थः संकल्पक्षयफलमाह क्षयेति ॥ ५५ ॥

प्रसभंहठेनविकल्पजालंत्यक्त्वाअधिगतःपरमार्थोब्रह्मतत्त्वंयेनतद्भावमुपेत्यप्राप्यतदद्वितीयंपदंअधिगमयप्रापुहि विततसुखायानुच्छेद्यसुखाय त
दर्थंनिदिध्यासनमुपदिशति सुषुप्तिकालिकाचित्तवृत्तिर्यस्यतादृशोभव सकलविषयरहितचित्तवृत्तिरेवब्रह्माकाराचित्तवृत्तिरितिभावः ॥५६॥
इतिश्रीमत्सकलराजवि० उत्तरकांडेषष्ठःसर्गः ॥ ६ ॥ ॥७॥ वाल्मीकिनेति सद्गुरूपदेशात् कुशस्योत्तमाधिकारित्वाच्चतत्कालमे

अधिगतपरमार्थतामुपेत्यप्रसभमपास्यविकल्पजालमुच्चैः ॥ अधिगमयपदंतदद्वितीयंविततसुखायसुषुप्तचि
त्तवृत्तिः ॥५६॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेषष्ठःसर्गः॥६॥ ॥७॥ ॥७॥
वाल्मीकिनाबोधितोसौकुशःसद्योगतभ्रमः॥ अंतर्युक्तोबहिःसर्वमनुकुर्वंश्चचारसः ॥ १ ॥ वाल्मीकिरपितौप्रा
हसीतापुत्रौमहाधियौ ॥ तत्रतत्रचगायंतौपुरेवीथिषुसर्वतः॥ २॥ रामस्याग्रेप्रगायेतांशुश्रूषुर्यदिराघवः॥ नम्रा
त्यंवैयुवाभ्यांतद्यदिकिंचित्प्रदास्यति ॥ ३॥इतितौचोदितौतत्रगायमानौविचेरतुः॥ यथोक्तंऋषिणापूर्वंतत्रत
त्राभ्यगायतां ॥ ४ ॥तांसशुश्राव काकुत्स्थःपूर्वचर्याततस्ततः॥ अपूर्वपाठजातिंचगेयेनसमभिप्लुतां ॥ ५॥ बा
लयोराघवःश्रुत्वाकौतूहलमुपेयिवान् ॥ अथकर्मांतरेराजासमाहूयमहामुनीन् ॥ ६॥ राज्ञश्चैवनरव्याघ्रःपंडितां
श्चैवनैगमान् ॥ पौराणिकान्शब्दविदोयेचवृद्धाद्विजातयः ॥ ७ ॥ एतान्सर्वान्समाहूयगायकौसंप्रवेशयत्॥
तेसर्वेहृष्टमनसोराजानोब्राह्मणादयः ॥ ८ ॥ रामंतौदारकौदृष्ट्वाविस्मितात्यनिमेषणाः ॥ अवोचन्सर्वएवैते
परस्परमथागताः ॥ ९ ॥

वनिदिध्यासनांतसाधनसंपदितिभावः यत्करोतितदनुकुर्वन्निवतत्रास्थाभावादितिभावः ॥ १ ॥
॥ २ ॥ यदिकिंचिद्राघवोधनंदास्यतितन्नग्राह्यं ॥ ३ ॥ यथोक्तंयथाशिक्षितं ॥ ४ ॥ अपूर्वपाठजातिंअपूर्वपठनरीतिं गेयेनगानेनव्याप्तां ॥
॥५॥६॥ शब्दविदःव्याकरणविदः ॥७॥ संप्रवेशयत् अडभावआर्षः ॥८॥ रामंदारकौचदृष्ट्वाविस्मिताःसंतोऽनिमेषणाअपश्यन्नितिशेषः ॥९॥

बिंबंप्रतिबिंबं ॥ १० ॥ ११ ॥ अतिमानुषंमनुष्यलोकीयगानमतिक्रांतं ॥ १२ ॥ १३ ॥ नौआवांवन्यभोजमौस्वइतिशेषः ॥ १४ ॥ १५ ॥
॥ १६ ॥ १७ ॥ प्रत्ययंसर्वजनस्यशुद्धत्वनिश्चयोत्पादकंशपथमित्यन्वयः सीतामितिपूर्वान्वयि ॥ १८ ॥१९॥२०॥२१॥ राघवस्यापिसविधं

इमौरामस्यसदृशौबिंबाद्बिंबमिवोदितौ ॥ जटिलौयदिनस्यातांनचवल्कलधारिणौ ॥ १० ॥ विशेषंनाधिगच्छा
मोराघवस्यानयोस्तदा ॥ एवंसंवदतांतेषांविस्मितानांपरस्परं ॥ ११ ॥ उपचक्रमतुर्गातुंतावुभौमुनिदारकौ ॥
ततःप्रवृत्तंमधुरंगांधर्वमतिमानुषं ॥ १२ ॥ श्रुत्वातन्मधुरंगीतमपराह्णेरघूत्तमः ॥ उवाचभरतंचाभ्यांदीयताम
युतंवसु ॥ १३ ॥ दीयमानंसुवर्णंतुनतज्जगृहतुस्तदा ॥ किमनेनसुवर्णेनराजन्नौवन्यभोजनौ ॥ १४ ॥ इतिसंत्य
ज्यसंदत्तंजग्मतुर्मुनिसन्निधिं ॥ एवंश्रुत्वातुचरितंरामःस्वस्यैवविस्मितः ॥ १५ ॥ ज्ञात्वासीताकुमारौतौशत्रुघ्नं
चेदमब्रवीत् ॥ हनूमंतंसुषेणंचविभीषणमथांगदं ॥ १६ ॥ भगवंतंमहात्मानंवाल्मीकिंमुनिसत्तमं ॥ आनयध्वं
मुनिवरंससीतंदेवसंमितं ॥ १७ ॥ अस्यास्तुपर्षदोमध्येप्रत्ययंजनकात्मजा ॥ करोतुशपथंसर्वेजानंतुगतकल्म
षां ॥ १८ ॥ सीतांतद्वचनंश्रुत्वागताःसर्वेतिविस्मिताः ॥ ऊचुर्यथोक्तंरामेणवाल्मीकिंरामपार्षदाः ॥ १९ ॥ राम
स्यत्वद्गतंसर्वंज्ञात्वावाल्मीकिरब्रवीत् ॥ श्वःकरिष्यतिवैसीताशपथंजनसंसदि ॥ २० ॥ योषितांपरमंदैवंपतिरेवन
संशयः ॥ तच्छ्रुत्वासहसागत्वासर्वेप्रोचुर्मुनेर्वचः ॥ २१ ॥ राघवस्यापिरामोपिश्रुत्वामुनिवचस्तथा ॥ राजानो
मुनयःसर्वेश्शृणुध्वमितिचाब्रवीत् ॥ २२ ॥ सीतायाःशपथंलोकाविजानंतुशुभाशुभं ॥ इत्युक्ताराघवेणाथलोकाः
सर्वेदिदृक्षवः ॥ २३ ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवमहर्षयः ॥ वानराश्चसमाजग्मुःकौतूहलसमन्विताः ॥ २४ ॥

तद्वचऊचुरित्यन्वयः राजानोमुनयइतिसंबोधने ॥२२॥ सीतायाःशपथंदृष्ट्वातस्याःशुभाशुभंधर्माधर्मरूपंविजानंतुनिर्णयंतु ॥२३॥२४॥

॥ २५ ॥ बाष्पकंठासैव ॥ २६ ॥ २७ ॥ २८ ॥ अपापापिलोकापवादभीत्यात्यक्ता ॥ २९॥ सासीताप्रत्ययंविश्वासजनकंशपथं अत्रस्था नेऋषेरतिकरुणरसाक्रांतचित्ततयाइमावितिपदपौनरुक्त्यंनदोषाय ॥ ३० ॥ तत्रादौभगवान्वाल्मीकिःस्वधर्मशपथैःसीतायाअदुष्टत्वंख्याप

ततोमुनिवरस्तूर्णंससीतःसमुपागमत् ॥ अग्रतस्तमृषिंकृत्वायांतींकिंचिदवाङ्मुखी ॥ २५॥ कृतांजलिर्बाष्पकंठासीतायज्ञंविवेशतं ॥ दृष्ट्वालक्ष्मीमिवायांतींब्रह्माणमनुयायिनीं ॥ २६ ॥ वाल्मीकेःपृष्ठतःसीतांसाधुवादोमहानभूत् ॥ तदामध्येजनौघस्यप्रविश्यमुनिपुंगवः ॥ २७॥ सीतासहायोवाल्मीकिरितिप्राहचराघवं ॥ इयंदाशरथेसीतासुव्रताधर्मचारिणी ॥ २८ ॥ अपापातेपुरात्यक्तामामाश्रमसमीपतः ॥ लोकापवादभीतेनत्वयाराममहावने ॥ २९ ॥ प्रत्ययंदास्यतेसीतातदनुज्ञातुमर्हसि ॥ इमौतुसीतातनयाविमौयमलजातकौ ॥ ३० ॥ सुतौतुतवदुर्धर्षौतथ्यमेतद्ब्रवीमिते ॥ प्रचेतसोहंदशमःपुत्रोरघुकुलोद्वह ॥ ३१ ॥ अनृतंनस्मराम्युक्तंयथेमौतवपुत्रकौ ॥ बहून्वर्षगणान्सम्यक्तपश्चर्यामयाकृता ॥ ३२ ॥ नोपाश्नीयांफलंतस्यादुष्टेयंयदिमैथिली ॥ वाल्मीकिनैवमुक्तस्तुराघवःप्रत्यभाषत ॥ ३३ ॥ एवमेतन्महाप्राज्ञयथावदसिसुव्रत ॥ प्रत्ययोजनितोमह्यंतववाक्यैरकिल्बिषैः ॥ ३४ ॥ लंकायामपिदत्तोमेवैदेह्याप्रत्ययोमहान् ॥ देवानांपुरतस्तेनमंदिरेसंप्रवेशिता ॥ ३५ ॥ सेयंलोकभयाद्ब्रह्मन्नपापापिसतीपुरा ॥ सीतामयापरित्यक्ताभवांस्तत्क्षंतुमर्हति ॥ ३६ ॥

यति प्रचेतसइत्यादिना ॥ ३१ ॥ यथाद्ययावदनृतमुक्तंनस्मरामितथाइमौतवपुत्रकाविितिवाक्यमपिसत्यमेवेत्यर्थः ॥ ३२ ॥ ३३ ॥ प्रत्ययो विश्वासः ॥ ३४ ॥ महान्प्रत्ययजनकः शपथोऽग्निप्रवेशरूपः ॥ ३५ ॥ लोकभयात्लोककृतदुर्वादभयात् ॥ ३६ ॥

जगतीमध्येतद्वर्तिलोकमध्ये शुद्धायांशपथेनसर्वलोकज्ञातशुद्धतायां ॥ ३७ ॥ ३८ ॥ ३९ ॥ विवरंप्रवेशायछिद्ररूपंमार्गं ॥ ४० ॥ महाद्भुत मत्याश्चर्यंदिव्यंसिंहासनंप्रादुरासीत् ॥ ४१ ॥ सर्वाश्चर्यत्वदिव्यत्वोपपादकंरविप्रभमिति ॥ ४२ ॥ दोर्भ्यांगृहीत्वास्वागतमितितामुवाचाथै नामासनेसंन्यवेशयत् ॥ ४३ ॥ साधुवादश्चआसीदितिशेषः ॥ ४४ ॥ बहुधावाचःबहुप्रकारवाचःसीतेमैवंकर्तुमर्हाइतिराघवोगृही

ममैवजातौजानामिपुत्रावेतौकुशीलवौ ॥ शुद्धायांजगतीमध्येसीतायांप्रीतिरस्तुमे ॥ ३७ ॥ देवाःसर्वेपरिज्ञायरामाभिप्रायमुत्सुकाः ॥ ब्रह्माणमग्रतःकृत्वासमाजग्मुःसहस्रशः ॥३८॥ प्रजाःसमागमन्हृष्टाःसीताकौशेयवासिनी ॥ उदङ्मुखीत्यधोदृष्टिःप्रांजलिर्वाक्यमब्रवीत् ॥ ३९ ॥ रामादन्यंयथाहंवैमनसापिनचिंतये ॥ तथामेधरणीदेवी विवरंदातुमर्हति ॥ ४० ॥ तथाशपंत्याःसीतायाःप्रादुरासीन्महाद्भुतं ॥ भूतलाद्दिव्यमत्यर्थंसिंहासनमनुत्तमं ॥ ४१ ॥ नागेंद्रैर्ध्रियमाणंचदिव्यदेहैरविप्रभं ॥ भूदेवीजानकींदोर्भ्यांगृहीत्वास्नेहसंयुता ॥ ४२ ॥ स्वागतंतामुवाचैनामासनेसंन्यवेशयत् ॥ सिंहासनस्थांवैदेहींप्रविशंतींरसातलं ॥ ४३ ॥ निरंतरापुष्पवृष्टिर्दिव्यासीतामवाकिरत् ॥ साधुवादश्चसुमहान्देवानांपरमाद्भुतः ॥४४॥ ऊचुश्चबहुधावाचोअंतरिक्षगताःसुराः ॥ अंतरिक्षेचभूमौचसर्वेस्थावरजंगमाः ॥ ४५ ॥ वानराश्चमहाकायाःसीताशपथकारणात् ॥ केचिच्चिंतापरास्तस्याःकेचिद्ध्यानपरायणाः ॥ ४६ ॥ केचिद्रामंनिरीक्षंतःकेचित्सीतामचेतसः ॥ मुहूर्तमात्रंतत्सर्वंतूष्णींभूतमचेतनं ॥ ४७ ॥

तशपथोपिपुनःशपथग्रहणेप्रवृत्तइत्येवंबहुप्रकारवाचः ॥ ४५ ॥ सीताशपथकारणात्बहुधावाचऊचुरित्यनुकर्षः तस्याश्चिंतापराःक्वसीतागमिष्यतीत्यादिचितायुक्ताः ध्यानपरायणाःभूप्रविष्टसीतारूपस्यध्यानपरायणाः ॥ ४६ ॥ रामंनिरीक्षंतः किंकरिष्यतीत्याद्येवं सीतांनिरीक्षंतःकथंगच्छत्येवेत्याद्येवंप्रकारेणअचेतनमासीदितिशेषः ॥ ४७ ॥

भविष्यतःकार्यस्यगौरवंनिश्चयंज्ञात्वैवज्ञात्वापि ॥ ४८ ॥ अजानन्निवशुशोचलोकव्यवहारानुसारेणेत्यर्थः बोधितःभाविनोदुःपरिहरत्वा दिकथाभिःकृतदुःखापनयनः ॥ ४९ ॥ ऋत्विजोयेइत्यत्रतान्विससर्जेत्यनुकर्षः ॥ ५० ॥ तानृत्विकूप्रभृतीन् ॥ ५१ ॥ एकांतेसमुपस्थितः तत्रैवस्थितआसीत् ॥५२॥ ध्याननिरतेराघवेसतीत्यर्थः रामंतच्चरित्रैर्ऋषिवाक्यैश्चतत्कृपावशान्नारायणंज्ञात्वा ॥ ५३॥ प्रणतानारायणोयमितिबुध्याआदिःकारणंस्वयंचोत्पत्तिनाशरहितस्तदभावादेवचमध्यवर्जितः ॥ ५४ ॥ सर्वेषांपरमउत्कृष्टआत्माअंतर्यामिविधयाप्रेरक

सीताप्रवेशनंदृष्ट्वासर्वंसंमोहितंजगत् ॥ रामस्तुसर्वंज्ञात्वैवभविष्यत्कार्यगौरवं ॥ ४८ ॥ अजानन्निवदुःखेन शुशोचजनकात्मजां ॥ ब्रह्मणाऋषिभिःसार्धंबोधितोरघुनंदनः ॥ ४९ ॥ प्रतिबुध्यइवस्वप्नाच्चकारानंतराःक्रियाः॥ विससर्जऋषीन्सर्वानृत्विजोयेसमागताः॥ ५० ॥ तान्सर्वान्धनरत्नाद्यैस्तोषयामासभूरिशः॥ उपादायकुमारौतावयोध्यामगमत्प्रभुः ॥ ५१ ॥ तदादिनिस्पृहोरामःसर्वभोगेषुसर्वदा ॥ आत्मचिंतापरोनित्यमेकांतेसमुपस्थितः ॥५२॥ एकांतध्याननिरतेएकदाराघवेसति ॥ ज्ञात्वानारायणंसाक्षात्कौसल्याप्रियवादिनी॥ ॥५३॥ भक्त्यागत्यप्रसन्नंतंप्रणताप्राहहृष्टधीः ॥ रामत्वंजगतामादिरादिमध्यांतवर्जितः॥ ५४॥ परमात्मापरानंदःपूर्णःपुरुषईश्वरः॥ जातोसिमेगर्भगृहेममपुण्यातिरेकतः॥ ५५॥ अवसानेममाप्यद्यसमयोभूद्रघूत्तम ॥ नाद्याप्यबोधजःकृत्स्नोभवबंधोनिवर्तते॥५६॥

त्वात् परानंदःहिरण्यगर्भानंदादपिउत्कृष्टोयआनंदस्तद्रूपःपूर्णःपुरुषःप्राप्तसर्वकामत्वात्पूर्णः अतएवेश्वरःसर्वनियंताईदृशोपित्वंममगर्भरूपे गृहेमदीयपुण्याधिक्याज्जातोजातइव ॥ ५५ ॥ अवसानेत्वस्याअवसानकालेऽतिवार्धकेइत्यर्थः त्वदवतारसमाप्तिकालेचसमयःप्रश्नावसरः अबोधजःअज्ञानजः कृत्स्नोननिवर्ततेसर्वदात्वत्संगात्किंचिन्निवृत्तोऽपिसर्वथाननिवर्ततइतिभावः ॥ ५६ ॥

इदानीमपिअवसानकालेपितथासंक्षेपतोबोधयेत्यन्वयः ॥ ५७ ॥ निर्वेदोविषयेष्वलंप्रत्ययस्तेमवादिनीमीदृशवचनवक्रीं ॥५८॥ त्रीन्मार्गा
नाह कर्मेत्यादि अत्रेदंबोध्यं ज्ञानयोगस्त्रिधा एतज्जन्मानुष्ठितकर्मयोगसंपादितचित्तशुध्याजातः एतज्जन्मानुष्ठितभक्तियोगकृतचित्तशुध्या
जातः पूर्वार्जिताभ्यामाभ्यांसंपादिततयाएतज्जन्मनितदनुष्ठानामपेक्षोवेति अन्यथाकेवलकर्मभक्तिभ्यांज्ञानंविनामोक्षस्यतमेवविदित्वातिमृ
त्युमेति नान्यःपंथाविद्यतेयनायेतिश्रुतिविरुद्धतयायथाश्रुतमूलासंगतिःस्यादितिदिक् तेषांमध्येभक्तियोगरूपोमार्गोज्ञानजननेसुलभइत्यर्थः
॥ ५९ ॥ गुणभेदतःतमोरजःसत्त्वरूपगुणभेदेनतामसीराजसीसात्विकीचेतित्रिधेत्यर्थः ॥ ६० ॥ भक्तित्रैविध्याद्भक्तस्यापित्रैविध्यंतत्रताम

**इदानीमपिमेज्ञानंभवबंधनिवर्तकं ॥ यथासंक्षेपतोभूयात्तथाबोधयमांविभो ॥ ५७॥ निर्वेदवादिनीमेवंमा**
**तरंमातृवत्सलः ॥ दयालुःप्राहधर्मात्माजराजर्जरितांशुभां ॥ ५८॥ मार्गास्त्रयोमयाप्रोक्ताःपुरामोक्षाप्तिसाध**
**काः॥ कर्मयोगोज्ञानयोगोभक्तियोगश्चशाश्वतः ॥ ५९ ॥ भक्तिर्विभिद्यतेमातस्त्रिविधागुणभेदतः॥ स्वभावो**
**यस्ययस्तेनतस्यभक्तिर्विभिद्यते॥६०॥ यस्तुहिंसांसमुद्दिश्यदंभंमात्सर्यमेववा॥भेददृष्टिश्चसंरंभीभक्तोमेतामसः**
**स्मृतः ॥ ६१ ॥ फलाभिसंधिर्भोगार्थीधनकामोयशस्तथा ॥ अर्चादौभेदबुध्यामांपूजयेत्सतुराजसः॥ ६२॥**
**परस्मिन्नर्पितंयस्तुकर्मनिर्हरणायवा॥ कर्तव्यमितिवाकुर्याद्भेदबुध्यासससात्विकः॥६३॥**

संभक्तमाह यस्त्विति हिंसांशत्रोः दंभंपूजालाभादिफलकं मात्सर्यंपरगुणद्वेषः भेददृष्टिःअरिमित्रादिदृष्टिः संरंभीतत्तद्विषयकामहवान् ॥६१॥
फलंस्वर्गस्तदभिसंधिस्तत्कामः भोगऐहिकःयशइत्यस्ययशःकामइत्यर्थः गोबलीवर्दन्यायेनपृथङ्निर्देशः अर्चादौप्रतिमादौआदिनास्थंडिला
दिपूजास्थानसंग्रहः भेदबुध्याअयमुपास्योहमुपासकइत्येवंरूपया ॥ ६२ ॥ योनिर्हरणायपापनाशायकर्ममत्पूजनरूपंपरस्मिन्मयिअर्पितं
कुर्याद्भगवतःप्रेरणयायदस्वतंत्रेणमयाकृतंतेनसएवतुष्यत्वितिबुद्धिर्ब्रह्मार्पणंनाम अथवाशास्त्रबोधितत्वादवश्यकर्तव्यमितिबुध्यावायःकुर्या
त्ससात्विकः अत्रापिभेदबुध्येत्युपादानादभेदबुद्धिरेतत्फलमितिसूचितं ॥ ६३ ॥

एतत्फलीभूतंनिर्गुणभक्तियोगलक्षणमाह मद्गुणेति अविच्छिन्नामनोवृत्तिरित्यंतेन अनंतगुणालयेमयियाअविच्छिन्नामनोवृत्तिरेतत्सगुणध्यानस्यनिर्गुणध्यानस्यलक्षणंप्रापकं तत्रदृष्टांतः यथागंगांबुनोंबुधौइत्यनेनाभेदविषयत्वंमनोवृत्तेर्दर्शितं ॥ ६४ ॥ अहैतुक्यंफलानुद्देशः अत एवाव्यवहिताविशेषेणावहितासंबद्धासार्ष्टिःसारूप्यं ॥ ६५ ॥ उक्तफलानिददात्यपिपरंतुभक्तामत्सेवनंविनातेषुमत्सेवायाअभावात्तानि नगृह्णंतिनांगीकुर्वंति सएवसालोक्यादितिरस्कारएवआत्यंतिकोयोगः सएवपूर्णोभक्तोयोमत्सेवारहितंमोक्षमपिनबहुमन्यतेइति ॥ ६६ ॥

मद्गुणाश्रयणादेवमय्यनंतगुणालये ॥ अविच्छिन्नामनोवृत्तिर्यथागंगांबुनोंबुधौ ॥ तदेवभक्तियोगस्यलक्षणंनिर्गुणस्यहि ॥ ६४ ॥ अहैतुक्यव्यवहितायाभक्तिर्मयिजायते ॥ सामेसालोक्यसामीप्यसार्ष्टिसायुज्यमेववा ॥ ॥ ६५ ॥ ददात्यपिनगृण्हंतिभक्तामत्सेवनंविना ॥ सएवात्यंतिकोयोगोभक्तिमार्गस्यभामिनि ॥ ६६ ॥ मद्भावं प्राप्नुयात्तेनअतिक्रम्यगुणत्रयं ॥ महताकामहीनेनस्वधर्माचरणेनच ॥ ६७॥ कर्मयोगेनशस्तेनवर्जितेनविहिंसनं ॥ मद्दर्शनस्तुतिमहापूजाभिःस्मृतिवंदनैः ॥ ६८ ॥ भूतेषुमद्भावनयासंगेनासत्यवर्जनैः ॥ बहुमानेनमहतां दुःखिनामनुकंपया ॥ ६९ ॥ स्वसमानेषुमैत्र्याचयमादीनांनिषेवया ॥ वेदांतवाक्यश्रवणान्ममनामानुकीर्तनात् ॥ ७० ॥ सत्संगेनार्जवेणैवत्यहमःपरिवर्जनात् ॥ कांक्षयाममधर्मस्यपरिशुद्धांतरोजनः ॥ ७१ ॥

तेनभक्तियोगेनगुणत्रयंतद्रूपांमायामतिक्रम्यमद्भावंमदैक्यंप्राप्नुयात् अथकर्मयोगमाह महतेति कामहीनेनफलोद्देशहीनेनस्वधर्मोनित्यनैमित्तिकरूपः ॥ ६७ ॥ तादृशकर्मयोगेनमद्भावंप्राप्नुयात् कथंभूतेनविहिंसनंहिंसावर्जितेनहिंसारहितेनेतियावत् उक्तभक्तियोगप्राप्त्युपायमाह मद्दर्शनेति स्तुतिः स्मरणं वंदनंप्रणतिः ॥ ६८ ॥ सर्वभूतेषुमद्भावनयाईश्वरभावनया असंगेनदुष्टसंगपरित्यागेन ॥ ६९ ॥ यमादयोयमनियमप्राणायामादयः ॥ ७० ॥ अहमःअहंकृतेःअहंकर्तेत्यादिबुद्धेः ममधर्मस्यमत्पूजादिरूपस्यकांक्षयाइच्छया ॥ ७१ ॥

अंजसाशीघ्रमायातिमदभिन्नोभवति स्वाश्रयात्वायुनास्वाश्रयापकर्षणात् ॥ ७२ ॥ अहमात्माव्यवस्थितः सर्वत्रचेतनोहमेवेत्यर्थः ॥ ७३ ॥ तंसर्वत्रचैतन्यसंपादकंमामज्ञात्वा बहिःक्रियोत्पन्नैरनेकभेदैर्द्रव्यैर्गंधपुष्पधूपादिभिर्हेअंबमेतोषणंसंतोषंनकुरुतेनजनयतीत्यर्थः सर्वभूतस्थितत्वेनमामज्ञात्वाकृतयापूजयामोक्षफलदोममसंतोषोनेत्यर्थः ॥ ७४ ॥ सर्वप्राण्यपमानकर्त्र्यायावत्प्रतिमानपूजितातावदेव विशिष्टानांसापूजायोग्या तदनंतरंनतत्पूजेत्यर्थः अर्चितइत्यस्यव्याख्यापूजितइति ॥ ७५ ॥ तावन्मामर्चयेदित्यर्थंमध्यमणिन्यायेनो

मद्गुणश्रवणादेवयातिमामंजसाजनः ॥ यथावायुवशाद्गंधःस्वाश्रयात्घ्राणमाविशेत् ॥ ७२ ॥ योगाभ्यासरतंचित्तमेवमात्मानमाविशेत् ॥ सर्वेषुप्राणिजातेषुत्व्यहमात्माव्यवस्थितः ॥ ७३ ॥ तमज्ञात्वाविमूढात्माकुरुते केवलंबहिः ॥ क्रियोत्पन्नैर्नैकभेदैर्द्रव्यैर्मेनांबतोषणं ॥ ७४ ॥ भूतावमानिनार्चायामर्चितोहंनपूजितः ॥ ७५ ॥ तावन्मामर्चयेद्देवंप्रतिमादौस्वकर्मभिः ॥ यावत्सर्वेषुभूतेषुस्थितंचात्मनिनस्मरेत् ॥ ७६ ॥ यस्तुभेदंप्रकुरुतेस्वात्मनश्चपरस्यच ॥ भिन्नदृष्टेर्भयंमृत्युस्तस्यकुर्यान्नसंशयः ॥ ७७ ॥ मामतःसर्वभूतेषुपरिच्छिन्नेषुसंस्थितं ॥ एकंज्ञानेनमानेनमैत्र्याचार्चेदभिन्नधीः ॥ ७८ ॥

त्तरान्वय्यपि यावत्सर्वभूतस्थितंमामात्मनिनस्मरेत्सएवाहमितिनजानीयात् तावदेवपूजादावधिकारोनतदुत्तरंपूज्यपूजकभावापगमादितिभावः॥७६॥ इयमेवभावनामुख्येतिध्वनयितुंभेदंनिंदति यस्त्विति भिन्नदृष्टेस्तस्यमृत्युर्भयंकुर्यात्अत्रसंशयोनास्तीत्यर्थः ॥७७॥ तस्माद्भेदंत्यक्त्वैवाहमुपास्यइत्याह मामतइति एकंमांज्ञानेनमानेनएवंज्ञानपूर्वकंसर्वप्राणिसंमाननेनमैत्र्यासर्वत्रमित्रबुद्ध्यामामर्चेदितीयमेवमेमुख्यापूजाक्वापिशत्रुबुद्धिःसर्वथानकार्येतिभावः अभिन्नधीःएकएवचेतनोभगवान्सर्वत्रेत्येवंबुद्धिरित्यर्थः ॥ ७८ ॥

तथासर्वभूतानिचेतसाप्रणमेत्तत्रहेतुर्ज्ञात्वेति ॥ ७९ ॥ ईश्वरजीवयोरितिपरस्परजीवानांचेत्यपिबोध्यं ज्ञानयोगोभक्तियोगसहितोज्ञानयोगइत्यर्थः ॥ ८० ॥ एकतरंकेवलभक्तियोगमपीत्यर्थः शमम्रृच्छतितस्यपरिणामेज्ञानयोगप्रापकत्वादितिभावः ॥ ८१ ॥ भक्तियोगेनउक्तोयमीश्वरःपूज्यइत्येवंरूपेण तत्रासामर्थ्येआह पुत्ररूपेणवेति ॥८२॥ तिस्रोगतीःसात्विकराजसतामसीः तत्रसात्विकीअर्चिरादिगतिः राज

चेतसैवानिशंसर्वभूतानिप्रणमेत्सुधीः ॥ ज्ञात्वामांचेतनंशुद्धंजीवरूपेणसंस्थितं ॥ ७९ ॥ तस्मात्कदाचिन्नेक्षेत भेदमीश्वरजीवयोः ॥ भक्तियोगोज्ञानयोगोमयामातरुदीरितः ॥ ८० ॥ आलंब्यैकतरंवापिपुरुषःशमम्रृच्छति ॥ ततोमांभक्तियोगेनमातःसर्वत्रहृदिस्थितं ॥ ८१ ॥ पुत्ररूपेणवानित्यंस्मृत्वाशांतिमवाप्स्यसि ॥ श्रुत्वारामस्यवचनंकौसल्यानंदसंयुता ॥ ८२ ॥ रामंसदाहृदिध्यात्वाछित्वासंसारबंधनं ॥ अतिक्रम्यगतीस्तिस्रोप्यवापपरमांगतिं ॥ ८३ ॥ कैकेयीचापियोगंरघुपतिगदितंपूर्वमेवाधिगम्यश्रद्धाभक्तिप्रशांताहृदिरघुतिलकंभावयंतीगतासुः ॥ गत्वास्वर्गंस्फुरंतीदशरथसहितामोदमानावतस्थेमाताश्रीलक्ष्मणस्याप्यतिविमलमतिःप्रापभर्तुःसमीपं ॥ ८४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेमातॄणांस्वर्गप्रस्थानंनामसप्तमःसर्गः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ श्रीमहादेवउवाच अथकालेगतेकस्मिन्भरतोभीमविक्रमः ॥ युधाजितामातुलेनत्याहूतोगात्ससैनिकः ॥ १ ॥

सीधूमादिगतिस्तामसीजायस्वम्रियस्वेत्येवंरूपा तत्राद्यादहराद्युपासकानांद्वितीयाकर्मिणांतृतीयांन्येषांपरमांगतिं नास्यप्राणाउत्क्रामंत्यत्रैवसमवलीयंतइतिज्ञानिप्राप्यां ॥ ८३ ॥ पूर्वमेवचित्रकूटगिरौ ॥ ८४ ॥ इतिश्रीमत्सकलराजविपदुद्धरण० उत्तरकांडेसप्तमःसर्गः ॥ ७ ॥ अथेति कस्मिन्कस्मिंश्चिदित्यर्थः मातुलेनाहूतःस्वदेशसमीपवर्तिगंधर्वविषयस्थगंधर्ववधार्थं ॥ १ ॥

तिस्रःकोटीर्गंधर्वनायकान्हत्वेत्यन्वयः पुरेपुष्करावतीतक्षशिलाख्ये ॥ २ ॥ सुतौपुष्करतक्षनामाना ॥ ३ ॥ ४ ॥ कुमारौस्वपुत्रौप श्चिमांदिशंयाहीतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ततःसमागमनानंतरं ॥ ९ ॥ अतिबलस्यमहर्षिमुख्यस्यदूतंरामंद्रष्टुकामंपुरुषो

रामाज्ञयागतास्तत्रहत्वागंधर्वनायकान् ॥ तिस्रःकोटीःपुरेद्वेतुनिवेश्यरघुनंदनः ॥ २ ॥ पुष्करंपुष्करावत्यां तक्षंतक्षशिलाह्वये ॥ अभिषिच्यसुतौतत्रधनधान्यसुल्हृतौ ॥ ३ ॥ पुनरागत्यभरतोरामसेवापरोभवत् ॥ ततः प्रीतोरघुश्रेष्ठोलक्ष्मणंप्राहसादरं ॥ ४ ॥ उभौकुमारौसौमित्रेगृहीत्वापश्चिमांदिशं ॥ तत्रभिल्लान्विनिर्जित्यदुष्टा न्सर्वापकारिणः ॥ ५ ॥ अंगदश्चित्रकेतुश्चमहासत्वपराक्रमौ ॥ द्वयोर्द्वेनगरेकृत्वागजाश्वधनरत्नकैः ॥ ६ ॥ अभि षिच्यसुतौतत्रशीघ्रमागच्छमांपुनः ॥ रामस्याज्ञांपुरस्कृत्यगजाश्वबलवाहनः ॥ ७ ॥ गत्वाहत्वारिपून्सर्वान्स्था पयित्वाकुमारकौ ॥ सौमित्रिःपुनरागत्यरामसेवापरोभवत् ॥ ८ ॥ ततस्तुकालेमहतिप्रयातेरामंसदाधर्मपथे स्थितंहरिं ॥ द्रष्टुंसमागादृषिवेषधारीकालस्ततोलक्ष्मणमित्युवाच ॥ ९ ॥ निवेदयस्वातिबलस्यदूतंमांद्रष्टुका मंपुरुषोत्तमाय ॥ रामायविज्ञापनमस्तितस्यमहर्षिमुख्यस्यचिरायधीमन् ॥ १० ॥ तस्यतद्वचनंश्रुत्वासौमि त्रिस्त्वरयान्वितः ॥ आचचक्षेथरामायससंप्राप्तंतपोधनं ॥ ११ ॥ एवंब्रुवंतंप्रोवाचलक्ष्मणंराघवोवचः ॥ शीघ्रंप्रवेश्यतांतातमुनिःसत्कारपूर्वकं ॥ १२ ॥

त्तमायनिवेदयस्वयस्याहंदूतस्तस्यमहर्षिमुख्यस्यरामायचिरायविज्ञापनमस्तिरामंप्रतिचिरकालंबोधनीयंवाक्यमस्ति ॥ १० ॥ ससौमि त्रिरित्यन्वयः ॥ ११ ॥ १२ ॥

॥ १३ ॥ वर्धस्वेत्यस्यभूराज्याधिकस्वर्गराज्यलाभेनवर्धस्वेतितत्धृदयस्थितोर्थः ॥ १४ ॥ तेनानामयंपृष्टोरामस्तस्मैअनामयंपृष्ट्वाप्रोवाचेत्यन्वयः ॥१५ ॥यदर्थंयत्प्रापणार्थंतत्स्वस्वामिवाक्यं ॥१६ ॥ द्वंद्वमेवरहस्यमेवअनालक्ष्यंतृतीयेनेतिशेषः ॥१७॥तदेवस्पष्टयति नान्येनेति निरीक्षेद्वाकथयंतावावामितिशेषः ॥ १८ ॥ अत्ररहरहस्थानेजनआवाभ्यामतिरिक्तस्तृतीयोजनइत्यर्थः ॥ १९ ॥ कोवापित्वंवाअन्योवायेन

लक्ष्मणस्तुतथेत्युक्त्वाप्रावेशयततापसं ॥ स्वतेजसाज्वलंतंतंघृतसिक्तंयथानलं ॥ १३ ॥ सोभिगम्यरघुश्रेष्ठंदीप्यमानःस्वतेजसा ॥ मुनिर्मधुरवाक्येनवर्धस्वेत्याहराघवं ॥१४॥ तस्मैसमुनयेरामःपूजांकृत्वायथाविधि॥ पृष्ट्वानामयमव्यग्रोरामःपृष्टोथतेनसः ॥ १५ ॥ दिव्यासनेसमासीनोरामःप्रोवाचतापसं ॥ यदर्थमागतोसित्वमिहतत्प्रापयस्वमे ॥ १६ ॥ वाक्येनचोदितस्तेनरामेणाहमुनिर्वचः ॥ द्वंद्वमेवप्रयोक्तव्यमनालक्ष्यंतुतद्वचः ॥ १७॥ नान्येनचैतच्छ्रोतव्यंनाख्यातव्यंचकस्यचित् ॥ शृणुयाद्वानिरीक्षेद्वायःसवध्यस्त्वयाप्रभो ॥ १८ ॥ तथेतिचप्रतिज्ञायरामोलक्ष्मणमब्रवीत् ॥ तिष्ठत्वंद्वारिसौमित्रेनायात्वत्रजनोरहः ॥ १९ ॥ यद्यागच्छतिकोवापिसवध्योमेनसंशयः ॥ ततःप्राहमुनिंरामोयेनवात्वंविसर्जितः ॥ २० ॥ यत्तेमनीषितंवाक्यंतद्वदस्वममाग्रतः ॥ ततःप्राहमुनिर्वाक्यंशृणुरामयथातथं ॥ २१ ॥ ब्रह्मणाप्रेषितोस्मीशकार्यार्थेतेतिकंप्रभो ॥ अहंहिपूर्वजोदेवतवपुत्रःपरंतप ॥ ॥ २२ ॥ मायासंगमजोवीरकालःसर्वहरःस्मृतः ॥ ब्रह्मात्वामाहभगवान्सर्वदेवर्षिपूजितः ॥ २३ ॥

त्वंविसर्जितःप्रेषितस्तस्यवामनीषितंअथवातेतवैवमनीषितंयद्वाक्यंतद्वदस्व ॥ २० ॥ यथातथंसत्यमित्यर्थः ॥ २१ ॥ त्वंकइतिजिज्ञासांसंभाव्यस्वयमेवोत्तरमाहाहंहीति पूर्वजःसर्वसृष्ट्यपेक्षयापूर्वः महत्तत्त्वस्यैवायमंशविशेषइत्याह अतिरिक्तमेवेदंतत्त्वमितिशैवाः ॥ २२ ॥ मायासंगमस्तदीक्षणमात्रं ॥ २३ ॥

अथब्रह्मवाक्यमाह रक्षितुमिति समयःअवतारसमयेकृतःकालः एतावंतंकालंभूलोकेस्थित्वापुनःस्वर्गमागंतेत्येवंरूपः ननुममस्वर्गेणकःसंबंधइत्याशंकांनिवर्तयितुंपूर्वकथामाह पुरेति सदेवसोम्येदमग्रआसीदितिश्रुतेः मायापिकार्याक्षमत्वात्त्वदभेदेनैवतदेतिभावः ॥२४॥ भार्यया माययाभवत्सान्निध्येनतस्याअप्येवंपरिणामशीलत्वादितिभावः भोगवतंशेषं नुमभावआर्षः एतावुभावपिमहत्तत्त्वाधिष्ठातारावित्याहुः ॥ ॥ २५ ॥ ससत्वौसपराक्रमौ तन्मेदोस्थिसंचयंतद्रूपां ॥ २६ ॥ इमांमेदिनींनिर्मितवानितिशेषः तत्रसुप्तस्यनाभ्यांविद्यमानेपद्मेमामुत्पाद्य ॥

रक्षितुंस्वर्गलोकस्यसमयस्तेमहामते ॥ पुरात्वमेकएवासीर्लोकान्संहृत्यमायया ॥ २४॥ भार्ययासहितस्त्वंमामादौपुत्रमजीजनः॥ तथाभोगवतंनागमनंतमुदकेशयं ॥ २५॥ माययाजनयित्वात्वंद्वौससत्वौमहाबलौ ॥ मधुकैटभकौदैत्यौहत्वामेदोस्थिसंचयं॥ २६॥ इमांपर्वतसंबद्धांमेदिनींपुरुषर्षभ ॥ पद्मेदिव्यार्कसंकाशेनाभ्यामुत्पाद्यमामपि॥ २७॥ मांविधायप्रजाध्यक्षंमयिसर्वंन्यवेदयत् ॥ सोहंसंयुक्तसंभारस्त्वामवोचंजगत्पते॥ २८॥ रक्षांविधत्स्वभूतेभ्योयेमेवीर्यापहारिणः॥ ततस्त्वंकश्यपाज्जातोविष्णुर्वामनरूपधृत् ॥ २९ ॥ हतवानसिभूभारंवधाद्रक्षोगणस्यच ॥ सर्वासूत्सार्यमाणासुप्रजासुधरणीधर ॥ ३० ॥ रावणस्यवधाकांक्षीमर्त्यलोकमुपागतः॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ ३१ ॥ कृत्वावासस्यसमयंत्रिदशेष्वात्मनःपुरा॥ सतेमनोरथःपूर्णःपूर्णेचायुषितेनृषु॥ ३२॥ कालस्तापसरूपेणत्वत्समीपमुपागमं॥ ततोभूयश्चतेबुद्धिर्यदिराज्यमुपासितुं॥ ३३॥

॥ २७ ॥ तंचमांप्रजाध्यक्षंविधायभवान्मयिसर्वंप्रजोत्पादनपालनादिभारंन्यवेदयत्स्थापितवान् संयुक्तसंभारःअंगीकृतप्रजोत्पादनादिव्यवहारः ॥ २८ ॥ मेवीर्यापहारिणः मेवीर्यस्यमत्प्रजानांदुःखदाइत्यर्थः ततःमांप्रतितथाप्रतिज्ञानोत्तरमित्यर्थः ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ समयंवासकालप्रतिज्ञां मनोरथःप्रतिज्ञाविषयःकालः नृषुनृलोकेआयुषिपूर्णेसति ॥ ३२ ॥ अहंकालस्तापसरूपेणत्वत्समीपमुपागमंप्राप्तवानस्मि ॥ ३३ ॥

तत्तथाभवराज्यमुपास्वेत्यर्थः ॥ ३४ ॥ ३५ ॥ कृत्स्नस्यजगतोंतकंनाशकं कालमित्यर्थः ॥ ३६ ॥ कार्यार्थंसंभवः तेननिष्पन्नकार्यस्याव स्थानेनप्र॰ोजनमित्यर्थः ॥ ३७ ॥ मनोरथःअयमेवमेमनोरथोयदितोगमनमितिभावः ॥ ३८ ॥ स्थातव्यंतद्रक्षणायोद्युक्तेनभाव्यं माय

तत्तथाभवभद्रंतेएवमाहपितामहः ॥ यदितेगमनेबुद्धिर्देवलोकंजितेंद्रिय ॥ ३४ ॥ सनाथाविष्णुनादेवाभवंतुविगतज्वराः ॥ चतुर्मुखस्यतद्वाक्यंश्रुत्वाकालेनभाषितं ॥ ३५ ॥ हसन्रामस्तदावाक्यंकृत्स्नस्यांतकमब्रवीत् ॥ श्रुतं तववचोमेद्यममापीष्टतरंतुतत् ॥ ३६ ॥ संतोषःपरमोज्ञेयस्त्वदागमनकारणात् ॥ त्रयाणामपिलोकानांकार्यार्थं ममसंभवः ॥ ३७ ॥ भद्रंतेस्त्वागमिष्यामियतएवाहमागतः ॥ मनोरथस्तुसंप्राप्तोनमेत्रास्तिविचारणा ॥ ३८ ॥ मत्सेवकानांदेवानांसर्वकार्येषुवैमया ॥ स्थातव्यंमाययापुत्रयथाचाहप्रजापतिः ॥ ३९ ॥ एवंतयोःकथयतोर्दुर्वासामुनिरभ्यगात् ॥ राजद्वारंराघवस्यदर्शनापेक्षयादृतं ॥ ४० ॥ मुनिर्लक्ष्मणमासाद्यदुर्वासावाक्यमब्रवीत् ॥ शीघ्रंदर्शयराममंमेकार्यंमेत्यंतमाहितं ॥ ४१ ॥ तच्छ्रुत्वाप्राहसौमित्रिर्मुनिंज्वलनतेजसं ॥ रामेणकार्यंकिंतेद्यकिंतेभीष्टंकरोम्यहं ॥ ४२ ॥ राजाकार्यांतरेव्यग्रोमुहूर्तंसंप्रतीक्ष्यतां ॥ तच्छ्रुत्वाक्रोधसंतप्तोमुनिःसौमित्रिमब्रवीत् ॥ ॥ ४३ ॥ अस्मिन्क्षणेतुसौमित्रेनदर्शयसिचेद्विभुं ॥ रामंसविषयंवंशंभस्मीकुर्यांनसंशयः ॥ ४४ ॥ श्रुत्वातद्वचनंघोरम्रषेर्दुर्वाससोभृशं ॥ स्वरूपंतस्यवाक्यस्यचिंतयित्वासलक्ष्मणः ॥ ४५ ॥

येत्यनेनसर्वमिदंमायैवेतिध्वनयति ॥ ३९ ॥ आदृतंयथाभवतितथादर्शनेच्छयाराजद्वारमभ्यगात् ॥ ४० ॥ ४१ ॥ रामेणकार्यंकिंतेइति तत्सर्वकार्यमहंसंपादयामीतिभावः तदेवाह किंतेइत्यादि ॥ ४२ ॥ ४३ ॥ वंशंदशरथस्येतिशेषः तेनसर्वेषांभवदादीनांनाशंकरिष्यामीत्यर्थः ॥ ४४ ॥ भृशमतिशयेनघोरमित्यन्वयः स्वरूपंवाच्यंव्यंग्यंचार्थं ॥ ४५ ॥

कारणाद्दुर्वासोरूपात् ॥ ४६ ॥ ४७ ॥ ४८॥ वर्षसहस्राणांसंबंधीयउपवासस्तस्यसमापनं समासआर्षः ॥४९॥ यत्सिद्धंगृहेस्तितद्भोजनमि
च्छामि ॥ ५० ॥ अमृतममृतवत्स्वादु ॥ ५१ ॥ कालेनभाषितमित्यन्वयः स्मृत्वाचशोकादियुक्तःसन् ॥ ५२ ॥ मनसाहृतप्रायंज्ञात्वाप्रति

सर्वनाशाद्वरंमेद्यनाशोह्येकस्यकारणात् ॥ निश्चित्यैवंततोगत्वारामायप्राहलक्ष्मणः ॥४६॥ सौमित्रेर्वचनंश्रु
त्वारामःकालंव्यसर्जयत् ॥शीघ्रंनिर्गम्यरामोपिददर्शात्रेःसुतंमुनिं ॥ ४७ ॥ रामोभिवाद्यसंप्रीतोमुनिंपप्रच्छ
सादरं॥ किंकार्यंतेकरोमीतिमुनिमाहरघूत्तमः ॥४८॥ तच्छ्रुत्वारामवचनंदुर्वासाराममब्रवीत् ॥ अद्यवर्षसह
स्राणामुपवाससमापनं ॥४९॥ अतोभोजनमिच्छामिसिद्धंयत्तेरघूत्तम ॥ रामोमुनिवचःश्रुत्वासंतोषेणसम
न्वितः॥ ५० ॥ ससिद्धमन्नंमुनयेयथावत्समुपाहरत्॥ मुनिर्भुक्त्वान्नममृतंसंतुष्टःपुनरभ्यगात् ॥ ५१ ॥ स्वमाश्र
मंगतेतस्मिन्रामःसस्माऱभाषितं॥कालेनशोकदुःखार्तोविमनाश्चातिविह्वलः॥५२॥ अवाङ्मुखोदीनमनान
शशाकाभिभाषितुं॥ मनसालक्ष्मणंज्ञात्वाहतप्रायंरघूद्वहः ॥५३॥ अवाङ्मुखोबभूवाथतूष्णीमेवाखिलेश्वरः॥
ततोरामंविलोक्याहसौमित्रिर्दुःखसंप्लुतं ॥ ५४॥ तूष्णीभूतंचिंतयंतंगर्हितंस्नेहबंधनं॥ मत्कृतेत्यजसंतापंजहिमां
रघुनंदन॥५५॥ गतिःकालस्यकलितापूर्वमेवेदृशीप्रभो ॥ त्वयिहीनप्रतिज्ञेतुनरकोमेध्रुवंभवेत् ॥ ५६॥ मयि
प्रीतिर्यदिभवेद्यद्यनुग्राह्यतातव ॥त्यक्त्वाशंकांजहिप्राज्ञमामाधर्मंत्यजप्रभो॥५७॥

ज्ञायाअन्यथाकर्तुमशक्यत्वादितिभावः ॥ ५३ ॥ ५४ ॥ स्नेहकृतंबंधनंगर्हितंनिंदितं स्नेहाद्वधेऽशक्ततातदकरणेचप्रतिज्ञाहानिरितिचिंतयंतं ॥
॥ ५५ ॥ पूर्वमेवेदृशीति इदमवश्यंभावीतिभावः मत्कृतेत्वत्प्रतिज्ञाहानौममापिनरकइत्यर्थः ॥ ५६ ॥ धर्ममात्यजेत्यन्वयः अनेनप्रतिज्ञापा
लनमेवक्षत्रियस्यमुख्योधर्मस्तद्विधेयानांचतत्प्रतिज्ञानिर्वाहणंपरमोधर्मइतिचसूचितं ॥ ५७ ॥

चलितमानसस्त्यक्तभ्रातृस्नेहः ॥ ५८ ॥ मुनेर्दुर्वाससः ॥ ५९ ॥ ६० ॥ भूभारहारिणस्तावन्मात्रफलकतयाधृतशरीरस्यतवपूर्वंत्व त्तःपूर्वमित्यर्थः लक्ष्मणगमनंनिर्दिष्टं भावीसत्वर्थोस्माभिर्ज्ञातएवास्ते ॥ ६१ ॥ प्रतिज्ञातेर्थेपरित्यक्तेअन्यथाकृते ॥ ६२ ॥ धर्मेनष्टेरा ज्ञइतिशेषः तवत्रैलोक्यपालकत्वेनत्वद्धर्मनाशेसंपूर्णत्रैलोक्यनाशइतिभावः ॥ ६३ ॥ ६४ ॥ समाश्रुत्य वसिष्ठादिवाक्यंश्रुत्वेत्यर्थः ॥

सौमित्रिणोक्तंतच्छ्रुत्वारामश्चलितमानसः ॥ आहूयमंत्रिणःसर्वान्वसिष्ठंचेदमब्रवीत् ॥ ५८ ॥ मुनेरागमनंय त्तुकालस्यापिहिभाषितं ॥ प्रतिज्ञामात्मनश्चैवसर्वमावेदयत्प्रभुः ॥ ५९ ॥ श्रुत्वारामस्यवचनंमंत्रिणःसपुरोहि ताः ॥ ऊचुःप्रांजलयःसर्वेराममक्लिष्टकारिणं ॥ ६० ॥ पूर्वमेवहिनिर्दिष्टंतवभूभारहारिणः ॥ लक्ष्मणेनवियोग स्तेज्ञातोविज्ञानचक्षुषा ॥ ६१ ॥ त्यजाशुलक्ष्मणंराममाप्रतिज्ञांत्यजप्रभो ॥ प्रतिज्ञातेपरित्यक्तेधर्मोभवतिनि ष्फलः ॥ ६२ ॥ धर्मेनष्टेखिलेरामत्रैलोक्यंनश्यतिध्रुवं ॥ त्वंतुसर्वस्यलोकस्यपालकोसिरघूत्तम ॥ ६३ ॥ त्यक्त्वा लक्ष्मणमेवैकंत्रैलोक्यंत्रातुमर्हसि ॥ रामोधर्मार्थसहितंवाक्यंतेषामनिंदितं ॥ ६४ ॥ सभामध्येसमाश्रुत्यप्राहसौ मित्रिमंजसा ॥ यथेष्टंगच्छसौमित्रेमाभूद्धर्मस्यसंशयः ॥ ६५ ॥ परित्यागोवधोवापिसतामेवोभयंसमं ॥ एव मुक्तेरघुश्रेष्ठेदुःखव्याकुलितेक्षणः ॥ ६६ ॥ रामंप्रणम्यसौमित्रिःशीघ्रंगृहमगात्स्वकं ॥ ततोगात्सरयूतीरमाचम्य सकृतांजलिः ॥ ६७ ॥ नवद्वाराणिसंयम्यमूर्ध्निप्राणमधारयत् ॥ यदक्षरंपरंब्रह्मवासुदेवाख्यमव्ययं ॥ ६८ ॥ पदं तत्परमंधामचेतसासोभ्यचिंतयत् ॥ वायुरोधेनसंयुक्तंसर्वेदेवाःसहर्षयः ॥ ६९ ॥

॥ ६५ ॥ सतामुभयंसममेवेत्यन्वयः उक्तेउक्तवतीत्यर्थः ॥ ६६ ॥ ६७ ॥ नवद्वाराणिचक्षुषीकर्णौनासिकामुखंपायूपस्थेब्रह्मरंध्रंचे ति ॥ ६८ ॥ अभ्यचिंतयत्वासुदेवोहमित्यध्यायत ॥ ६९ ॥

तुष्टुवुःपुष्पैःसमाकिरंश्च विबुधैःकैश्चिददृश्यं कैरपिदेवैर्नदृश्यमित्यर्थः ॥७०॥७१॥ हरौहर्यंशे सिद्धलोकगतयोगिनःतल्लोकस्थयोगिनइत्यर्थः आहितंप्राप्तंमहाहिरूपंयेनतत् दुग्धंयथादधिभावमापद्यते तथायमेवदेहस्तत्राहिरूपतांप्राप्तइत्यर्थः ॥ ७२ ॥ इतिश्रीमत्सकलराजवि० उत्तरकांडेअष्टमःसर्गः ॥८॥ ॥९॥ नैगमावणिजः ॥ १ ॥ अद्यचाहमित्यर्थः पदानुगःपदान्यनुलक्षीकृत्यगंता अन्यथातेनबहुव्य

साग्नयोलक्ष्मणंपुष्पैस्तुष्टुवुश्चसमाकिरन् ॥ अदृश्यंविबुधैःकैश्चित्सशरीरंसवासवः॥७०॥ गृहीत्वालक्ष्मणंशक्रःस्वर्गलोकमथागमत् ॥ ततोविष्णोश्चतुर्भागंतंदेवंसुरसत्तमाः ॥ सर्वेदेवर्षयोदृष्ट्वालक्ष्मणंसमपूजयन् ॥ ७१ ॥ लक्ष्मणेहिदिवमागतेहरौसिद्धलोकगतयोगिनस्तदा ॥ ब्रह्मणासहसमागमन्मुदाद्रष्टुमाहितमहाहिरूपकं ॥७२ ॥ इतिश्रीमदध्यात्मरा० उमामहेश्वरसंवादेउत्तरकांडेअष्टमःसर्गः॥८॥ ॥९॥ श्रीमहादेवउवाच लक्ष्मणंतुपरित्यज्यरामोदुःखसमन्वितः॥ मंत्रिणोनैगमांश्चैववसिष्ठंचेदमब्रवीत् ॥ १ ॥ अभिषेक्ष्यामिभरतमधिराज्येमहामतिं ॥ अद्यचाहंगमिष्यामिलक्ष्मणस्यपदानुगः ॥ २ ॥ एवमुक्तेरघुश्रेष्ठेपौरजानपदास्तदा ॥ द्रुमाइवच्छिन्नमूलादुःखार्ताःपतिताभुवि ॥ ३ ॥ मूर्च्छितोभरतोवापिश्रुत्वारामाभिभाषितं ॥ गर्हयामासराज्यंसप्राहेदंरामसन्निधौ ॥ ४ ॥ सत्येनचशपेनाहंत्वांविनादिविवाभुवि ॥ कांक्षेराज्यंरघुश्रेष्ठशपेत्वत्पादयोःप्रभो ॥ ५ ॥ इमौकुशलवौराजन्नभिषिंचस्वराघव ॥ कोशलेषुकुशंवीरमुत्तरेषुलवंतथा ॥६॥

वधानंस्यादित्यर्थः ॥२ ॥ उक्तेउक्तवतिसति ॥ ३ ॥ भरतोवापिभरतश्चापीत्यर्थः राज्यंगर्हयामासतन्निंदापूर्वकमिदंप्राहचेत्यर्थः ॥ ४ ॥ सत्येनशपेसत्यंमेनश्यतुयदिराज्याकांक्षेत्येकःशपथः त्वत्पादयोश्चशपेत्वत्पादयोःस्पर्शेनेचशपथइत्यपरःशपथः ॥ ५ ॥ तर्हिसर्वगमनेकोराज्यंपालयिष्यतीत्याशंक्याहेमाविति ॥ ६ ॥

॥७॥तंतथाकठोरंवदंतं पतिताभुवीतिशेषः॥८॥ ताततिसंबोधनं॥९॥ भावानुगंअभिप्रायानुगं पूज्येतिल्यबार्षः॥१०॥११॥ अयंत्वदनुगमनरू

गच्छंतुदूतास्त्वरितंशत्रुघ्नानयनायहि॥ अस्माकमेतद्गमनंस्वर्वासायशृणोतुसः ॥ ७ ॥ भरतेनोदितंश्रुत्वापति तास्ताःसमीक्ष्यतं॥ प्रजाश्चभयसंविग्नारामविश्लेषकातराः॥८॥ वसिष्ठोभगवान्राममुवाचसदयंवचः॥ पश्य तातादरात्सर्वाःपतिताभूतलेप्रजाः ॥ ९ ॥ तासांभावानुगंरामप्रसादंकर्तुमर्हसि ॥ श्रुत्वावसिष्ठवचनंताःसमु त्थाप्यपूज्यच ॥ १० ॥ सस्नेहोरघुनाथस्ताःकिंकरोमीतिचाब्रवीत् ॥ ततःप्रांजलयःप्रोचुःप्रजाभक्त्यारघूद्वहं॥ ॥ ११ ॥ गंतुमिच्छसियत्रत्वमनुगच्छामहेवयं ॥ अस्माकमेषापरमाप्रीतिर्धर्मोयमक्षयः॥ १२ ॥ तवानुगमने रामत्वद्गतानोदृढामतिः॥ पुत्रदारादिभिःसार्धमनुयामोद्यसर्वथा ॥ १३ ॥ तपोवनंवास्वर्गंवापुरंवारघुनंदन॥ ज्ञात्वातेषांमनोदार्ढ्यंकालस्यवचनंयथा ॥ १४ ॥ भक्तंपौरजनंचैवबाढमित्याहराघवः॥ कृत्वैवनिश्चयंराम स्तस्मिन्नेवाहनिप्रभुः ॥ १५ ॥ प्रस्थापयामासचतौरामभद्रःकुशीलवौ॥ अष्टौरथसहस्राणिसहस्रंचैवदंतिनां॥ ॥ १६ ॥ षष्टिंचाश्वसहस्राणामेकैकस्मैददौबलं ॥ बहुरत्नौबहुधनौहृष्टपुष्टजनावृतौ ॥ १७ ॥ अभिवाद्यगतौरा मंकृच्छ्रेणतुकुशीलवौ ॥ शत्रुघ्नानयनेदूतान्प्रेषयामासराघवः॥ तेदूतास्त्वरितंगत्वाशत्रुघ्नायन्यवेदयन्॥१८॥ कालस्यागमनंपश्चादत्रिपुत्रस्यचेष्टितं॥ लक्ष्मणस्यचनिर्याणंप्रतिज्ञांराघवस्यच॥ १९॥ पुत्राभिषेचनंचैवसर्वं रामचिकीर्षितं॥ श्रुत्वातद्दूतवचनंशत्रुघ्नःकुलनाशनं ॥ २० ॥

पः ॥ १२ ॥ १३ ॥ तपोवनाद्यन्यतमंयद्गंतासितदनुयामइत्यर्थः ॥१४॥१५॥१६॥१७॥ कृच्छ्रेणभगवद्वियोगजदुःखासहिष्णुतयाक्लेशे न ॥१८॥ अत्रिपुत्रस्यदुर्वाससः प्रतिज्ञांप्रजासुसहनयनविषयां ॥ १९॥ चिकीर्षितंस्वगमनरूपं कुलस्यभ्रातृसमूहस्यनाशनं ॥ २० ॥

॥ २१ ॥ २२ ॥ अक्षयैर्ऋषिभिः अतिचिरजीविभिर्वसिष्ठाद्यैः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

व्यथितोपिधृतिंलब्ध्वापुत्रावाहूयसत्वरः ॥ अभिषिच्यसुबाहुंवैमथुरायांमहाबलः ॥ २१ ॥ यूपकेतुंचविदिशान
गरेशत्रुसूदनः ॥ अयोध्यांत्वरितंप्रागात्स्वयंरामदिदृक्षया ॥ २२ ॥ ददर्शचमहात्मानंतेजसाज्वलनप्रभं ॥ दुकू
लयुगसंवीतंऋषिभिश्चाक्षयैर्वृतं ॥ २३ ॥ अभिवाद्यरमानाथंशत्रुघ्नोरघुपुंगवं ॥ प्रांजलिर्धर्मसहितंवाक्यंप्राह
महामतिः ॥ २४ ॥ अभिषिच्यसुतौतत्रराज्येराजीवलोचन ॥ तवानुगमनेराजन्विद्धिमांकृतनिश्चयं ॥ २५ ॥
त्यक्तुंनार्हसिमांवीरभक्तंतवविशेषतः ॥ शत्रुघ्नस्यदृढांबुद्धिंविज्ञायरघुनंदनः ॥ २६ ॥ सज्जीभवतुमध्याह्नेभवा
नित्यब्रवीद्वचः ॥ अथक्षणात्समुत्पेतुर्वानराःकामरूपिणः ॥ २७ ॥ ऋक्षाश्चराक्षसाश्चैवगोपुच्छाश्चसहस्रशः ॥ ऋ
षीणांदेवतानांचपुत्राराामस्यनिर्गमं ॥ २८ ॥ श्रुत्वाप्रोचूरघुश्रेष्ठंसर्वेवानरराक्षसाः ॥ तवानुगमनेविद्धिनिश्चि
तार्थान्हिनःप्रभो ॥ २९ ॥ एतस्मिन्नंतरेरामंसुग्रीवोपिमहाबलः ॥ यथावदभिवाद्याहराघवंभक्तवत्सलं ॥ ३० ॥
अभिषिच्यांगदंराज्येआगतोस्मिमहाबलं ॥ तवानुगमनेरामविद्धिमांकृतनिश्चयं ॥ ३१ ॥ श्रुत्वातेषांदृढंवाक्यं
ऋक्षवानररक्षसां ॥ विभीषणमुवाचेदंवचनंमृदुसादरं ॥ ३२ ॥ धरिष्यतिधरायावत्प्रजास्तावत्प्रशाधिमे ॥ वच
नाद्राक्षसंराज्यंशापितोसिममोपरि ॥ ३३ ॥ नकिंचिदुत्तरंवाच्यंत्वयामत्कृतकारणात् ॥ एवंविभीषणंतूक्त्वाहनू
मंतमथाब्रवीत् ॥ ३४ ॥ मारुतेत्वंचिरंजीवममाज्ञांमामृषाकृथाः ॥ जांबवंतमथप्राहतिष्ठत्वंद्वापरांतरे ॥ ३५ ॥

मेवचनात्प्रशाधिराक्षसंरक्षःसंबंधिराज्यंचप्रशाधि अतोन्यन्मावदेत्याह शापितोसीति अन्यवचनोक्तौमद्वधपातकंतवेतिभावः ॥ ३३ ॥ ३४ ॥
ममाज्ञांचिरंजीवेत्येवंरूपां द्वापारांतरेएतच्चतुर्युगीभिन्नयत्किंचिच्चतुर्युग्यंतर्गतद्वापरे ॥ ३५ ॥

युद्धंभवेत्भविष्यति ततःस्वर्गंगमिष्यसीतिशेषः अत्रजांबवद्ग्रहणंमैंदद्विविदयोरप्युपलक्षणं तान्हनुमज्जांबवदादिभिन्नान् ॥ ३६ ॥ ३७ ॥ प्रास्थानिकंमहाप्रस्थानोचितं क्षौमांबरइत्यादिरामविशेषणं ॥ ३८ ॥ पद्मालक्ष्मीः पूर्वंगतासीत्तातत्कालेलक्ष्मीरूपेणसन्निहिताजातेत्यर्थः ॥ ॥ ३९ ॥ अरुणकंजहस्तारक्तपद्महस्ताभूस्तदधिष्ठात्रीदेवता एवमग्रेपिबोध्यं ॥४० ॥ दिव्यामुनयःसनकादयः श्रुतीनांमातागायत्री ॥४१॥

मयासार्धंभवेद्युद्धंयत्किंचित्कारणांतरे ॥ततस्तान्राघवःप्राहऋक्षराक्षसवानरान्॥ सर्वानेवमयासार्धंप्रयातेतिदयान्वितः ॥३६॥ ततःप्रभातेरघुवंशनाथोविशालवक्षाःसितकंजनेत्रः॥ पुरोधसंप्राहवसिष्ठमार्यंयात्वग्निहोत्राणिपुरोगुरोमे ॥ ३७ ॥ ततोवसिष्ठोपिचकारसर्वंप्रास्थानिकंकर्ममहद्विधानात् ॥ क्षौमांबरोदर्भपवित्रपाणिर्महाप्रयाणायगृहीतबुद्धिः ॥ ३८ ॥ निष्क्रम्यरामोनगरात्सिताभ्राच्छशीवयातःशशिकोटिकांतिः॥ रामस्यसव्येसितपद्महस्तापद्मागतापद्मविशालनेत्रा॥३९॥ पार्श्वेथदक्षेरुणकंजहस्ताश्यामाययौभूरपिदीप्यमाना॥ शास्त्राणिशस्त्राणिधनुश्चबाणाजग्मुःपुरस्तात्धृतविग्रहास्ते ॥ ४० ॥ वेदाश्चसर्वेधृतविग्रहाश्चययुश्चसर्वेमुनयश्चदिव्याः॥ माताश्रुतीनांप्रणवेनसाध्वीययौहरिंव्याहृतिभिःसमेता ॥४१॥ गच्छंतमेवानुगताजनास्तेसपुत्रदाराःसहबंधुवर्गैः॥ अनावृतद्वारमिवापवर्गंरामंव्रजंतंययुरात्मकामाः॥४२॥ सांतःपुरःसानुचरःसभार्यःशत्रुघ्नयुक्तोभरतोनुयायात् ॥ गच्छंतमालोक्यरमासमेतंश्रीराघवंपौरजनाःसमस्ताः ॥ ४३ ॥ सबालवृद्धाश्चययुर्द्विजाग्र्याःसामात्यवर्गाश्चसमंत्रिणोययुः॥ सर्वेगताःक्षत्रमुखाःप्रहृष्टावैश्याश्चशूद्राश्चतथापरेच॥४४॥

अनावृतद्वारमिवापवर्गतुल्यंव्रजंतंराममनुययुः ॥ ४२ ॥ अनुयायात् अन्वगच्छदित्यर्थः क्वचित्तथैवपाठः ॥ ४३ ॥ सामात्यवर्गाःसमंत्रिणो द्विजाग्र्याययुः क्षत्रमुखाः क्षत्रंक्षत्रियामुखंमुख्याअग्रेसरायेषांतादृशावैश्यादयः ॥ ४४ ॥

॥ ४५ ॥ दुःखबाह्यसुखयोगाभावेहेतुः आनंदरूपानुगताआनंदरूपंराममनुगताः तदनुगमनात्तदानंदप्रतिभासात्तदयोगःसर्वत्रवैराग्यंचे
तिभावः ॥ ४६ ॥ जग्मुरनुजग्मुः योराममनारामंनयातोनानुयातस्तादृशोजंतुर्नासीदित्यर्थः ॥ ४७ ॥ राजनिगतेखिलंपुरंशून्यंबभूव हरिने
त्रजातांसरयूं ॥ ४८ ॥ स्मृतंपावनंविराड्रूपमात्मनोयेनसः अशेषमिदंजगत्हृदिस्थंददर्श आत्मानंविराड्रूपंस्मृतवानित्यर्थः ॥ ४९ ॥ अपा

सुग्रीवमुख्याहरिपुंगवाश्वस्नाताविशुद्धाःशुभशब्दयुक्ताः ॥ नकश्चिदासीद्भवदुःखयुक्तोदीनोथवाबाह्यसुखेषु
सक्तः॥४५॥ आनंदरूपानुगताविरक्ताययुश्चरामंपशुभृत्यवर्गैः ॥ भूतान्यदृश्यानिचयानितत्रयेप्राणिनःस्थावर
जंगमाश्च ॥४६॥ साक्षात्परात्मानमनंतशक्तिंजग्मुर्विरक्ताःपरमेकमीशं ॥नासीदयोध्यानगरेतुजंतुःकश्चित्तदा
राममनानयातः ॥ ४७ ॥ शून्यंबभूवाखिलमेवतत्रपुरंगतेराजनिरामचंद्रे ॥ ततोतिदूरंनगरात्सगत्वाददृशानदीं
तांहरिनेत्रजातां ॥ ४८ ॥ ननंदरामःस्मृतपावनोतोददर्शचाशेषमिदंहृदिस्थं ॥ अथागतस्तत्रपितामहोमहानदे
वाश्चसर्वेऋषयश्चसिद्धाः ॥ ४९ ॥ विमानकोटीभिरपारपारंसमावृतंखंसुरसेविताभिः ॥रविप्रकाशाभिरभि
स्फुरत्स्वंज्योतिर्मयंतत्रनभोबभूव ॥५० ॥ स्वयंप्रकाशैर्महतांमहद्भिःसमावृतंपुण्यकृतांवरिष्ठैः ॥ ववुश्चवाता
श्चसुगंधवंतोववर्षवृष्टिःकुसुमावलीनां ॥ ५१ ॥ उपस्थितेदेववधूदंगनादेगायत्सुविद्याधरकिन्नरेषु ॥ रामस्तुप
द्ध्यांसरयूजलंसकृत्स्पृष्ट्वापरिक्रामदनंतशक्तिः ॥ ५२ ॥ ब्रह्मातदाप्राहकृतांजलिस्तंरामंपरात्मन्परमेश्वरस्त्वं ॥
विष्णुःसदानंदमयोसिपूर्णोजानासितत्त्वंनिजमैशमेकं॥ ५३ ॥

रपारंअवधिरूपपारद्वयहीनंतादृशमपिविमानावृतमासीत् ज्योतिर्मयंनक्षत्रगणप्रचुरमिव ॥ ५० ॥ येत्रलोकेपुण्यंकृत्वास्वर्गेसर्वेभ्यआधिक्यं
प्राप्तास्तैश्चनभःसमावृतं चौपादपूरणे ॥ ५१ ॥ परिक्रामत्पर्यक्रामत्जलोपर्यगच्छदित्यर्थः तत्रैवहेतुगर्भविशेषणमनंतशक्तिरिति ॥ ५२ ॥
हेपरमात्मन्परमेश्वरःजगत्सृष्टिस्थितिलयकर्तात्वमेवेत्यर्थः त्वमैशंएकंनिजंतत्त्वंब्रह्मरूपंजानासि ॥ ५३ ॥

नन्वेवंब्रह्मज्ञस्यब्रह्मरूपस्यकथंशरीरपरिग्रहोतआह तथापीति भक्तानुग्रहार्थंमाययासर्वमिदंकृतमितिभावः अतोवैष्णवंदेहंप्रविश्यदेवान्पाहिरक्ष ॥ ५४ ॥ यदीतियद्इत्यर्थः अथवायोपरोदेहस्तवरोचतेतंवाप्रविश्यपाहि ॥ एवंविष्णुरूपंत्वांमांविनाअन्येपुरुषानजानंति ॥ ५५ ॥ एवंविष्णुरूपंज्ञात्वाभक्त्याप्रणमति सहस्रेति ॥ ५६ ॥ चक्षूंषिमुष्णन्स्वप्रभयेतिशेषः रामदेहएवतथाभूतोजातः अनेनविष्णुदेहएवमाययाद्विभु



तथापिदासस्यममाखिलेशकृतंवचोभक्तपरोसिविद्वन् ॥ त्वंभ्रातृभिर्वैष्णवमेकमाद्यंप्रविश्यदेहंपरिपाहिदेवान् ॥ ५४ ॥ यद्वापरोवायदिरोचतेतंप्रविश्यदेहंपरिपाहिनस्त्वं ॥ त्वमेवदेवाधिपतिश्चविष्णुर्जानंतिनत्वांपुरुषाविनामां ॥ ५५ ॥ सहस्रकृत्वस्तुनमोनमस्तेप्रसीददेवेशपुनर्नमस्ते ॥ पितामहप्रार्थनयासरामःपश्यत्सुदेवेषुमहाप्रकाशः ॥ ५६ ॥ मुष्णंश्चचक्षूंषिदिवौकसांतदाबभूवचक्रादियुतश्चतुर्भुजः ॥ शेषोबभूवेश्वरतल्पभूतःसौमित्रिरत्यद्भुतभोगधारी ॥ ५७ ॥ बभूवतुश्चक्रदरौचदिव्यौकैकेयिसूनुर्लवणांतकश्च ॥ सीताचलक्ष्मीरभवत्पुरैवरामोहिविष्णुःपुरुषःपुराणः ॥ ५८ ॥ सहानुजःपूर्वशरीरकेणबभूवतेजोमयदिव्यमूर्तिः ॥ विष्णुंसमासाद्यसुरेंद्रमुख्यादेवाश्चसिद्धामुनयश्चयक्षाः ॥ ५९ ॥ पितामहाद्याःपरितःपरेशंस्तवैर्गृणंतःपरिपूजयंतः ॥ आनंदसंप्लावितपूर्णचित्ताबभूविरेप्राप्तमनोरथास्ते ॥ ६० ॥

जत्ववैशिष्ट्येनलोकदृग्गोचरआसीदितिसूचितं भोगःसर्पशरीरंपूर्वगतोपिसतस्मिन्नवसरेतेनदेहेनसन्निहितः ॥ ५७ ॥ दरःशंखःलवणांतकःशत्रुघ्नःसीताचपुरैवलक्ष्मीरूपाभवत्सापितत्कालेलक्ष्मीरूपेणसन्निहिताआसीदितिशेषः हियतोरामोविष्णुरित्यर्थः ॥ ५८ ॥ पूर्वशरीरकेणविष्णुदेहेन ॥ ५९ ॥ ६० ॥

नन्वेवंभगवतोविष्णुरूपप्राप्त्यावैकुंठवासइत्यायातं एवंचसभापर्वणिभारतेसर्वदिक्पालसभावर्णनेयमसभाप्रस्तावेदाशरथीरामोयमसभायां दृष्टइतिनारदेनोक्तंतद्विरुध्यतेइतिचेत् अत्रवदामः अवतारपरिग्रहस्य हिंप्रयोजनद्वयंदुष्टवधेनशिष्टपालनंस्वाचरणेनलोकानांधर्ममर्यादाबोधनंच एतदर्थमेवतेषांतत्तत्कर्मानुष्ठानेप्रवृत्तिरन्यथाअकामस्यभगवतःकिंयज्ञाद्यनुष्ठानेन एवंचधर्मबोधनार्थंतदनुष्ठानवत्आजन्मेदृशधर्मानुष्ठानस्यामुकलोकवासःफलमितिबोधयितुंदाशरथिरामत्वंप्रत्यभिज्ञापकेनमायिकेनकेनचिच्छरीरेणतल्लोकेवासेनाक्षतेः रामायणेएतदर्थाकथनंतुइतिहासेषुउक्तत्वात्सर्वज्ञानांवाल्मीक्यादीनांभूतभाविसर्वार्थज्ञानवत्त्वादित्यन्यत्रविस्तरः तदेति तदातस्मिन्समयेविष्णुर्द्रुहिणंब्रह्माण

तदाहविष्णुर्द्रुहिणंमहात्माएतेहिभक्तामयिचानुरक्ताः ॥ यांतंदिवंमामनुयांतिसर्वेतिर्यक्शरीराअपिपुण्ययुक्ताः॥६१॥ वैकुंठसाम्यंपरमंप्रयांतुसमाविशस्वाशुममाज्ञयात्वं॥श्रुत्वाहरेर्वाक्यमथाब्रवीत्कःसांतानिकान्यांतुविचित्रभोगान् ॥ ६२ ॥ लोकान्मदीयोपरिदीप्यमानांस्तद्भावयुक्ताःकृतपुण्यपुंजाः ॥ येचापितेरामपवित्रनामगृणंतिमर्त्यालयकालएव॥ ६३॥ अज्ञानतोवापिभजंतुलोकांस्तानेवयोगैरपिचाधिगम्यान्॥ ततोतिहृष्टाहरिराक्षसाद्याःस्पृष्ट्वाजलंत्यक्तकलेवरास्ते ॥ ६४ ॥

माह मदनुगमनादेवपुण्ययुक्तत्वानुमानं॥६१॥ वैकुंठसाम्यंवैकुंठसमानलोकं स्वार्थैष्यञ्चातुर्वर्ण्यादित्वाद्दार्षत्वाद्वा एतान्ममाज्ञयासमाविशस्वतादृशलोकंप्रवेशयस्व कोब्रह्मा सांतानिकालोकविशेषाः॥६२॥ तेषांलोकानामुत्तमत्वमाह मदीयोपरिदीप्यमानान्ब्रह्मलोकादूर्ध्वंदीप्यमानान् अपिचयेपिमनुष्यालयकालएवमरणकालएव नतुततःप्रागपिकदाचित् तन्नामप्यज्ञानतोवाअज्ञानतएव वाशब्दएवार्थः तेपवित्रनामरामेत्येतद्गृणंतिवदंतितेपितानेवलोकान्योगैःप्राप्यान्भजंतु अनेनाजन्माभ्यस्तयोगोंतकालेत्वन्नामस्मर्तापिसमइतिसूचितं ॥६३॥६४॥

योयदंशजःसतद्रूपमेवप्रापेत्यर्थः तदाह प्रभाकरमिति आदित्यजवीर्यवत्त्वात् आदित्यदेहजवीर्योत्पन्नत्वात् ॥६५॥ सांतनिकाख्येत्यत्रह्रस्व आर्षः ॥ ६६ ॥ रामदृष्टाःभगवद्दृष्ट्याक्षीणसर्वपापाःविमुक्तसंगाभूत्वेतिशेषः ॥६७॥ अंजःशीघ्रं ॥६८॥ अथरामायणपाठफलमाह यइति तथापापंकुर्वन्नेषरामायणश्लोकमपिपठन्विमुक्तसर्वपापःरामस्यसालोक्यंप्रयाति राघवचोदितेनअंतर्यामिविधयारघुनाथप्रेरितेन ॥ ६९ ॥

प्रपेदिरेप्राक्तनमेवरूपंयदंशजाऋक्षहरीश्वरास्ते ॥प्रभाकरंप्रापहरिप्रवीरःसुग्रीवआदित्यजवीर्यवत्त्वात् ॥६५॥ ततोविमग्नाःसरयूजलेषुनराःपरित्यज्यमनुष्यदेहं ॥ आरुह्यदिव्याभरणाविमानंप्रापुश्चतेसांतनिकाख्यलोकान्॥६६॥ तिर्यक्प्रजाताअपिरामदृष्टाजलंप्रविष्टादिवमेवयाताः ॥ दिदृक्षवोजानपदाश्चलोकारामंसमालोक्य विमुक्तसंगाः ॥६७॥ स्मृत्वाहरिंलोकगुरुंपरेशंस्पृष्ट्वाजलंस्वर्गमवापुरंजः॥ एतावदेवोत्तरमाहशंभुःश्रीरामचंद्रस्यकथावशेषं ॥६८॥ यःपादमप्यत्रपठेत्सपापाद्विमुच्यतेजन्मसहस्रजातात् ॥ दिनेदिनेपापचयंप्रकुर्वन्पठेन्नरःश्लोकमपीहभक्त्या ॥ ६९ ॥ विमुक्तसर्वाघचयःप्रयातिरामेतिसालोक्यमनन्यलभ्यं॥ आख्यानमेतद्रघुनायकस्यकृतंपुराराघवचोदितेन ॥ ७० ॥ महेश्वरेणात्मभविष्यदर्थंश्रुत्वातुरामःपरितोषमेति ॥ रामायणंकाव्यमनंतपुण्यंश्रीशंकरेणाभिहितंभवान्यै ॥ ७१ ॥ भक्त्यापठेद्यःशृणुयात्सपापैर्विमुच्यतेजन्मशतोद्भवैश्च॥ अध्यात्मरामंपठतश्चनित्यंश्रोतुश्चभक्त्यालिखितुश्चरामः ॥७२॥

॥७०॥ आप्नोव्याप्तःसंबद्धोभविष्यदर्थोयत्रतदाख्यानंश्रुत्वारामःपरितोषमेति भगवंतंसर्वगतंरामंश्रावयामीतिबुध्यायोवाचयतितद्वाचितंतत्सर्वगत्वात्श्रुत्वावाचकस्योपरितोषमेति तत्परितोषेचतस्यसर्वार्थसिद्धिरितिभावः अनंतपुण्यंवाचकश्रोत्रोरनंतपुण्यदमित्यर्थः॥७१॥ अध्यात्मरामंतत्पदघटितमध्यात्मरामायणाख्यंपुराणमित्यर्थः श्रोतुःलिखितुश्चातिप्रसन्नःसन्सदासमीपेस्थितोभूत्वाश्रियमातनोतीत्यन्वयः॥७२॥

अतिप्रसन्नश्चसदासमीपेसीतासमेतःश्रियमातनोति ॥ ७३ ॥ रामायणंजनमनोहरमादिकाव्यंब्रह्मादिभिःसुरवरैरपिसंस्तुतंच ॥ श्रद्धान्वितःपठतियःशृणुयात्तुनित्यंविष्णोःप्रयातिसदनंसविशुद्धदेहः ॥ ७४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अध्यात्मोत्तरकांडेसर्गाग्रहसंख्ययापरिक्षिप्ताः ॥ क्रतुशतसंख्याःश्लोकाःपुराणसंख्याश्चपुरहरेणोक्ताः ॥ १ ॥ पार्वत्यैपरमेश्वरेणगदितेत्वध्यात्मरामायणेकांडैःसप्तभिरन्वितेतिशुभदेसर्गाश्चतुःषष्टिकाः ॥ श्लोकानांतुशतद्वयेनसहितान्युक्तानिचत्वारिवैसाहस्राणिसमाप्तितःश्रुतिशतेषूक्तानितत्त्वार्थतः ॥ २ ॥ ॥ समाप्तमिदंकांडं ॥

रामायणेसेतौउत्तरकांडेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

इदमध्यात्मरामायणंसटीकंमुंबय्याख्यराजधान्यांगणपतकृष्णाजीत्यभिधानांमुद्रायंत्रालयेमुद्रितं ॥ शकाब्दाः १७८६

